हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

९४

न्यायविभागे(१३)त्रयोदशं पुष्पम् ।

श्रीजगदीशतर्कालङ्कारकृता

# अवच्छेदकत्वनिरुक्तिः ।

काशीस्थराजकीयपाठशालीयन्यायशास्त्रप्रधानाध्यापक न्यायाचार्य
पं० श्रीशिवदत्तमिश्रगौडेन विरचितया
गंगाव्याख्यया संवलितम् ।

काशीस्थ नित्यानन्द वेदविद्यालयप्रधानाध्यापकेन पं० ढुण्ढिराजशास्त्रिणा
सङ्कलितया विषमस्थलटिप्पण्या समेतं, तेनैव संशोधितञ्च

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः
चौखम्भा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस सिटी ।

१९८९

# भूमिका ।



जयन्ति ते तातपादा गुरुपादास्तथैव च ।
यैश्च पञ्चाग्निसम्पन्नैर्द्वितीयः प्रथमः कृतः ॥ १ ॥
जयन्ति ते भ्रातृपादाः श्रीविद्याधरसंज्ञकाः ।
यैस्तु पञ्चाग्निसम्पन्नैः पञ्चमः प्रथमः कृतः ॥ २ ॥

अथेदं प्रकाश्यते मुद्रापयित्वा जगदीशतर्कालङ्कारकृतमवच्छेदकत्वनिरुक्तिप्रकरणम् । प्रकरणञ्चेदं सिद्धान्तलक्षणप्रकरणस्यावशिष्टो भागः । तत्र हि हेतुव्यापकसाध्यसामानाधिकरण्यरूपा गङ्गेशोक्ता व्याप्तिः रघुनाथशिरोमणिना दीधित्यां व्याख्याता । सैव च जागदीश्यां जगदीशतर्कालङ्कारेण परिष्कृता । तत्र व्यापकत्वं द्विविधम्—अत्यन्ताभावघटितं भेदघटितं च । तत्राद्यं (१)स्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्वम् , स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वरूपमपरम् । तत्राद्यमेवपरिष्कृतम् , तथा हि—हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्युक्तम् । तत्र प्रतियोगितानवच्छेदकमित्यत्र प्रतियोगितायाः न अवच्छेदकमिति त्रिपदत पुरुषः, समासान्तर्गतनञामुत्तरपदार्थमात्रान्वयित्वेन प्रतियोगितावच्छेदकभिन्नमित्यर्थः । अत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेषः, अनतिरिक्तवृत्तित्वविशेषो वेति जिज्ञासायां रघुनाथशिरोमणिनैव स्वातन्त्र्येण प्रकरणस्याऽस्य प्रारम्भो विहितो व्याख्यातश्च जगदीशेन ।

तत्रेदं तत्त्वम् । अवच्छेदकता द्विविधा—स्वरूपसम्बन्धरूपा अनतिरिक्तवृत्तित्वरूपा च । तत्राद्या क्वचित्प्रतियोग्यंशे प्रकारीभूतधर्मे, यथा घटाभावीयप्रतियोगितावच्छेदकता घटत्वे, क्वचिच्चाऽप्रकारीभूतधर्मेऽपि, यथा कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकता घटत्वे, सम्भवति लघौ धर्मे गुरौ तदभावादिति (२)नियमानुरोधात् । सर्वथापि प्रायः प्रतियोगितासामानाधिकरण्यं न व्यभिचरति ।

स्वरूपसम्बन्धरूपावच्छेदकत्वस्वीकर्तृभिः ज्ञानभेदेन विषयताभेदमवलम्ब्य वह्न्यभाववान् ह्रदः इति निश्चयीयप्रतिबन्धकतावच्छेदकता वह्न्यभावाद्येकदेशविषयतायामपि स्वीक्रियते । वह्न्यभाववान् ह्रद इति ज्ञानीयवह्न्यभावविषयतायाः निरूपकतासम्बन्धेन ज्ञानान्तरेऽसत्त्वेन वह्न्यभाव इत्यादिनिश्चयस्य प्रतिबन्धकत्वापत्तिविरहादिति ध्येयम् ।

---

(१) स्वं—व्याप्यं, यथा धूमाधिकरणपर्वतवृत्त्यत्यन्ताभावाप्रतियोगित्वं वह्नौ ।

(२) नियमो व्याप्तिः, सा च यो यदभावप्रतियोगितावच्छेदकत्वनिष्ठ—स्वनिष्ठापादकताकापत्तीयविशेष्यत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदविशिष्टाभावकूटवान् स तदभावीयप्रतियोगितानिरूपितस्वरूपावच्छेदकतावानित्याकारिका बोध्या ।

अनतिरिक्तवृत्तित्वं च प्रतियोगिताऽनतिरिक्तवृत्तित्वम्, ((१)प्रतियोगित्वाभाववद्वृत्तित्वमिति यावत्) अत्र प्रतियोगित्वाभावः, प्रतियोगितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकः, प्रतियोगितात्वावच्छिन्नप्रतियोगिताको वेत्यन्यदेतत्। अन्यूनानतिरिक्तवृत्तित्वरूपमपि तत्। अन्यूनत्वं व्यापकत्वम्, अनतिरिक्तवृत्तित्वञ्च व्याप्यत्वम्। तथाच प्रतियोगिताव्यापकत्वे सति प्रतियोगिताव्याप्यत्वम्। एवं प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमपि तत्, प्रतियोगितावच्छेदकाभाववद्वृत्तित्वमित्यर्थः। प्रतियोगितावच्छेदकावच्छिन्नाभाववन्निरूपितवृत्तितानवच्छेदकत्वं पारिभाषिकावच्छेदकत्वम्। (२)स्वव्यापकतत्कत्वमप्यर्थः। प्रतियोगितावच्छेदकं यद्धर्मव्यापकमिति फलितम्। प्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमिति यावत्। परन्तु कम्बुग्रीवादिमान्नास्तीति प्रतीतिबलात् कम्बुग्रीवादिमत्त्वरूपगुरुधर्मस्य प्रतियोगितावच्छेदकतया "सम्भवति लघौ धर्मे" इत्यादेरप्रयोजकतया स्वरूपसम्बन्धरूपावच्छेदकतापक्ष एव श्रेयानित्यन्यत्र विस्तरः।

इदमुपलक्षणम्। क्वचिच्चावच्छेदकत्वं स्वाश्रयसम्बन्धित्वात्मकम्। यथा इह पर्वते नितम्बे हुताशन इति प्रतीतौ (नितम्बावच्छिन्नपर्वतनिरूपितवृत्तितावान्वह्निरित्यत्र) नितम्बस्य वह्निनिष्ठवृत्तितावच्छेदकम्। स्वं–अवच्छेद्यीभूता वह्निनिष्ठा वृत्तिता।

इदानीं तन्तौ न घटः, गृहे नेदानीं गौरित्यादि प्रत्ययबलात् देशकालयोरप्यवच्छेदकत्वम्। तच्च स्वरूपसम्बन्धविशेषः। अत एव भावाभावयोरेकत्र समावेशार्थमेवावच्छेदकत्वस्वीकारः। देशे कालस्येव कालेऽपि देशस्यावच्छेदकत्वमित्यभियुक्ताः। परन्तु तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वमिति व्युत्पत्तिमनुसृत्यैवेदम्। तेन प्रलयस्य न गवादेरवच्छेदकत्वम्। एवं क्वचिद्विशेषणेऽप्यवच्छेदकत्वं व्यावर्त्तकत्वरूपं क्वचिद्विषयतारूपं चेति, यथा साध्यतावच्छेदकता, सा च गुरुधर्मेपीति प्रकरणेऽस्मिन्नभावप्रतियोगितावच्छेदकत्वस्यैव विचार इति।

नव्यन्यायशास्त्रे व्युत्पत्याधायकत्वात् अत्युत्तमोयं ग्रन्थः इत्यत्राविवाद एव। यतश्छात्राणां सौकर्यायेमं गुरुवर म० म० श्रीवामाचरणभट्टाचार्यचरणानुग्रहबलेनैव व्याख्यातवान्, अतस्तेषामेव श्रीविश्वनाथसदृशानां चरणकमलेभ्य इमां कृतिं समर्पयामि।

परन्तु दुरूहस्यास्यग्रन्थस्य मुद्रणे मुद्रणप्रमादादिजाताः बह्वयः त्रुटयस्थिताः ताभिरनुग्राह्य इति।

**( अस्य सर्वेऽधिकाराः प्रकाशकाऽऽयत्तीकृताः )**



| | |
|---|---|
| जन्माष्टमी<br>गणेशबाग<br>सं० १९८९ | अनुविधेयः<br>**श्रीशिवदत्तमिश्रः** |

---

(१) व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वे तु प्रतियोगितातिरिक्तवृत्तित्वे सति प्रतियोगितासमानाधिकरणं यत्तदन्यत्वमपि तत्।

(२) स्वस्य व्यापकं तद् यस्येति व्युत्पत्त्या स्वं पारिभाषिकावच्छेदकम्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं गुरावपीति ध्येयम्।

# भूमिका ।



जयन्ति ते तातपादा गुरुपादास्तथैव च ।
यैश्च पञ्चाग्निसम्पन्नैर्द्वितीयः प्रथमः कृतः ॥ १ ॥
जयन्ति ते भ्रातृपादाः श्रीविद्याधरसंज्ञकाः ।
यैस्तु पञ्चाग्निसम्पन्नैः पञ्चमः प्रथमः कृतः ॥ २ ॥

अथेदं प्रकाश्यते मुद्रापयित्वा जगदीशतर्कालङ्कारकृतमवच्छेदकत्वनिरुक्तिप्रकरणम् । प्रकरणञ्चेदं सिद्धान्तलक्षणप्रकरणस्यावशिष्टो भागः । तत्र हि हेतुव्यापकसाध्यसामानाधिकरण्यरूपा गङ्गेशोक्ता व्याप्तिः रघुनाथशिरोमणिना दीधित्यां व्याख्याता । सैव च जागदीश्यां जगदीशतर्कालङ्कारेण परिष्कृता । तत्र व्यापकत्वं द्विविधम्—अत्यन्ताभावघटितं भेदघटितं च । तत्राद्यं (१)स्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्वम् , स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वरूपमपरम् । तत्राद्यमेवपरिष्कृतम् , तथा हि—हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्युक्तम् । तत्र प्रतियोगितानवच्छेदकमित्यत्र प्रतियोगितायाः न अवच्छेदकमिति त्रिपदत पुरुषः, समासान्तर्गतनञामुत्तरपदार्थमात्रान्वयित्वेन प्रतियोगितावच्छेदकभिन्नमित्यर्थः । अत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेषः, अनतिरिक्तवृत्तित्वविशेषो वेति जिज्ञासायां रघुनाथशिरोमणिनैव स्वातन्त्र्येण प्रकरणस्याऽस्य प्रारम्भो विहितो व्याख्यातश्च जगदीशेन ।

तत्रेदं तत्त्वम् । अवच्छेदकता द्विविधा—स्वरूपसम्बन्धरूपा अनतिरिक्तवृत्तित्वरूपा च । तत्राद्या क्वचित्प्रतियोग्यंशे प्रकारीभूतधर्मे, यथा घटाभावीयप्रतियोगितावच्छेदकता घटत्वे, क्वचिच्चाऽप्रकारीभूतधर्मेऽपि, यथा कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकता घटत्वे, सम्भवति लघौ धर्मे गुरौ तदभावादिति (२)नियमानुरोधात् । सर्वथापि प्रायः प्रतियोगितासामानाधिकरण्यं न व्यभिचरति ।

स्वरूपसम्बन्धरूपावच्छेदकत्वस्वीकर्तृभिः ज्ञानभेदेन विषयताभेदमवलम्ब्य वह्न्यभाववान् ह्रदः इति निश्चयीयप्रतिबन्धकतावच्छेदकता वह्न्यभावाद्येकदेशविषयतायामपि स्वीक्रियते । वह्न्यभाववान् ह्रद इति ज्ञानीयवह्न्यभावविषयतायाः निरूपकतासम्बन्धेन ज्ञानान्तरेऽसत्त्वेन वह्न्यभाव इत्यादिनिश्चयस्य प्रतिबन्धकत्वापत्तिविरहादिति ध्येयम् ।

---

(१) स्वं—व्याप्यं, यथा धूमाधिकरणपर्वतवृत्त्यत्यन्ताभावाप्रतियोगित्वं वह्नौ ।

(२) नियमो व्याप्तिः, स च यो यदभावप्रतियोगितावच्छेदकत्वनिष्ठ—स्वनिष्ठापादकताकापत्तीयविशेष्यत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदविशिष्टाभावकूटवान् स तदभावीयप्रतियोगितानिरूपितस्वरूपावच्छेदकताया नियामकः इति बोध्या ।

अनतिरिक्तवृत्तित्वं च प्रतियोगिताऽनतिरिक्तवृत्तित्वम्, ((१)प्रतियोगित्वाभाववद्वृत्तित्वमिति यावत्) अत्र प्रतियोगित्वाभावः, प्रतियोगितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकः, प्रतियोगितात्वावच्छिन्नप्रतियोगिताको वेत्यन्यदेतत्। अन्यूनानतिरिक्तवृत्तित्वरूपमपि तत्। अन्यूनत्वं व्यापकत्वम्, अनतिरिक्तवृत्तित्वञ्च व्याप्यत्वम्। तथाच प्रतियोगिताव्यापकत्वे सति प्रतियोगिताव्याप्यत्वम्। एवं प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमपि तत्, प्रतियोगितावच्छेदकाभाववद्वृत्तित्वमित्यर्थः। प्रतियोगितावच्छेदकावच्छिन्नाभाववन्निरूपितवृत्तितानवच्छेदकत्वं पारिभाषिकावच्छेदकत्वम्। (२)स्वव्यापकतत्कत्वमप्यर्थः। प्रतियोगितावच्छेदकं यद्धर्मव्यापकमिति फलितम्। प्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमिति यावत्। परन्तु कम्बुग्रीवादिमान्नास्तीति प्रतीतिबलात् कम्बुग्रीवादिमत्त्वरूपगुरुधर्मस्य प्रतियोगितावच्छेदकतया "सम्भवति लघौ धर्मे" इत्यादेरप्रयोजकतया स्वरूपसम्बन्धरूपावच्छेदकतापक्ष एव श्रेयानित्यन्यत्र विस्तरः।

इदमुपलक्षणम्। क्वचिच्चावच्छेदकत्वं स्वाश्रयसम्बन्धित्वात्मकम्। यथा इह पर्वते नितम्बे हुताशन इति प्रतीतौ (नितम्बावच्छिन्नपर्वतनिरूपितवृत्तितावान्वह्निरित्यत्र) नितम्बस्य वह्निनिष्ठवृत्तितावच्छेदकम्। स्वं–अवच्छेद्योभूता वह्निनिष्ठा वृत्तिता।

इदानीं तन्तौ न घटः, गृहे नेदानीं गौरित्यादि प्रत्ययबलात् देशकालयोरप्यवच्छेदकत्वम्। तच्च स्वरूपसम्बन्धविशेषः। अत एव भावाभावयोरेकत्र समावेशार्थमेवावच्छेदकत्वस्वीकारः। देशे कालस्येव कालेऽपि देशस्यावच्छेदकत्वमित्यभियुक्ताः। परन्तु तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वमिति व्युत्पत्तिमनुसृत्यैवेदम्। तेन प्रलयस्य न गवादेरवच्छेदकत्वम्। एवं क्वचिद्विशेषणेऽप्यवच्छेदकत्वं व्यावर्तकत्वरूपं क्वचिद्विषयतारूपं चेति, यथा साध्यतावच्छेदकता, सा च गुरुधर्मेपीति प्रकरणेऽस्मिन्नभावप्रतियोगितावच्छेदकत्वस्यैव विचार इति।

नव्यन्यायशास्त्रे व्युत्पत्त्याधायकत्वात् अत्युत्तमोऽयं ग्रन्थः इत्यत्राविवाद एव। यतश्छात्राणां सौकर्यायेमं गुरुवर म० म० श्रीवामाचरणभट्टाचार्यचरणानुग्रहबलेनैव व्याख्यातवान्, अतस्तेषामेव श्रीविश्वनाथसदृशानां चरणकमलेभ्य इमां कृतिं समर्पयामि।

परन्तु दुरूहस्यास्यग्रन्थस्य मुद्रणे मुद्रणप्रमादादिजाताः बह्वयः त्रुटयस्थिताः ताभिरनुग्राह्य इति।



| | |
|---|---|
| जन्माष्टमी<br>गणेशबाग<br>सं० १९८९ | अनुविधेयः<br>**श्रीशिवदत्तमिश्रः** |

---

(१) व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वे तु प्रतियोगितातिरिक्तवृत्तित्वे सति प्रतियोगितासमानाधिकरणं यत्तदन्यत्वमपि तत्।

(२) स्वस्य व्यापकं तद् यस्येति व्युत्पत्त्या स्वं पारिभाषिकावच्छेदकम्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं गुरावपीति ध्येयम्।

# अवच्छेदकत्वनिरुक्तिः ।

## अथ रघुनाथशिरोमणिकृताऽवच्छेदकत्वनिरुक्तिदीधितिः ।

नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः, सम्भवति च लघौ धर्मे गुरौ तदभावात्, प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वघ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिणि अतिप्रसङ्गात् ।

## श्रीजगदीशतर्कालङ्कारकृतावच्छेदकत्वनिरुक्तिप्रकरणव्याख्यानम् ।

(१) नन्विति । इह अनवच्छेदकत्वमित्यत्र, अवच्छेदकत्वम् अवच्छेदकत्वपदार्थः ।

### अथ न्यायाचार्यशिवदत्तमिश्रकृता सुबोधिनीव्याख्या ।

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्राशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥ १ ॥

साध्यतावच्छेदकसंबन्धसामान्ये यद्धर्मावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति लक्षणे प्रमेयधूमत्वादिना साध्यतायां न वक्ष्यमाणाऽतिप्रसङ्गः, किन्तु मूलकृदभिमते प्रतियोगितानवच्छेदकत्वघटितलक्षणे एवेति सूचनायाऽऽह दीधितौ इहेति । वस्तुतोऽवच्छेदकत्वावच्छेदेन स्वरूपसंबन्धविशेषत्वाभावसाधने बाधः, सामानाधिकरण्येन तथात्वेऽशंतः सिद्धसाधनम्, इति तद्विशेषमेतल्लक्षणघटकाऽनवच्छेदकत्वपदविवरणाऽ"वच्छेदकत्ववद्भिन्न"पदघटकत्वं प्रदर्शयितुं दीधितौ इहेत्युक्तम्। विवरणत्वं च स्वप्रतिपाद्यार्थप्रतिपादकत्वमिति । हेतुतावच्छेदकादिघटकाऽवच्छेदकत्वं स्वरूपसम्बन्धरूपमेव तस्य तत्त्वे वक्ष्यमाणदोषाभावादित्याशयेनाह **अनवच्छेदकत्वमित्यत्रेति** । ननु अवच्छेदकत्वं पक्षीकृत्य स्वरूपसम्बन्धविशेषत्वाभावसाधनतात्पर्ये स्वरूपसम्बन्धरूपाऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकतासाधारणाऽवच्छेदकतात्वस्यैकस्याभावेन तत्तदवच्छेदकतात्वेन पक्षत्वस्याऽऽवश्यकतया बाधस्य सिद्धसाधनस्य वा प्रसंग इत्यवच्छेदकपदार्थं पक्षीकृत्य स्वरूपसम्बन्धविशेषत्वाभावसाधने तात्पर्यमुपदर्शयितुं अवच्छेदकत्वपदार्थपरतया व्याचष्टे **अवच्छेदकत्वपदार्थ इति** । एवं च एतल्लक्षणघटकाऽनवच्छेदकपदविवरणघटकीभूतं यदवच्छेदकत्वं तत्प्रतिपाद्यं "अवच्छेदकत्वपदार्थो वा" न स्वरूपसम्बन्धविशेषः अतिप्रसंगादित्यनुमानम् । अत्र साध्यघटकस्वरूपसम्बन्धविशेषत्वं क्लृप्तपदार्थः सन् किंचिद्धर्मोपरागेण संसर्गतावत्त्वं यथा प्रतियोगित्वादौ प्रतियोगित्वस्य प्रतियो॰ स्वरूपतया क्लृप्तपदार्थत्वात्प्रतियोगितात्वेन संसर्ग-

(१) प्रतियोगितानवच्छेदकमित्यत्रानवच्छेदकत्वं किमिति निरूपयति नन्वित्यादिना ।

त्वाच्च तथाऽत्रापि बोध्यम् । केचित्तु स्वरूपसम्बन्धस्याऽतिरिक्तत्वमतेनैवेदम्, अन्यथा स्वरूपस्यापि प्रामाणिकतया गुरौ तदभावादित्यस्याऽलमकतापत्तेः । न च तस्यातिरिक्तत्वेऽपि गुरुलघ्वोरेकतरस्मिन् तत्कल्पनेऽविनिगमनाविरहाद् गुरौ तत्कल्पने बहुषु तत्सम्बन्धकल्पनादिगौरवस्य तदभावकल्पनेऽपि बहुषु तदभावसम्बन्धकल्पनादिगौरवस्य च समानत्वेनाऽविनिगमकत्वादलमकतापत्तिरस्त्येवेति वाच्यम् । अतिरिक्तस्य तस्य गुरुधर्माऽवृत्तित्वस्वभावेनाऽदोषादित्याहुः । व्यभिचारिवृत्तित्वरूपाऽतिप्रसङ्गस्य हेतुता च स्वाश्रयैतल्लक्षणघटकीभूततदभावप्रतियोगित्वसम्बन्धेन सम्पादकतासम्बन्धेन वेति न स्वरूपासिद्धिः । ननु तथापि एतल्लक्षणघटकाऽवच्छेदकत्वपदार्थत्वेन पक्षत्वे व्यभिचारिवृत्तित्वरूपाऽतिप्रसङ्गस्य स्वरूपसम्बन्धविशेषत्वाभावसाधकत्वन्न सम्भवति "साध्यहेतोरसामानाधिकरण्याद्" व्यभिचारात् । न च स्वरूपसम्बन्धरूपावच्छेदकतायां एतल्लक्षणघटकाभावप्रतियोगिभिन्नत्वं एतल्लक्षणवाक्यघटकाऽवच्छेदकत्वपदतात्पर्यविषयत्वरूपतत्पदार्थत्वं वा व्यभिचारिवृत्तित्वेन हेतुना साधनीयम्, हेतुता च सम्पादकतासम्बन्धेनेति वाच्यम् । तत्रापि स्वरूपसम्बन्धरूपावच्छेदकत्वाभावादीनां हेतुसाध्यघटकत्वेऽवच्छेदकावच्छेदेन यथोक्तसाध्यत्वे अंशतो बाधः । सामानाधिकरण्येन साध्यत्वे हेतुतानिरूपितावच्छेदकत्वादीनां एतल्लक्षणघटकाभावप्रतियोगिभिन्नत्वासिद्ध्या सिद्धसाधनम् । प्रतियोगितानिरूपिताऽवच्छेदकतात्वेनापि पक्षत्वेऽवच्छेदकावच्छेदेन सामानाधिकरण्येनापि च पक्षत्वे प्रतियोगितावच्छेदकत्वाभावकालीनहेतुसाध्यघटितलक्षणघटकत्वेन प्रतियोगितावच्छेदकत्वाभावस्य बाधापत्तिः । वह्न्यभावप्रतियोगितावच्छेदकत्वे वह्निधूमादिरूपप्रकृतहेतुसाध्यघटितलक्षणघटकाभावप्रतियोगिभिन्नत्वासिद्ध्या सिद्धसाधनम् । प्रकृतहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकप्रकृतसाध्यतावच्छेदकघटितस्य व्यभिचारिहेतुकस्थलेऽनतिरिक्तवृत्तित्वघटितस्याऽप्रसिद्धिः(१) । स्वरूपसम्बन्धविशेषघटितस्य व्यापकीभूताभावप्रतियोगिभूतैव स्वरूपसम्बन्धरूपावच्छेदकता, अनुमितिकरणज्ञानीयप्रकृतहेतुविषयतेत्यादिप्रतियोगित्वविषयतानिरूपिता या प्रकृतसाध्यतावच्छेदकविषयतानिरूपिताऽभावविषयतानिरूपिता विषयता तद्भिन्नत्वस्य साध्यत्वेऽपि वह्निसमानाधिकरणाभावप्रतियोगितानिरूपिताऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वाभाववत्कालीनधूमस्य साध्यतायां वह्नेर्हेतुत्वेऽतिप्रसङ्गसम्पादकताऽनतिरिक्तवृत्तित्वे तत्सत्वेऽपि स्वरूपसम्बन्धरूपावच्छेदकत्वस्य लक्षणघटकत्वे तस्य साध्यघटकत्वेऽतिप्रसङ्गाभावात्तत्र साध्याभावेन व्यभिचार इति चेन्न। स्वरूपसम्बन्धरूपावच्छेदकतात्वेन यथोक्तविषयताभिन्नत्वं साध्यं भ्रमभिन्नज्ञानीयस्वविषयतानिरूपिताधिकरणविषयतानिरूपितेत्यादिसाध्यतावच्छेदकविषयतानिरूपिताभावविषयतानिरूपिता सती प्रकृतहेतुविषयतेत्यादिप्रतियोगित्वविषयतानिरूपितविषयतावत्साजात्येन व्यभिचारिनिष्ठहेतुवृत्तित्वं हेतुरिति विवक्षायां दोषाभावात् । साजात्यं च स्वरूपसम्बन्धरूपाऽवच्छेदकत्वपदार्थत्वेन बोध्यम् । साजात्यनिवेशाच्च प्रकारतानिरूपितावच्छेदकत्वादौ भागासिद्धिः।

(१) उभयसाधारणस्याऽखण्डोपाधिरूपावच्छेदकतात्वस्य स्वीकर्त्तृनयेऽपि तादृशावच्छेदकतात्वावच्छेदेन स्वरूपसंबन्धविशेषत्वाभावसाधने सामानाधिकरण्येन बाधः । सामानाधिकरण्येन साधने सिद्धसाधनमित्यपि बोध्यम् ।

साध्ये प्रकृतसाध्यतावच्छेदकविषयतानिरूपितत्वप्रवेशात् धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमकालीनवह्निसाध्यकस्थले स्वरूपसम्बन्धरूपावच्छेदकत्वस्योक्तविषयतावत्त्वेपि न बाध इति दिक् ।

श्रीगुरुचरणास्तु प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयप्रतियोगितानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतायां एतल्लक्षणघटकत्वाभावस्यैव साध्यत्वात्, अतिप्रसङ्गस्य हेतुत्वं च स्वाश्रयवृत्तित्वविशेषणतापन्नाधिकरणविशेषणतापन्नसाध्यविशेषणतापन्नसाध्यतावच्छेदकविशेषणतापन्नाभावप्रतियोगित्वसम्बन्धेनेति प्राहुः ।

केचित्तु अवच्छेदकत्वपदार्थत्वावच्छेदेन स्वरूपसम्बन्धविशेषत्वाभावसाधने सामानाधिकरण्येन बाधापत्तिः, अवच्छेदकत्वपदार्थत्वस्य स्वरूपसम्बन्धरूपावच्छेदकतायामपि सत्त्वात्तत्र साध्यस्याऽसत्त्वात्। सामानाधिकरण्येन साधने सिद्धसाधनम्, अवच्छेदकत्वपदार्थत्वस्याऽनतिरिक्तवृत्तिरूपाऽवच्छेदकतायामपि सत्त्वात्तत्र स्वरूपसम्बन्धविशेषत्वाभावरूपसाध्यस्य निश्चितत्वात् । स्वरूपसम्बन्धविशेषत्वावच्छेदेन एतल्लक्षणघटकानवच्छेदकपदविवरणघटकावच्छेदकत्वपदार्थत्वाभावस्य साध्यत्वे बाधः स्यात्, तथाहि साध्यतावच्छेदकत्वे हेतुतावच्छेदकत्वे च स्वरूपसंबन्धविशेषसत्त्वेन तत्र तादृशसाध्यभावसत्त्वादिति चेन्न । स्वरूपसम्बन्धविशेषत्वावच्छेदेन सामानाधिकरण्यात्मकैतल्लक्षणघटकानवच्छेदकपदविवरणघटकाऽवच्छेदकत्वपदतात्पर्यीयाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिष्ठविषयत्वाभावस्य साध्यत्वं, संपादकतासम्बन्धेन व्यभिचारिवृत्तित्वरूपाऽतिप्रसंगस्य हेतुत्वम् । पदे विवरणत्वं च स्वप्रतिपाद्यार्थप्रतिपादकत्वम्, तथाचाऽनवच्छेदकपदप्रतिपाद्यो योऽवच्छेदकत्वाभावरूपार्थस्तत्प्रतिपादकं यदवच्छेदकत्वाभावपदं तद्घटकत्वस्याऽवच्छेदकत्वपदे सत्त्वात् । तात्पर्यञ्चात्र एतल्लक्षणघटकाऽनवच्छेदकपदाविवरणघटकावच्छेदकत्वपदमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविषयकबोधं जनयत्वित्याकारकं तदीयविषयत्वस्य पक्षे सन्देहसत्त्वेन बाधसिद्धसाधनाभावात् । ननु धूमत्वावच्छिन्नप्रतियोगिताऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्ववद्धूमत्ववद्धूमवान् वह्नेरित्यादौ लाघवाद् धूमत्वे एव तादृशधूमाभावप्रतियोगितावच्छेदकत्वं कल्प्यते, तथाच संपादकतासम्बन्धेन व्यभिचारिवृत्तित्वरूपहेतोः धूमत्वावच्छिन्नप्रतियोगितानतिरिक्तवृत्तित्वरूपावच्छेदकतायां सत्त्वेन तत्र तादृशतात्पर्यीयाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिष्ठविषयत्वाभावाभावरूपसाध्याभावसत्त्वाद्व्यभिचारापत्तेः । न च हेतुविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताऽभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिता याऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिष्ठा तादृशतात्पर्यीयविषयता तादृशविषयत्वाभावस्यैव साध्यत्वम्, तथाचैतादृशानिरूप्यनिरूपकभावापन्नविषयत्वाभावस्यैव तादृशसाध्यतावच्छेदकतावच्छेदके सत्त्वान्न व्यभिचारापत्तिरिति वाच्यम् । हेतुसमानाधिकरणाभावप्रतियोगिताऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्ववद्धूमत्ववद्धूमवान् वह्नेरित्यत्र च लाघवेन धूमत्वस्यैव तादृशधूमाभावप्रतियोगितावच्छेदकत्वात्, तथाच साध्यतावच्छेदकतावच्छेदके तादृशप्रतियोगितानतिरिक्तवृत्तित्वरूपावच्छेदकत्वे हेतुसत्त्वेन तत्र तादृशनिरूप्यनिरूपकभावापन्नतात्पर्यीयविषयत्वाभावविरहात्साध्याभावसत्त्वेन

व्यभिचारापत्तिर्दुर्वारैवेति चेन्न । स्वाश्रयीभूतसामानाधिकरण्यात्मकलक्षणघटकीभूतवृत्तित्वविषयतानिरूपिताधिकरणविषयतानिरूपितसाध्यविषयतानिरूपितसाध्यतावच्छेदकविषयतानिरूपिताभावविषयतानिरूपितासती अथ च हेतुविषयतानिरूपिताधिकरणाविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिता या स्वरूपसम्बन्धरूपावच्छेदकत्वनिष्ठविषयता तादृशविषयतासम्बन्धेनाऽलक्ष्यवृत्तित्वरूपाऽतिप्रसङ्गस्य हेतुत्वम्, तथाच तादृशविषयतासम्बन्धेनातथावृत्तित्वरूपहेतोस्तादृशसाध्यतावच्छेदकेविरहान्न व्यभिचार इति । अथवा हेतुसमानाधिकरणाभावप्रतियोगितानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतात्वावच्छिन्नप्रतियोगिताकसम्पादकतासम्बन्धेनैव हेतुता, तथाच तादृशसंपादकतासम्बन्धेन तादृशहेतोः स्वरूपसम्बन्धरूपावच्छेदकतायामेव वर्त्तमानत्वात्तत्र तादृशसाध्यस्यापि सत्त्वान्न व्यभिचार इति प्राहुः ।

वस्तुतस्तु स्वाश्रयीभूततल्लक्षणघटकसाध्यतावच्छेदकविशेषणीभूततादृशप्रतियोगितावच्छेदकत्वाभावविषयतानिरूपिता सती हेतुविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितस्वरूपसम्बन्धविशेषत्वेन सकलस्वरूपसम्बन्धविशेषावगाहिज्ञानीयस्वरूपसम्बन्धविशेषत्वावच्छिन्नविषयतासम्बन्धेन व्यभिचारिवृत्तित्वरूपस्याऽतिप्रसङ्गस्य हेतुत्वं, तथाच तादृशविषयतासम्बन्धेन स्वरूपसम्बन्धविशेष एव तादृशहेतोः सत्त्वेन तत्र साध्यस्यापि सत्त्वान्न व्यभिचार इति ।

एतेन पक्षतावच्छेदकस्य स्वरूपसम्बन्धविशेषत्वस्य प्रकारतायां सत्त्वेन तत्र तादृशहेतोरभावाद् भागासिद्धिरित्यपि निरस्तम् । प्रकारतायामपि स्वरूपसम्बन्धविशेषत्वेन स्वरूपसम्बन्धविशेषावगाहिज्ञानीयविषयत्वस्य सत्त्वेन तेन सम्बन्धेन हेतोरेव प्रकारतायां वर्त्तमानत्वान्न भागासिद्धिरिति ध्येयम् ।

अत्र हेतुमाह **सम्भवतीत्यादिना** । न चात्र साध्यहेत्वोर्वैयधिकरण्यमित्याशङ्कनीयम्, भावानवबोधनात् । तथाहि—अत्राऽतिप्रसङ्गे प्रमेयधूमत्वेत्यादिकमतथात्वेनेत्यन्तं हेतुः । अतथात्वेनेत्यस्य हेतुसमानाधिकरणतादृशाभावप्रतियोगितानवच्छेदकत्वेनेत्यर्थः । तत्र विशेषाभावे सामान्याभावात्मको गुरौ तदभावादिति हेतुः । तदभावादित्यस्य प्रतियोगितावच्छेदकत्वाभावादित्यर्थः । तत्र सम्भवति लघौ धर्मे इति हेतुरिति । सम्भवति लघौ धर्मे इत्यस्य लघौ धर्मेऽवच्छेदकत्वे सम्भवतीत्यर्थः । तत्राऽवच्छेदकत्वे सम्भवत्वं च लघुधर्मवृत्तिभेदप्रतियोगितानिरूपिताऽवच्छेदकतावत्त्वम् । अवच्छेदकता च स्वनिष्ठापादकताकाऽऽपत्तिनिरूपितविशेष्यत्वसम्बन्धावच्छिन्ना ग्राह्या । अस्ति चैतत् घटत्वनिष्ठकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकतायां घटत्वस्य कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वे

---

(१) केचित्तु इहेति सप्तम्या घटकत्वमर्थः । सम्भवतीति, अवच्छेदकेत्यादिः । समनियते लघौ धर्मेऽवच्छेदकत्वे संभवतीत्यर्थः । समनैयत्यं च प्रतियोगिताऽन्यूनवृत्तित्वे सति स्वनिरूपकाभावविरोधितावच्छेदकत्वरूपं अवच्छेदकतानिर्वाहकमतः सत्तात्वादेर्विशिष्टसत्ताद्यभावयोः प्रतियोगिताऽन्यूनवृत्तित्वेपि तत्प्रतियोगिताकाभावविरोधितानवच्छेदकत्वान्न तत्प्रतियोगितावच्छेदकत्वसम्भवः । विरोधित्वं न तदभावव्याप्यत्वं व्यधिकरणसम्बन्धावच्छिन्नाभावाप्रसिद्धेः, अपि तु स्वनिरूपकाभावासामानाधिकरण्यमेव स्वनिरूपकाभावविरोधित्वादिति भावः ।

"यथा सत्तात्वं यदि विशिष्टसत्ताभावप्रतियोगितावच्छेदकं स्याद् गुणनिष्ठाभावप्रतियोगितावच्छेदकं स्यादित्यापत्तिः सत्तात्वे विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वेऽस्ति" तथाऽऽपत्तिर्नास्ति, किन्तु पटत्वं यदि कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकं स्यात्तदा पटवद्वृत्त्यभावप्रतियोगितावच्छेदकमपि स्यादित्यापत्तिस्तादृशापत्तीयविशेष्यत्वस्य पटत्वे वर्त्तमानतया तादृशविशेष्यत्वसम्बन्धेन कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकतावानेति भेदस्य घटत्वे सत्त्वेन तादृशभेदप्रतियोगितावच्छेदकत्वस्य कम्बुग्रीवादिमदभावप्रतियोगितानिरूपितघटत्वनिष्ठावच्छेदकतायां तद्ग्रन्थसङ्गतिः।

ननु घटत्वेऽभावप्रतियोगितावच्छेदकत्वग्राहकमानं घटो नास्तीति शाब्दप्रतीतौ अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटत्वस्याऽभावांशे भानमेव, तादृशभानाद् घटत्वेऽभावप्रतियोगितावच्छेदकत्वसिद्धिरिति सर्ववादिसिद्धं, तथैव कम्बुग्रीवादिमान्नास्तीति प्रतीतावप्यभावांशेऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन कम्बुग्रीवादिमत्वस्यैव भानम्, न तु घटत्वस्य, तथाच तद्ग्राहकमानसत्त्वेन कम्बुग्रीवादिमत्त्वेऽभावप्रतियोगितावच्छेदकत्वस्य कथं न सिद्धिरिति चेन्न। घटत्वे कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वसिद्धिप्रयोजकव्याप्तेः सत्त्वात्, सा च स्वनिष्ठापादकताकापत्तीयविशेष्यत्वसम्बन्धावच्छिन्नप्रतियोगिको यः स्वाभावस्तद्वद्वृत्तिर्यः किंचिदवधिकगुरुत्वाभावस्तद्वत्त्वसम्बन्धेन यद्यदभावप्रतियोगितावच्छेदकतावद् भवतीति, तथाच तादृशविशेष्यत्वस्य पटत्वे सत्त्वेन तत्तत्सम्बन्धावच्छिन्नप्रतियोगिताककम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वाभावस्य कम्बुग्रीवादिमत्त्वे सत्त्वेऽपि किंचिदवधिकगुरुत्वाभावविरहात्तादृशावच्छेदकत्वाभाववद्घटत्ववृत्तिकिंचिदवधिकगुरुत्वाभावस्य घटत्वे सत्त्वेन तत्सम्बन्धेनाऽभावप्रतियोगितावच्छेदकत्वस्य घटत्वे एव सत्त्वन्न तु कम्बुग्रीवादिमत्वेऽतो घटत्वे एव प्रतियोगितावच्छेदकत्वसिद्धिर्न तु कम्बुग्रीवादिमत्त्वे इति न कोऽपि दोषः।

नन्वेवं महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वं वन्हित्वमात्रे कथं न स्वीक्रियते महानसीयत्ववन्हित्वोभयापेक्षया वन्हित्वस्य लघुत्वात्। यत्तु वन्हित्वं यदि महानसीयवन्ह्यभावप्रतियोगितावच्छेदकं स्यात्तदा पर्वतवृत्त्यभावप्रतियोगितावच्छेदकं स्यादित्यापत्तिभयेन वन्हित्वमात्रे नाऽवच्छेदकत्वसिद्धिः, तथाचाऽऽपाद्याभावेनाऽऽपादकाभावसिद्धिरिति। तदसत्। वन्हित्वे तादृशापत्तेरिष्टत्वात्, तत्र प्रमात्मकबाधनिश्चयविरहात्। नच वन्हित्वगतैकत्वं यदि महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं स्यात्तदा पर्वतवृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं स्यादित्यापत्तेरिष्टत्वं न संभवतीति वाच्यम्। एतावता वन्हित्वगतैकत्वे एव महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावरूपाऽऽपादकाभावस्याऽऽपाद्याभावेन सिद्धिर्न तु वन्हित्वमात्रे महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वाभावसिद्धिरिति चेन्न। वह्नित्वं यदि महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्त्यवच्छेदकतावत् स्यात्तदा पर्वतवृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्त्यवच्छेदकतावत्स्यात् [illegible] स्वतादात्म्यवदवच्छेदकतात्वाव-

च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन, तथाचैतादृशापत्तिसंभवेन तादृशापत्तीयविशेष्यत्वस्य वह्नित्वे सत्त्वेन तत्संबंन्धेन स्वाभावस्याऽसत्त्वात्तादृशस्वाभाववद्वृत्तिकिंचिदवधिकगुरुत्वाभावविरहेण तादृशंगुरुत्वाभाववत्त्वसंबन्धेनाऽभावप्रतियोगितावच्छेदकत्वरूपहेतुविरहेण तादृशहेतुना स्वरूपसंबन्धेन स्वरूपसंबन्धरूपाभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वमात्रे न सिद्धिरिति ।

केचित्तु महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वं यदि वह्नित्वमात्रवृत्ति स्यात्तदा पर्वतवृत्त्यभावप्रतियोगितावच्छेदकत्वं वह्नित्वमात्रवृत्ति स्यात् । अत्र मात्रपदेन तद्वृत्तित्वे सति तदितराऽवृत्तित्वं बोध्यम् । अवृत्तित्वं वृत्तित्वं च स्वनिरूपितप्रतियोगितावच्छेदकतावत्त्वसंबन्धेन । तादृशपादकतापत्तौ नेष्टापत्तिः कर्त्तुं समर्था, वह्नित्वेतरमहानसीयवह्नित्वे उक्तसंबन्धेन महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वस्याऽवृत्तित्वविरहात्, तथाच तादृशव्याप्त्या वह्नित्वमात्रे महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वस्य न सिद्धिः संभवतीति हृदयमित्याहुः ।

आपत्तिश्च व्याप्तिः । आपत्तित्वं च बाधकालीनेच्छाप्रयोज्यआपाद्यव्याप्याऽऽपादकवत्तानिश्चयप्रयोज्याऽनाहार्यत्वम्, तथाचात्र घटशून्यभूतलनिष्ठाभावप्रतियोगितावच्छेदकत्वाभाववद्द्रव्यत्वमिति बाधकालीना या द्रव्यत्वादौ घटशून्यभूतलनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावज्ञानं जायतामितीच्छा तत्प्रयोज्यघटशून्यभूतलनिष्ठाभावप्रतियोगितावच्छेदकत्वव्याप्यकंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्ववद्द्रव्यत्वमितिनिश्चयप्रयोज्यघटशून्यभूतलनिष्ठाभावप्रतियोगितावच्छेदकत्ववद्द्रव्यत्वमिति अनाहार्यम्, तथाचाऽऽपत्तिजनकस्तर्कः—यदि द्रव्यत्वं कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकं स्यात्तदा घटशून्यभूतलनिष्ठाभावप्रतियोगितावच्छेदकमपि स्यादिति । तथाचाऽऽपत्तिजनकत्वं द्रव्यत्वादौ तदभावो घटत्वादौ। आपत्तिश्च प्रमाजन्या आपाद्यव्यतिरेकप्रमाजन्या च ग्राह्या, नातो घटत्वं यदि कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकं स्यात् पटाभावप्रतियोगितावच्छेदकं स्यात्, जलवृत्त्यभावप्रतियोगितावच्छेदकं स्यादित्याद्यापत्तिमादाय घटत्वनिष्ठावच्छेदकत्वे संभवत्वाऽसंभवः ।

घ्राणग्राह्यगुणाभावप्रतियोगितावच्छेदकतावान्नेति भेदस्य ग्राह्यगन्धत्वे प्रसिद्धत्वेन गन्धत्वकालीनतया तदीयप्रतियोगितावच्छेदकत्वस्य गन्धत्ववृत्तितया घ्राणग्राह्यगुणाभावप्रतियोगितावच्छेदकत्वे संभवत्वापत्तेरतः "संभवत्वपरिष्कृतौ" लघुधर्मकालीनत्वमपहाय लघुधर्मवृत्तित्वेत्युक्तम् ।

अथवा तदनुयोगिकतथाविधसंबन्धाप्रतियोगित्वमेव सभवत्वं वाच्यं लाघवादिति ।

शिरोमण्युच्चरितवाक्यार्थबोधश्च अवच्छेदकत्वं—अवच्छेदकत्वपदार्थः । इहेत्यत्र एतत्पदार्थः लक्षणबोधवाक्यम्, एतस्मिन्निति इहव्युत्पत्तिबलात् सप्तम्यर्थो घटकत्वम्, न स्वरूपसंबन्धविशेषः इत्यत्र नञर्थोऽभावः, तदभावादित्यत्र तच्छब्देनाऽवच्छेकत्वं परामृश्यते, तस्मिन् लघौ संभवति गुरौ तदभावादिति तच्छब्दाऽऽवृत्त्या योजना । लघाविति सप्तम्या वृत्तित्वमर्थः । तच्च तत्पदार्थेऽवच्छेदकत्वेऽन्वेति । तत्रैव च संभवत्वं विशेषणीयम् । संभवत्वं च भेदप्रतियोगितावच्छेदकत्वम् । तस्मिन्निति सप्तमी प्रयोज्यार्थिका । तदिदं विशिष्टनिरूपितप्रयोज्यत्वं विशेषणीभूतसंभवत्वनिरूपितप्रयोज्यत्वे पर्यवस्यति 'सविशेषणे ही'ति न्यायात् । अथवा

संभवतीत्यत्र सप्तम्याः प्रयोज्यत्वमर्थः । तस्य च तदभावादित्यत्र तदभावप्रतिपाद्याऽवच्छेदकत्वाभावेऽन्वयः । गुरौ इत्यत्र सप्तम्यर्थो वृत्तित्वं तस्याऽप्यवच्छेदकत्वाभावेऽन्वयः । केचित्तु लघाविति सप्तम्यर्थवृत्तित्वस्य संभवत्वपदार्थैकदेशे भेदेऽन्वयः, तस्य तदभावादित्यत्र तदभावप्रतिपाद्याभावप्रतियोगितावच्छेदकत्वाभावेऽन्वयः इत्याहुः । न च समानाधिकरणपदार्थयोरेव प्रयोज्यप्रयोजकभावो न त्वसमानाधिकरणपदार्थयोः कुत्रापि दृष्ट इति कथं संभवत्वप्रयोज्यत्वं प्रतियोगितावच्छेदकत्वाभावे संभवति, संभवत्वस्य लघुधर्मनिष्ठावच्छेदकतायां सत्त्वेन प्रतियोगितावच्छेदकत्वाभावस्य गुरुधर्मे सत्त्वेन व्यधिकरणत्वादिति वाच्यम्। तत्र सामानाधिकरण्यघटकाऽधिकरणत्वं स्वाश्रयवन्निष्ठलघुतानिरूपितकिंचिदवधिकगुरुत्ववत्वसंबन्धेन बोध्यम्, तथाच कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वनिष्ठस्य भेदप्रतियोगितावच्छेदकत्वरूपसंभवत्वस्याऽश्रयं यत्कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं तद्वद्घटत्वादिनिष्ठलघुतानिरूपितगुरुत्वत्वस्य कंबुग्रीवादिमत्वे सत्त्वेन तादृशसंभवत्वस्याधिकरणे कंबुग्रीवादिमत्त्वेऽभावप्रतियोगितावच्छेदकत्वाभावस्य स्वरूपेण सत्त्वान्न प्रयोज्यप्रयोजकभावे विरोधः । अतएव परामर्शग्रन्थे परामर्शीयविषयत्वानुमितीयविषयतयोः साक्षात्संबन्धेनाऽसमानाधिकरणत्वेऽपि स्वनिरूपकज्ञानवदात्मवृत्तिविशेषज्ञानीयविषयतासंबन्धेन समानाधिकरणतया प्रयोज्यप्रयोजकभावः स्वीक्रियते; तथाहि परामर्शीयधूमनिष्ठविषयतानिरूपकज्ञानवदात्मवृत्तिअनुमितिस्वरूपज्ञानीयविषयताया वह्नौ वर्त्तमानतया तत्सम्बन्धेन परामर्शीयविषयताया वह्नौ वर्त्तमानत्वेन तत्रानुमितिविषयताया अपि स्वरूपेण वर्त्तमानत्वात् । एवं च कार्यतावच्छेदकविषयता कारणतावच्छेदकविषयताप्रयोज्येत्यपि संगच्छते । न च सप्तम्यर्थः प्रयोज्यत्वं न कुत्रापि दृष्टं कथं तस्य गुरुधर्मनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावेऽन्वय इति वाच्यम् । राहुग्रस्ते स्नायादित्यादौ सप्तम्याः प्रयोज्यत्वमर्थः, स्नाधात्वर्थः सर्वाङ्गव्यापकजलसंयोगः, तिङर्थो बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वम्, आख्यातार्थः कृतिः, तथाच राहुग्रासप्रयोज्यबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतादृशजलसंयोगानुकूलकृतिमानिति स्वमते प्रथमान्तार्थमुख्यविशेष्यकबोधः। तादृशस्नानं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनमिति बोधः प्रभाकरमते । तथाचाऽत्र सप्तम्याः प्रयोज्यत्वार्थकतया दृष्टचरत्वात् । तदभावादिति पञ्चम्यर्थः प्रयोज्यत्वम्, तस्याऽतथात्वपदप्रतिपाद्यगुरुधर्मनिष्ठहेतुमन्निष्ठाभावप्रतियोगितावच्छेदत्वाभावेऽन्वयः, सामान्यनिष्ठाभावस्य विशेषनिष्ठाभावप्रयोजकत्वनियमात् । प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वघ्राणग्राह्यगुणत्वादेरित्यत्र षष्ठ्यर्थो निष्ठत्वं, तस्याऽतथात्वपदार्थेऽन्वयः । केचित्तु तदभावादिति पञ्चम्यर्थो व्याप्यत्वं, तस्य गुरुत्वेऽन्वयः । गुरौ इत्यत्र सप्तम्यर्थः प्रयोज्यत्वम्, तस्याऽतथात्वपदप्रतिपाद्येऽन्वय इत्याहुः। अतथात्वेनेत्यत्र तृतीयार्थस्य प्रयोज्यत्वस्याऽतिप्रसङ्गपदप्रतिपाद्यव्यभिचारिवृत्तित्वेऽन्वयः । न चाऽतिप्रसङ्गपदार्थ एव व्यभिचारिवृत्तित्वं तदा व्यभिचारिणीति सप्तम्यन्तपदार्थस्याऽनन्वयप्रसङ्ग इति वाच्यम् । घृतं जुहोतीत्यत्र घृतमिति द्वितीयार्थस्य कर्मत्वस्य हुधात्वर्थेऽग्निवृत्तिसंयोगानुकूलव्यापारेऽन्वयः, तथाच घृतकर्मकाऽग्निवृत्तिसंयोगानुकूलव्यापारानुकूल देवदत्त इत्यन्वयबोधः । अग्नौ घृतं जुहोतीत्यत्रापि हुधात्वर्थो यदि स एव तदाग्निपदार्थानन्वयप्रसङ्गः स्यादतोऽग्निपदसमभिव्याहृतहुधातोः संयोगानुकूलव्यापारानुकूलव्यापार एव

हुधात्वर्थः । तथात्रापि व्यभिचारिपदसमभिव्याहृताऽतिप्रसङ्गशब्दस्य वृत्तित्वमात्रबोधकत्वम्, व्यभिचारिपदाऽसमवधानेऽतिप्रसङ्गशब्दस्य व्याभिचारिवृत्तित्वबोधकत्वम्, अतएव विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति व्युत्पत्तिः सुसंगच्छते । न च गुरुनिष्ठमतथात्वं, लक्षणनिष्ठं व्यभिचारिवृत्तित्वं तयोः सामानाधिकरण्यविरहात्कथं प्रयोज्यप्रयोजकभाव इति वाच्यम् । सामानाधिकरण्यघटकाधिकरणत्वमत्र स्वाश्रयावच्छिन्नाधिकरणनिरूपितत्वसम्बन्धेन, तथाचाऽतथात्वरूपस्य प्रतियोगितावच्छेदकत्वाभावस्याऽऽश्रयं यत्साध्यतावच्छेदकं तदवच्छिन्नाधिकरणनिरूपितत्वस्य सामानाधिकरण्यरूपलक्षणे सत्त्वेन तेन सम्बन्धेनाऽतथात्वस्य सत्त्वात्तत्र व्यभिचारिवृत्तित्वस्यापि सत्त्वेन समानाधिकरणतया न प्रयोज्यप्रयोजकभावविरोध इति । अतिप्रसङ्गादिति पञ्चम्यर्थस्य "ज्ञानजन्यज्ञानविषयत्वरूपस्य" ज्ञानज्ञाप्यत्वस्य साध्ये स्वरूपसम्बन्धविशेषत्वाभावेऽन्वयः । तस्य च स्वरूपसम्बन्धेन पक्षीभूतेऽवच्छेदकत्वेऽन्वयः । तथाच लघुधर्मनिष्ठावच्छेदकतावृत्तिसम्भवत्वप्रयोज्यगुरुधर्मवृत्तिअवच्छेदकत्वाभावकम्बुग्रीवादिनिष्ठाऽतथात्वप्रयोज्यव्यभिचारिवृत्तित्वज्ञाप्यस्वरूपसम्बन्धविशेषत्वाभाववदभिन्नमेतल्लक्षणघटकाऽवच्छेदकत्वमित्यन्वयबोध इति ।

केचित्तुमते लघुधर्मनिष्ठो यो भेदस्तत्प्रतियोगितावच्छेदकत्वप्रयोज्यगुरुधर्मनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावव्याप्यगुरुत्वप्रयोज्यगुरुधर्मनिष्ठाऽतथात्वप्रयोज्यव्यभिचारिवृत्तित्वरूपाऽतिप्रसंगज्ञानजन्यज्ञानविषयस्वरूपसम्बन्धविशेषत्वाभावरूपसाध्यवदवच्छेदकत्वमित्यन्वयबोधः ।

संभवति लघौ धर्मे इत्यादिनाऽयं नियमो लभ्यते—यो यदभावप्रतियोगितावच्छेदकत्वनिष्ठनिरुक्तसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदविशिष्टाभाव"कूट"वान् स तदभावीयप्रतियोगितानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावानिति । वै० स्वसामानाधिकरण्यस्वाश्रयावधिकगुरुत्वप्रतियोगिकत्वोभयसम्बन्धेन । नहि भवति यथोक्तभेदवदवधिकगुरुत्वाभाववदपि सत्तात्वादिकं, यथोक्तभेदवदपि कंबुग्रीवात्वादिकं विशिष्टसत्त्वकंबुग्रीवादिमदभावप्रतियोगितावच्छेदकम् । नापि यथोक्तभेदवत्प्रमेयकंबुग्रीवादिमत्त्वावधिकगुरुत्वाभावरूपयत्किंचिदभाववदपि तत्तथा । तथाविधभेदसमानाधिकरणयत्किंचिदवधिकगुरुत्वाभावो हि सामान्याभावविशेषाभावविकल्पेन गन्धत्वापेक्षया गुरुणि घ्राणग्राह्यगन्धत्वे प्रमेयकंबुग्रीवादिमत्त्वाद्यपेक्षयाऽगुरुणि कम्बुग्रीवादिमत्त्वेऽवच्छेदकत्वमनुचरति व्यभिचरति चेत्यतो हेयः । एवं घटत्व इव कम्बुग्रीवादिमत्त्वस्याऽभावबुद्धौ प्रतियोगिविशेषणत्वेऽपि नावच्छेदकत्वम्, उक्तव्याप्त्यनुगृहीताभावबुद्धेरेवाऽवच्छेदकत्वे मानत्वादिति ।

आस्तां नाम महानसीयवन्ह्यभावप्रतियोगितावच्छेदकत्वं वह्नित्वमात्रेपि, वह्नित्वं यदि महानसीयवह्न्यभावप्रतियोगितावच्छेदकं स्यात्पर्वतवृत्त्यभावप्रतियोगितावच्छेदकं स्यादित्यापत्तेरापाद्यव्यतिरेकप्रमितिविरहेण इष्टत्वादिति जल्पनं मुखमस्तीति न्यायगोचरः । तथाहि वह्नित्वमात्र इत्यनेन महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वे वह्नीतराऽवृत्तित्वोपरक्तवह्नित्ववृत्तित्वं प्रसजनीयम्, आहोस्वित्तदेकत्वेऽवच्छेदकत्वपर्याप्त्यनुयोगितावच्छेदकत्वं शुद्धवह्नित्वे वाऽवच्छेदकत्वम् । तत्राऽऽद्ययोरापत्तिसम्भवादतथात्वम्, आपत्तिश्च "महानसीयवह्न्य-

भावप्रतियोगितावच्छेदकत्वं वह्नित्वेतराऽवृत्तिवह्नित्वव्रत्ति स्यात् पर्वतनिरूपितवृत्तितावदभावीयप्रतियोगितानिरूपितं स्यात् महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं वह्नित्वं गतैकत्वं स्यात् पर्वतवृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं स्यादि"ति। अन्त्ये पुनरिष्टतैवेति दिक्

अत्र गुरुत्वं च स्वविषयकग्रहत्वव्यापकव्यापकताका या संख्या तादृशसंख्यात्वाऽवच्छिन्नाऽवृत्तिर्यः संख्याविभाजकीभूतो धर्मस्तद्वत्संख्यावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकविषयताशून्यप्रतीतिविषयतानवच्छेदकत्वम्। स्वपदेनाऽत्र लघुधर्मो ग्राह्यः। तथाच घटत्वविषयकग्रहत्वव्यापकत्वस्य एकत्वसंख्याव्यापकत्वे एव न तु द्वित्वादिकसंख्याव्यापकत्वे; द्वित्वाधिकरणीभूते घटत्वातिरिक्ते प्रकारतया ग्रहस्याऽसत्त्वात्, एकत्वाऽवृत्तिसंख्याविभाजकीभूतो धर्मः कम्बुग्रीवादिमत्त्वगतसमुदायत्वत्वं "द्वित्वादिकं च" तद्धर्मवत्समुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकविषयताशून्यप्रतीतिविषयतानवच्छेदकत्वस्य कम्बुग्रीवादिमत्त्वे सत्त्वेन घटत्वाऽपेक्षया तस्य गुरुत्वम्, कंबुग्रीवादिमत्त्वविषयकग्रहत्वव्यापकत्वमेकत्वव्यापकतायामप्यस्ति "कम्बुग्रीवादिमत्त्वं कपालद्वयसंयोगः तद्विषयकग्रहे कपालत्वस्यापि प्रकारतया तद्गतैकत्वव्यापकतायां ग्रहत्वव्यापकत्वसत्त्वात्" इति तादृशैकत्वसंख्याऽवृत्तिसंख्याविभाजकीभूतो धर्मः कम्बुग्रीवादिमत्त्वगतसमुदायत्वत्वं "द्वित्वत्वादिकं च" तद्धर्मवत्समुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकत्वान्न कंबुग्रीवादिमत्त्वावधिकं गुरुत्वं घटत्व इति ग्रहत्वसामानाधिकरण्योक्तौ संख्यामात्रव्यापकतायाः ग्रहत्वसामानाधिकरण्येनाऽवृत्तिधर्माप्रसिद्धेः व्यापकत्वनिवेशः। ग्रहे संख्याव्यापकत्वं च प्रकारतासम्बन्धेन। व्याप्यताघटकसम्बन्धश्च समवायः। ननु व्यापकतायां व्यापकत्वमपहाय संख्यायामेव तादृशग्रहत्वव्यापकत्वं निवेश्यम्, तादृशसंख्यात्वावच्छिन्नाऽवृत्तित्वं संख्याविभाजकीभूतधर्मे निवेश्यम्, व्यापकताघटकसम्बन्धश्च स्वाश्रयनिष्ठविषयताकत्वमिति चेन्न। तादृशग्रहत्वव्यापकत्वस्य घटत्वगतैकत्व इव घटत्वपटत्वगतद्वित्वे घटत्वपटत्वमठत्वगतबहुत्वे च स्वाश्रयनिष्ठविषयताकत्वसम्बन्धेन सत्त्वेन तादृशसंख्यात्वावच्छिन्नावृत्तिसंख्याविभाजकीभूतधर्माप्रसिद्ध्या घटत्वापेक्षया कम्बुग्रीवादिमत्त्वे गुरुत्वाऽसम्भवेनाऽसम्भवापत्तेः। एवंसति स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वसम्बन्धेनैव संख्यायां ग्रहत्वव्यापकत्वं निवेश्यम्, तावतैवोक्तसंख्यायां स्वविषयकग्रहत्वव्यापकत्वाऽसम्भवादिति केचित्। तन्न, परम्परायाः संसर्गत्वे मानाभावात्। ननु संख्यात्वावच्छिन्नाऽवृत्तित्वमपहाय संख्याऽवृत्तित्वमेव निवेश्यम्, तदपि संख्यानिष्ठनिरूपकतानिरूपितनिरूप्यतावद्वृत्तित्वाभावार्थकमिति चेन्न। घटत्वगतैकत्वघटत्वपटत्वगताद्वित्वघटत्वपटत्वमठत्वगतबहुत्वैतदन्यतमत्वावच्छिन्ननिरूपकतानिरूप्यतावद्वृत्तित्वस्य सकलसंख्याविभाजकीभूतधर्मे सत्त्वेन तादृशवृत्तित्वाभाववद्धर्माप्रसिद्ध्याऽसम्भवापत्तेः। तन्निवेशे च संख्यात्वावच्छिन्नावृत्तित्वपदेन तादृशसंख्यात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावद्वृत्तित्वाभावस्य विवक्षितत्वेनाऽन्यतमत्वावच्छिन्ननिरूपकतायां संख्यात्वावच्छिन्नत्वाभावान्नासंभवः। ननु स्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतधर्मवत्त्वमेव गुरुत्वं कथं नोक्तम्। धर्मवत्ता च स्वाश्रयाश्रयत्वसम्बन्धेन। अत्र केचित्। कम्बुग्रीवादिमत्त्वापेक्षया घटत्वस्यापि गुरुत्वापत्तेः।

तादृशव्यापकताका या संख्या कम्बुग्रीवादिमत्त्वगतबहुत्वसंख्या तादृशसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतो धर्मः कम्बुग्रीवादिमत्त्वघटत्वगतद्वित्ववत्त्वं तद्वत्त्वस्य स्वाश्रयाश्रयत्वसम्बन्धेन घटत्वेऽपि सत्त्वात् । अतस्तादृशधर्मवत्संख्यावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतानवच्छेदकत्वस्य निवेशः ।

अत्र परंपरायाः संसर्गत्वाभ्युपगमे एव घटत्वस्य घटत्वगतैकत्वपुरष्कारेण कम्बुग्रीवादिमत्त्वापेक्षया गुरुत्वाभावेऽपि तादृशद्वित्वेन रूपेण घटत्वस्य कम्बुग्रीवादिमत्त्वापेक्षया गुरुत्वस्येष्टत्वे स्वविषयकग्रहत्वव्यापकसंख्यात्वावच्छिन्नावृत्तिसंख्याविभाजकीभूतधर्मवत्त्वमेव गुरुत्वम् । व्यापकता च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वसम्बन्धेन । धर्मवत्ता च स्वाश्रयाश्रयत्वसम्बन्धेनेति । रूपविशिष्टरूपवत्त्वं पर्यवसितार्थः । वै० स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशालिग्रहत्वव्यापकसंख्यात्वावच्छिन्नावृत्तिसंख्याविभाजकीभूतधर्मवत्त्वसम्बन्धेनेति दिक् ।

केचित्तु स्वविषयकग्रहविशिष्टत्वं संख्याविभाजकधर्मे निवेश्यम् । वै० स्वनिष्ठव्यापकताकसंख्यावृत्तित्वसम्बन्धेन तथाच नाऽप्रसिद्धिः । संख्यासामानाधिकरण्येपि ग्रहत्वव्यापकतानिवेशेऽप्रसिद्धितादवस्थ्यात् व्यापकत्वे तन्निवेशः । कंबुग्रीवादिमत्त्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यावृत्तिसंख्याविभाजकीभूतचतुष्ट्ववद्घटत्वगतचतुष्ट्वमादाय घटत्वेऽतिप्रसंगवारणाय तदवच्छिन्नानुयोगितेत्यादिनिवेशः । तेन रूपेण घटत्वस्य गुरुत्वे इष्टत्वे तन्नोपादेयमेवेति प्राहुः।

वस्तुतस्तु स्वविषयकयत्किंचिद्ग्रहवृत्तिसंख्यावृत्तिसंख्याविभाजकीभूतेत्यादिनिवेशः । वृत्तित्वं च स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वेन कंबुग्रीवादिमत्त्वघटत्वविषयकज्ञानयोरेकत्वद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताकत्वयोः सत्त्वाऽसत्त्व इति नातिव्याप्त्यव्याप्तीति दिक् ।

तद्धर्मावच्छिन्नप्रकारतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसंख्यासामान्यनिष्ठभेदप्रतियोगितावच्छेदकसंख्यात्वव्याप्यजातिमत्प्रकारताश्रयत्वं तद्धर्मापेक्षया गुरुत्वम् । अत्र तद्धर्मपदेन लघुधर्मो ग्राह्यः । प्रकारतावच्छेदकताया न्यूनवारकपर्याप्तिर्न निवेश्यते । अत्र सामान्यपदानुक्तौ प्रमेयधूमत्वावच्छिन्नप्रकारतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूता या संख्या तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्य धूमत्वगतैकत्वत्वे सत्त्वाद्दोषोऽतः सामान्यपदम्, तथाच तत्र सामान्यान्तर्गताया एकत्वसंख्याया अपि लाभान्न दोषः। ईदृशगुरुत्वज्ञानं च स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वबुद्धौ प्रतिबन्धकम् । अवच्छेदकत्वं चाऽवच्छेदकतावच्छेदकसाधारणं ग्राह्यमित्यस्मद्गुरुचरणाः ।

लघुत्वं च स्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्तित्वम्। वृत्तित्वं च स्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतधर्मवत्त्वसंबन्धेन, तथाच कंबुग्रीवादिमत्त्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं कंबुग्रीवादिमत्त्वगतबहुत्वं तद्वृत्तित्वस्य घटत्वे सत्त्वात् घटत्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यात्वावच्छिन्नावृत्तिसंख्याविभाजकीभूतं कंबुग्रीवादिमत्वगतसमुदायत्वगतसमुदायत्वत्वं तद्वत्वस्य तादृशसमुदायत्वे सत्वेन तेन सबन्धेन तादृशसमुदात्ववृत्तित्वस्य घटत्वे सत्त्वात्। केचित्तु स्वत्वस्याऽननुगततया तत्तद्व्यक्तेः पर्यवसायितया

घटत्वनिष्ठलघुतानिरूपिताऽवधितासमनियतधर्मवत्त्वं गुरुत्वम्, लघुत्वं च कम्बुग्रीवादिमत्त्वनिष्ठगुरुतानिरूपिताऽवधिता समनियतधर्मवत्त्वमेवं रीत्या सर्वत्र गुरुत्वलघुत्वलक्षणं बोध्यम् । न च गुरुत्वघटितं लघुत्वं लघुत्वघटितं गुरुत्वमित्यन्योन्याश्रय इति वाच्यम् । गुरुत्वलक्षणे लघुत्वस्य लघुत्वलक्षणे गुरुत्वस्य तत्तद्व्यक्तित्वेनैव प्रवेशात्, अनुमितिलक्षणे अनुमितेस्तद्व्यक्तित्वेन प्रवेश इव । अत्रोक्तावधित्वसामानाधिकरण्योक्तौ द्रव्यत्वघटत्वोभयत्वेन घटत्वनिष्ठलघुतानिरूपिताऽवधितावति द्रव्यत्वादौ द्रव्यत्वत्वादेर्वृत्त्या तेन तस्य गुरुत्वापत्तिः । अतएव न व्याप्यत्वमात्रप्रवेशो, व्यापकतामात्रप्रवेशे च घटकालीनप्रमेयापेक्षया प्रमेयत्वेन सर्वस्यापि गुरुत्वापत्तिरतः समनियतत्वप्रवेशः । यद्यपि घटत्वनिष्ठलघुतानिरूपिताऽवधित्वत्वेन तत्सामनैयत्यं न कुत्रापि धर्मे, तथाप्यवधिताविशेषसामनैयत्यविवक्षायां न कोपि दोषः । एवं चोक्तावधित्वविशिष्टतत्तद्धर्मवत्त्वं तेन धर्मेण गुरुत्वम् । वै०सामनैयत्येनेति पर्यवसितमिति प्राहुः।

**इदमत्र चिन्त्यम्** । युक्तमनुमितिव्यक्तेः प्रत्यक्षादिना गृहीतत्वात्तद्व्यक्तिसमवेतत्वादिनाऽनुमितित्वपरिचायकत्वम्, अनेकपदार्थघटितलघुत्वस्य स्वघटकपदार्थज्ञानं विना दुःशक्यग्रहतया तद्धर्माणां ग्रहे अन्योन्याश्रयतादवस्थ्यम् । सनिरूपकपदार्थस्य निरूपकभेदेन भिन्नतया एकलघुत्वव्यक्तिमादाय तदवधित्वसामनैयत्येन धर्मप्रवेशे धर्मान्तराऽसङ्ग्रहेण घटत्वावधिकगुरुत्वस्यापि अनन्तत्वापत्तिरिति । अन्येतु स्वविषयकग्रहवृत्तिव्याप्यताकसङ्ख्याऽवृत्तिसङ्ख्याविभाजकीभूतधर्मवत्सङ्ख्यावृत्तिविषयतान्यप्रतीतिविषयतानवच्छेदकत्वमित्याहुः ।

यद्वा लघुत्वगुरुत्वादिकमिदमेतदपेक्षया गुरुलघ्विति व्यवहारसाक्षिकः सावधिकोऽखण्डधर्मविशेष इत्यलम् ।

(१)भवानन्दवागीशेन समनियतत्वे सति यत्र लघुत्वं तत्रैवाऽवच्छेदकत्वं इति मन्यते

---

(१) भवानन्दसिद्धान्तवागीशानामयमाशयः । लघुधर्मसमानियतत्वेन गुरोरनवच्छेदकत्वं साधनीयम्, समनैयत्यं चात्र स्वावच्छिन्नसमव्यापकतावच्छेदकत्वे सति स्वसमानाधिकरणत्वम् । सत्यन्तनिवेशेन सत्तात्वादिसमनियते विशिष्टसत्ताद्यभावप्रतियोगितावच्छेदके विशिष्टसत्तात्वादौ न व्यभिचारः । विशेष्यदलनिवेशाच्च घटप्रागभावत्वादौ घटप्रागभावाद्यत्यन्ताभावप्रतियोगितावच्छेदके घटत्वादिसमनियते न व्यभिचारः । अत्र समव्यापकता प्रतियोगितावच्छेदकसम्बन्धेन ग्राह्या, तेन समवायेन जात्यभावप्रतियोगितावच्छेदकं समवेतत्वमेव न तु जातित्वं, जातिभेदप्रतियोगितावच्छेदकं च जातित्वमेव, न तु समवेतत्वमित्यस्योपपत्तिः । वस्तुतस्तु समनियते लघौ सतीत्यनेन लघुसमनियतसत्ताकत्वमेव विवक्षितम्, तथाच विशिष्टसत्तात्वादेर्विशेषणविशेष्यसम्बन्धादिषु पर्याप्तत्वात्र सत्तात्वादिसमनियतसत्ताकत्वमिति न व्यभिचारः । नन्वेवमपि समवायादिना जात्याभावादेः प्रतियोगितावच्छेदकं समवेतत्वादिकमेव न तु जातित्वादिकमिति सिद्धान्तोऽनुपपन्नः, जातित्वादौ समवेतत्वाद्यसमनैयत्येन हेत्वसिद्ध्या तदभावप्रतियोगितावच्छेदकत्वाभावाऽसिद्धेरिति चेन्न । स्वसमानाधिकरणलघुतदभावप्रतियोगितावच्छेदकान्तराऽघटितस्यैव तदभावप्रतियोगितावच्छेदकतया जातित्वादौ हेत्वन्तरेण स्वसमानाधिकरणलघुसमवेतत्वादिरूपतदभावप्रतियोगितावच्छेदकान्तरघटितत्वेनैव तदभावप्रतियोगितावच्छेदकत्वाभावः साधनीय इत्युक्तदोषाभावात् । न च समवेतत्वादेरतिप्रसक्ततया जात्यभावादिप्रतियोगितावच्छेदकतया हेत्वन्तरस्याप्यसिद्धिरेवेति वाच्यम् । समवायादिना जात्यभावादेः स्वसमनियतसमवेताद्यभावाऽभिन्नतया समवायादिना जात्यभावादिप्रतियोगितायाः समवेतमात्रे एव सत्त्वात् । अत एव जातित्वादौ समवेतत्वघटितत्वेऽपि न जातिभेदप्रतियोगितावच्छेदकत्वाभावासिद्धिः । जातिभेदादेः समवेतभेदाद्यसमनैयत्येन समवेतत्वादेर्जातिभेदप्रतियो[illegible] । वस्तुतो जातित्वमपि समवायेन

सत्ता

विशिष्टसत्तात्वसमनियतस्य सत्तात्वस्य लघुनोऽपि न विशिष्टाभावस्य प्रतियोगितावच्छेदकत्वम्, गुणादावपि सत्ता नास्तीतिप्रतीतिप्रसङ्गात्, पृथिवीसमवेतत्वाऽसमनियतस्यापि च समवेतत्वस्य पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वम्, अनतिप्रसङ्गात्। एवं घटरूपत्वस्याऽसमनियतमपि रूपत्वं व्यधिकरणसंयोगादिसम्बन्धावच्छिन्नघटरूपाद्यभावस्य प्रतियोगितावच्छेदकमतः समनैयत्यमकिञ्चित्करम्। यस्याऽवच्छेदकत्वस्वीकारेऽतिप्रसङ्गाद्यभावः स एवाऽवच्छेदक इत्याशयेनाऽऽह सम्भवतीति। अतिप्रसङ्गाद्यनापादके लघौ संम्भवतीत्यर्थः।

---

तन्मतमन्वयव्यतिरेकव्यभिचारदर्शनद्वारा खण्डयति **विशिष्टसत्तात्वेति।**

नन्वत्र प्रथमं गुणकर्मान्यत्वविशिष्टसत्तात्वे कथं तादृशाभावप्रतियोगितावच्छेदकत्वं तत्र लाघवेन सामानाधिकरण्यात्मकवैशिष्ट्ये एव तादृशाभावप्रतियोगितावच्छेदकत्वस्वीकारात्, एवं चात्र विशिष्टसत्तात्वापेक्षया लघ्वपि गुणकर्मान्यत्वं अतिप्रसङ्गाद्यनापादकं चेति तदेव विशिष्टसत्ताभावप्रतियोगितावच्छेदकं तत्समनियतं च न सत्तात्वद्रव्यत्वे वैषम्यादिति। विशिष्टसत्तात्वेऽवच्छेदकत्वाऽनुपपत्तेरिष्टत्वात्, सत्तात्वे चापत्तेरसम्भवात्, ताभ्यां सामनैयत्यस्याऽवच्छेदकत्वनियामकत्वनिराकरणमसङ्गतमिति चेत्।

अत्र केचित्। अनुयोगिवाचकपदसमभिव्याहृतसामानाधिकरण्यात्मकवैशिष्ट्यवाचकं पदं यत्र तत्राधिकरणतया वैलक्षण्यस्वीकारात्, केवलवैशिष्ट्यावच्छिन्नाधिकरणताया अवैलक्षण्यात् वैशिष्ट्यमात्रं नावच्छेदकमभ्युपेयम्, किन्तु सत्तात्वसहितमेवेति नाऽसंगतिः। अत एव सिद्धान्तलक्षणे द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्येव प्रयोगः, अन्यथा सत्तापदवैयर्थ्यापत्तेरित्याहुः।

तन्न सम्यक्। कूटघटितलक्षणे घटवृत्तित्वविशिष्टवाच्यत्वाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन वैशिष्ट्यमात्रे स्वीकारात्। तथाच नायं नियमः। नच सिद्धान्तलक्षणे सत्तापदस्य वैयर्थ्यापत्तिरिति वाच्यम्। तत्र सत्तापदं वैशिष्ट्यसमवायावच्छिन्नाधेयत्वघटितत्वस्य समवायेन हेतुत्वस्य च सूचनायेति। यद्वा गुणकर्मान्यत्वाधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तिताविशिष्टस्य सत्त्वस्य कालिकेनाऽभावः सत्तानधिकरणावच्छेदेन कालेऽप्यस्ति, केवलविशिष्टस्याऽनधिकरणाऽप्रसिद्धेस्तदभावश्च नेति केवलवैशिष्ट्यं नोक्ताभावप्रतियोगिता-

---

जात्यभावप्रतियोगिताकमेव, अत एव तत्र तत्र जातित्वद्रव्यसमवेतत्वादेरवच्छेदकत्वोक्तिः संगच्छते, क्वाचित्स्याऽनवच्छेदकत्वोक्तिस्तु पूर्वकल्पमनुसृत्येति ध्येयम्। एतेनात्र नीलघटत्वाद्यसमनियतस्य घटत्वादिलघुधर्मस्य न्यूनवृत्तित्वादिनैवाऽच्छेदकत्वासम्भवात्सम्भवतीत्यनेनैवेष्टसिद्धौ समनियत इति पूरणवैयर्थ्यम्। किंच जातित्वाद्यसमनियतस्यापि समवेतत्वादिलघुधर्मस्य जात्यभावप्रतियोगितावच्छेदकत्वेन समनैयत्यस्य लघोरवच्छेदकतायां नियामकत्वाऽसम्भवेन पूरणाऽसंगतिरित्याशंकापि निरस्ता। सम्भवतीत्यस्य सकलावच्छेदकताबाधकाभावकूटवत्त्वरूपाऽवच्छेदकतासम्भवार्थकत्वमभ्युपेत्य पूरणं विनैवोपपत्तावपि तस्योपायान्तरत्वेनोदाहरत्वादिप्रस्तत्वेन चाऽदोषात्। वस्तुतस्तु समुपसर्गोपसंदानेन समीचीनत्वलाभात् तस्य च समनियतत्वरूपतया सम्भवतीत्यस्यैव समनियत इत्यर्थो न तु पूरणमिति।

वच्छेदकमिति तदभावमादायैव ग्रन्थसङ्गतिराकलनीया । प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोग्यनधिकरणस्याऽभावावच्छेदकत्वे तूक्तवृत्तिताविशिष्टसत्ताभावस्याऽत्माद्यवच्छेदेनैव काले सत्त्वेन विशिष्टाभावतत्समनियतत्वापत्तिविरहेऽपि तादृशवृत्तिताविशिष्टतद्घटाभावस्य तद्घटनाशकालावच्छेदेन सत्त्वेन तत्र च तादृशवृत्तिताविशिष्टस्य सत्त्वेन तदभावसत्त्वाऽसम्भवेनोक्तवृत्तिताविशिष्टतद्घटाभावमादायैव सा, सत्तापदन्तूपलक्षणपरमिति ध्येयम् । वस्तुतस्तु एतन्मते प्रतियोग्यंशे भासमानस्याऽवच्छेदकतायाः औत्सर्गिकत्वेन तत्समनियतत्वस्य लघुधर्मनिष्ठस्यैव तस्या आपाद्यताया गुणकर्मान्यत्वस्याऽप्रमनियतत्वेन गुणकर्मान्यत्वविशिष्टसत्तात्वे एव विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वव्यवस्थितेः, तत्समनियतसत्तात्वे तत्प्रसञ्जनेन तन्मतनिराकरणं नासङ्गतमित्यलम् ।

**गुणादावपि सत्ता नास्तीतिप्रतीतिप्रसङ्गादिति ।** ननु अभावस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया समं विरोधात्, सत्तात्वावच्छिन्नाधिकरणत्वस्य च गुणे सत्त्वात्तत्र सत्ता नास्तीति प्रतीत्यापत्तिः कथं सङ्गच्छते, किन्तु गुणे विशिष्टसत्ता नास्तीतिप्रतीत्यनुपपत्तिरेव सम्भवतीति चेन्न । स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सार्धं स्वस्य विरोधित्वं वाच्यम्, अन्यथा घटत्वावच्छिन्नाधिकरणतया सार्धं पटाभावस्य विरोधापत्तेः । एवं च विरोधस्य सत्त्वगर्भत्वे विशेषत एव विश्रामात्, एवं च गुणे विशिष्टसत्ता नास्तीति प्रतीत्यनुपपत्तिवारणाय विशिष्टसत्ताभावस्य लाघवेन द्रव्यत्वाधिकरणतयैव विरोधो न तु सत्तात्वावच्छिन्नाधिकरणतया सार्धं, तथाच विशिष्टसत्ताभावप्रतियोगितावच्छेदककप्रतियोगिताकत्वेन तदभिन्नसत्ताभावस्यापि तेनैव विरोधादापत्तेः सुसङ्गतत्वात् । यद्वा एकधर्मावच्छिन्नप्रतियोगिताकाभावस्यैक्येन विशिष्टसत्ताभावस्य गुणे सर्वानुमततया सत्ताभावस्यापि सत्त्वं स्यादित्यत्र तात्पर्यात् । केचित्तु सत्तात्वं यदि विशिष्टसत्ताभावप्रतियोगितावच्छेदकं स्यात्तदा गुणवृत्त्यभावप्रतियोगितावच्छेदकं स्यादित्यापत्तिपरम् । न च विशिष्टसत्ताभावस्य गुणे सत्त्वेन गुणवृत्त्यभावप्रतियोगितावच्छेदकत्वं सत्तात्वे इष्टमेवेति वाच्यम् । सत्तात्वगतैकत्वं यदि विशिष्टसत्ताभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं स्यात्तदा गुणवृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं स्यादित्यत्रापत्तौ तात्पर्यात् । वस्तुतस्तु सत्तात्वं यदि विशिष्टसत्ताभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्त्यवच्छेदकतावत्स्यात्तदा गुणवृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्त्यवच्छेदकतावत्स्यादित्यापत्तिपरं बोध्यम् ।

नच गुणादौ सत्ता नास्तीति प्रतीतिः स्यात्तदा किं स्यादिति वाच्यम् । यद् यन्निष्ठाभावप्रतियोगितावच्छेदकं तत्तन्निष्ठाधिकरणतानिरूपकतानवच्छेदकमिति नियमेन सत्तात्वं यदि गुणवृत्त्यभावप्रतियोगितावच्छेदकं स्यात्तदा गुणनिष्ठाधिकरणतानिरूपकतानवच्छेदकं स्यादिति प्राहुः ।

अत्र विशिष्टसत्तात्वापेक्षया समनियतत्वे सति लघुत्वेऽपि सत्तात्वस्य नाऽवच्छेदकत्वमित्यन्वयव्यभिचारो बोध्यः । समनियतलघुधर्मस्य प्रतियोगितावच्छेदकत्वनियमेऽन्वयव्यभि-

चारमुक्त्वा व्यतिरेकव्यभिचारमाह **पृथिवीसमवेतत्वेति** । एवं चाऽऽपत्तिमुक्त्वाऽनुपपत्तिमाहेति फलितम् । केचित्तु विशिष्टसत्त्वस्याऽतिरिक्तत्वमते विशिष्टसत्तात्वसमनियतत्वस्य सत्तात्वे विरहान्न तद्दोषः सम्भवतीत्यत आह **पृथिवीसमवतत्वेतीति प्राहुः । अनतिप्रसङ्गादिति** । तथा च समनैयत्योपादाने पृथिवीसमवेतत्वस्य पृथिवीसमवेते सत्त्वात्, शुद्धसमवेतत्वस्य गुणकर्मवृत्तिगुणत्वकर्मत्वादौ सत्त्वात् पृथिवसिमवेताभावप्रतियोगितावच्छेदकत्वं न स्याच्छुद्धसमवेतत्वस्य समनैयत्याभावात्, मम तु अतिप्रसङ्गाद्यनापादकत्वात्तस्यं तदभावप्रतियोगितावच्छेदकत्वमिति भावः । ननु शुद्धसमवेताभावस्य गुणादावसत्त्वात् पृथिवीसमवेताभावस्य च गुणादौ सत्त्वात्कथं पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वं समवेतत्वे स्वीकरणीयम्, अतिप्रसङ्गाद्यनापादकत्वविरहात्, जले समवेतं नास्तीति प्रतीतिवत्पृथिवीसमवेतं नास्तीति प्रतीत्यनुपपत्तेः प्रतियोगितावच्छेदकीभूतसमवेतत्वावच्छिन्नाधिकरणतायास्तत्र सत्त्वात् । तथाचै समवेतत्वमात्रेऽवच्छेदकत्वस्याऽनभ्युपगमात्कुतो व्यतिरेकव्यभिचार इति चेत् । अत्र नव्याः । पृथिवीसमवेतं नास्तीति प्रतीतौ पृथिवीनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तिताविशिष्टस्य कालिकेनाऽभावो विषयस्तत्र तादृशभावप्रतियोगितावच्छेदकत्वं कालिकसम्बन्धावच्छिन्नवृत्तित्वे एव कल्पनीयम् लाघवादिति जले कालिकसम्बन्धावच्छिन्नवृत्तिताविशिष्टः कालिकेन नास्तीति प्रतीतिर्यथा न भवति तथा कालिकसम्बन्धावच्छिन्नपृथिवीनिरूपितवृत्तिताविशिष्टः कालिकेन नास्तीति प्रतीतिरपि न भवति । नचाऽन्यशब्दोल्लेखिनी प्रतीतिर्नान्यं विषयीकरोति तच्छब्दोल्लेखिन्याः प्रतीतेस्तच्छब्दप्रतिपाद्यार्थविषयकत्वमिति नियमात्, तथाच समवेतपदेन समवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टस्यैव बोधात्तत्कथं सङ्गच्छते इति वाच्यम् । पृथिवीनिरूपितसमवेतत्वसम्बन्धावच्छिन्नवृत्तिताविशिष्टं यद्भवति तदेव कालिकसम्बधावच्छिन्नवृत्तिताविशिष्टमपि भवतीति सूचनायैव समवेतपदमिति । नच पृथिवीनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितायाः समनैयत्यं कथं न कालिकसम्बन्धावच्छिन्नवृत्तिताया इति वाच्यम् । पृथिव्यसमानकालीनपदार्थेऽपि कालिकसम्बन्धावच्छिन्नवृत्तितायाः सत्त्वात्तत्र पृथिवीनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तिताया असत्त्वादिति पृथिवीसमवेताभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य समवेतत्वावच्छिन्नप्रतियोगिताकत्वेऽपि क्षत्यभावात्तदभिप्रायक एव वोक्तग्रन्थः । न च तत्प्रतियोगितावच्छेदकत्वं वृत्तित्वे एवोचितमिति शंक्यम् । समवेतत्वस्य समवायरूपतया लाघवानवकाशादित्याहुः ।

प्राञ्चस्तु पृथिवीनिरूपितत्वस्य समवेतांशे उपलक्षणस्याऽभावप्रतियोगितावच्छेदकत्वाभावेन पृथिवीसमवेतं नास्तीति प्रतीतिर्जले न भवतीति नानुपपत्तिः, एवं च पृथिवीनिरूपितत्वोपलक्षितसमवेताभावस्य समवायिमात्राऽवृत्तेः प्रतियोगितावच्छेदकत्वस्य समवेतत्वमात्रे क्षतिविरहेण तत्रैव व्यभिचारतात्पर्यम् । नचैतादृशाऽवच्छेदकत्वमप्रामाणिकमिति वाच्यम् । दण्डी पुरुषो नास्तीत्यादौ दण्डादेस्तादृशाऽवच्छेदकतायाः स्वीकारात् । अत एव सत्तान्यपृथिवीसमवेतशून्यवाच्यत्वादित्यस्य व्यभिचारित्वाभिधानमपि दीधितिकृतः सङ्गच्छते । ननु उपलक्षणत्वं यदि प्रतियोगितावच्छेदकत्वाभाववत्त्वे सति प्रतियोग्यंशे प्रकारकत्वम्, तदा प्रतियोगितावच्छेदकतानापन्नस्य प्रतियोग्यंशे विशिष्टवैशिष्ट्यावगाहिबोधे भानस्वीकारे विशिष्टवैशिष्ट्यावगा-

ह्रिबोधस्यापलापापत्तेः। विशिष्टवैशिष्ट्यावगाहित्वं च विशिष्टधर्मावच्छिन्नप्रतियोगिकसम्बन्धावगाहित्वं विशिष्टधर्मावच्छिन्नाधिकरणतावगाहित्वं वा तस्य तत्र विरहात्। अभावबोधस्य विशिष्टवैशिष्ट्यावगाहिनियमोपि प्रतियोग्यंशे भासमानस्य प्रतियोगितावच्छेदकत्वमेव व्यासेधयति तावतैव व्यधिकरणधर्मावच्छिन्नाभावनिराकरणसंभवात्। नं च तदभाने चेष्टापत्तिरिति वाच्यम्। घटो नास्तीत्यत्र घटप्रतियोगिकाभावो विषयो घटत्वस्योपलक्षणतया भानसम्भवादिति चेन्न। घटवत्यपि भूतले घटो नास्तीति प्रतीतेः प्रामाण्यापत्तेः, घटप्रतियोगिकाभावस्य तत्र सत्त्वात्। न च तत्र घटत्वसमनियतप्रतियोगिताकाभावो विषयः, घटत्वस्य प्रतियोगितावच्छेदकत्वे मानाभावादिति वाच्यम्। तन्मते भूतलं घटवदिति बुद्धिं प्रति घटो नास्तीति निश्चयस्य घटत्वावच्छिन्नाभाववत्तानिश्चयत्वेन प्रतिबन्धकतया तदनुपपत्तिः। घटत्वसमनियतप्रतियोगिताकाभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वे प्रतिबन्धकतावच्छेदकगौरवापत्तेः। घटवत्यपि घटो नास्तीति प्रतीतेः प्रामाण्यापत्तेश्च, घटवृत्तियावत्वावच्छिन्नप्रतियोगित्वसमानियततया तादृशयावत्वावच्छिन्नाभावसत्त्वादिति विशिष्टवैशिष्ट्यावगाहिबोधे घटत्वस्य प्रतियोगितावच्छेदकत्वमिति। प्रतियोग्यंशे उपलक्षणतयाऽभावनियमोपि अवच्छेदकस्याऽवच्छेदकतया भाननिराकरणपरः।

नन्तु उपलक्षणधर्मस्य प्रतियोगितावच्छेदकत्वाभावे पर्वते महानसीयत्वोपलक्षितवह्निर्नास्तीति प्रतीतिर्जायते इदानीं न स्यात्केवलवह्नित्वावच्छिन्नाधिकरणतायास्तत्र सत्त्वादत उपलक्षणीभूतमहानसीयत्वस्यापि प्रतियोगितावच्छेदकत्वं वाच्यं, तथा च नानुपपत्तिरिति, एवं सति पृथिवीनिरूपितत्वोपलक्षितसमवेतं नास्तीति प्रतीतावपि उपलक्षणस्य पृथिवीनिरूपितत्वस्य प्रतियोगितावच्छेदकतया जले पृथिवीसमवेतं नास्तीति प्रतीत्यापत्तिरिति। न चैतावता उपलक्षणस्यापि प्रतियोगितावच्छेदकत्वं सिद्धं, तथाचोपलक्षितावगाहिविशिष्टवैशिष्ट्यावगाहिप्रतीत्योः को भेद इति वाच्यम्। उपलक्षितावगाहिप्रतीतौ शुद्धसमवायसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताकतत्सम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावो विषयः, विशिष्टवैशिष्ट्यावगाहिप्रतीतौ च वह्नित्वावच्छिन्नानुयोगिकसमवायसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताकतत्सम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावो विषय इति तयोर्भेद इति चेन्न। तादृशप्रतीत्यापत्तिवारणायाऽभावप्रतियोग्यंशे विशेषणीभूतप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नाधिकरणतया सममभावस्य विरोधित्वमित्येवं विरोध्यविरोधकभावस्वीकारात्, तथा चोपलक्षणस्यधर्मस्य प्रतियोगितावच्छेदकत्वेऽपि विशेषणीभूतसमवेतत्वावच्छिन्नाधिकरणताया जले सत्त्वान्न जले पृथिवीनिरूपितत्वोपलक्षितं नास्तीति प्रतीत्यापत्तिरिति। न च पर्वते महानसीयत्वोपलक्षितवह्निर्नास्तीति प्रतीत्यनुपपत्तिः, तत्र विशेषणीभूतत्वावच्छिन्नाधिकरणतायाः सत्त्वादिति वाच्यम्। उपलक्षितावगाहिप्रतीतौ न महानसीयत्वं वह्नित्वावच्छेदेन भासते बाधितत्वात्, अपि तु वह्नित्वसामानाधिकरण्येनैव, तथाचाऽभावप्रतियोगितावच्छेदकविशिष्टप्रतियोग्यधिकरणतया सार्धं विरोधित्वं कल्पनीयम्। तथाच पर्वते महानसीयत्वोपलक्षितवह्निर्नास्तीति प्रतीतौ प्रतियोगितावच्छेदकीभूतमहानसीयत्वाविशिष्टप्रतियोग्यधिकरणताविरहान्नानुपपत्तिः। जले पृथिवीनिरूपितत्वोपलक्षितसमवेतं नास्तीति

प्रतीतौ प्रतियोगितावच्छेदकीभूतधर्मविशिष्टप्रतियोग्यधिकरणतासत्त्वाद्यापत्तिः । न चाऽभावप्रत्ययो हि विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते इति नियमात्कथमुपलक्षितावगाहिपृथिवीसमवेतं नास्तीति प्रतीतिसम्भव इति वाच्यम् । अभावप्रत्ययो हि अभावीयप्रतियोगितानिरूपितसाक्षादवच्छेदकतावद्धर्मविशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते इति तदर्थः । किं वा अगत्या उपलक्षितावगाहिमहानसीयवह्निर्नास्तीतिप्रतीतौ महानसीयत्वे प्रतियोगितावच्छेदकत्वं कल्प्यते पृथिवीनिरूपितत्वोपलक्षितसमवेतं नास्तीत्यत्र पृथिवीनिरूपितत्वस्य प्रतियोगितावच्छेदकत्वे मानाभाव इत्यत्र जगदीशतात्पर्यं बोध्यम् ।

तदयं निर्गलितार्थः । विशिष्टभावस्थले विशिष्टप्रतियोगिकस्य संसर्गस्य प्रतियोगितावच्छेदकत्वम् , उपलक्षिताऽभावस्थले विशेष्यमात्रप्रतियोगिकस्य संसर्गस्य प्रतियोगितावच्छेदकत्वम् , एकत्वप्रागभाववद्घटस्य संयोगनाभावप्रतियोगितावच्छेदकत्वस्य विशिष्टप्रतियोगिकसंसर्गस्याऽप्रसिद्धत्वेनाऽसंभवेऽपि तादृशस्थले अगत्या प्रतियोगितापर्याप्तिः विशेषणविशेष्योर्विशिष्टस्थले, उपलक्षितस्थले तु विशेष्यमात्रे अङ्गीकारेण उभयोर्भेदोपपत्तेश्च इति नानुपपत्तिगन्धोपीति ।

परे तु किंचिद्धर्मावच्छिन्नानुयोगिकवैशिष्ट्यावच्छिन्नाधिकरणताया एव विलक्षणत्वेन पृथिवीसमवेताभावस्य जलादावभावात् समवेतत्वस्याऽवच्छेदकत्वं न क्षतिमावहतीति न प्रन्याऽसङ्गतिः । तादृशाधिकरणताया एव वैलक्षण्यमित्येतदर्थं हि द्रव्यत्वसामानाधिकरण्यवतः परामर्शाद् गुणे द्रव्यत्वानुमितिः प्रमा स्यादित्यादिग्रन्थाः संवदन्तीति वदन्ति । तच्चिन्त्यम् । घटवृत्तित्वविशिष्टवाच्यत्वाभावप्रतियोगिताया वैशिष्ट्यमात्रे प्रतिपादितत्वादुक्तग्रन्थाणामुपलक्षणतयाप्युपपत्तेरिति ।

ननु समनैयत्यघटकव्याप्यत्वव्यापकत्वयोः स्वावच्छिन्नाधिकरणत्वसंबन्धेन विवक्षणान्नकाप्यनुपपत्तिः । तथाहि निरुक्तसंबन्धेन विशिष्टसत्तात्वस्य गुणेऽसत्त्वात्तत्र च तादृशसंबंधेन सत्तात्वस्य सत्त्वान्न विशिष्टसत्तात्वसमनैयत्यं सत्तात्वस्येत्यतो विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वम् सत्तात्वेऽभ्युपेयते, अभ्युपेयते च कालिकसंबन्धावच्छिन्नप्रतियोगिताकपृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वं समवेतत्वे, पृथिवीसमवेतत्वसमनैयत्यस्य तत्र सत्त्वादत आह एवं घटरूपत्वस्येति । तथाचात्र घटरूपत्वसमनैयत्यन्न निरुक्तसंबन्धेन रूपत्वस्य स्वप्रतियोगितावच्छेदकीभूतसंयोगेन घटरूपत्वावच्छिन्नाधिकरणाऽप्रसिद्धेरिति ध्येयम् ।

अथ समनियतलघुधर्मस्य प्रतियोगितावच्छेदकत्वमते धर्मविशिष्टमेव सामनैयत्यं वाच्यम् , वै• स्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वस्ववृत्तित्वोभयसम्बन्धेन स्ववृत्तित्वं च स्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन, तथाच गुणकर्मान्यत्वविशिष्टसत्तात्वसामनैयत्यस्य सत्तात्वे विरहात् , विशिष्टसत्तात्वे सत्तात्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वसत्त्वेन स्ववृत्तित्वसंसर्गाभावात् ; एवं पृथिवीसमवेतत्वसमनैयत्यस्य समवेतत्वे सत्त्वात्पृथिवीनिरूपितत्वोपलक्षितसमवायसंबन्धावच्छिन्नवृत्तितावदभावे समवेतत्वावच्छिन्नाधिकरणतावद्वृत्तित्वविरहात्स्ववृत्तित्वसत्त्वेन धर्मविशिष्टत्वसत्त्वादन्वयव्यतिरेकव्यभिचारदानम-

संगतम् । न चोक्तसंबन्धघटकप्रथमसंबन्धघटकस्वावच्छिन्नाधिकरणत्वमवश्यं स्वप्रतियोगितावच्छेदकसंबन्धेन ग्राह्यम्; तथाच संयोगसंबन्धावच्छिन्नाधिकरणाऽप्रसिद्ध्या घटरूपत्वसमनैयत्वं न रूपत्वस्येति वाच्यम् । धर्मविशिष्टत्वं समनैयत्वं वाच्यम्, वै० स्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वस्ववृत्तित्वोभयसंबन्धेन, स्ववृत्तित्वं च पूर्वोक्तसंबन्धेन, तथाच व्यधिकरणसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य केवलान्वयितया न रूपत्वे घटीयरूपत्वसमानियतत्वहानिः । न च व्यधिकरणसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्याऽनङ्गीकार इति वाच्यम् । स्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वम्, स्ववैशिष्ट्यघटकमिति चेन्न । वृत्त्यनियामकसंबन्धस्याऽभावप्रतियोगितानवच्छेदकत्वात् । न च तथापि सत्तात्वस्य न विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वं समनैयत्यविरहात्, समवेतत्वस्य पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वं समनैयत्यसत्त्वात्, विशिष्टसत्तात्वसमनियतेत्यादि पृथिवीसमवेतत्वेत्यादि च दूषणमसंगतमिति वाच्यम् । एतादृशसमनैयत्यकथने कंबुग्रीवादिसमनैयत्यं घटत्वस्यापि न संभवति घटत्वापेक्षया कंबुग्रीवादिमत्त्वस्य गुरुतया तदवच्छिन्नाधिकरणत्वाऽप्रसिद्धेः । यद्यपि स्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्व–स्ववृत्तित्वोभयसंबन्धेन धर्मविशिष्टत्वोक्त्या उक्तदोषवारणं संभवति परन्तु जातिः सत्तावतीत्यादिभ्रममादाय स्वस्यापि समनैयत्यविरहात्, तदा स्वावच्छिन्नप्रमीयप्रकारतानिरूपितविशेष्यतावद्वृत्त्यभावो निवेश्यः, स्ववृत्तित्वमपि स्वावच्छिन्नसमानाधिकरणाभावप्रतियोगिप्रमीयविशेष्यतानिरूपितप्रकारतानवच्छेदकत्वमेव वाच्यम्, अन्यथा प्रमेयधूमाभावप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वे प्रसंगाद्, तथाप्येतादृशसमनैयत्यकथने द्रव्यत्वस्यापि विशिष्टसत्तात्वसमनैयत्यापत्तेः । विशिष्टसत्तात्वावच्छिन्नप्रमीयप्रकारतानिरूपितविशेष्यतावद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्ववृत्तित्वोभयसंबन्धेन धर्मविशिष्टत्वमेव समनैयत्यम्, स्ववृत्तित्वं च स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वसंबन्धेन, तथाच विशिष्टसत्तात्वाधिकरणीभूतविशिष्टसत्तावृत्तियो भेदः द्रव्यत्वं नेति प्रतीतिसिद्धः तत्प्रतियोगितावच्छेदकत्वस्यैव द्रव्यत्वत्वे सत्त्वात्, एवं विशिष्टसत्तात्वसमनियतेत्यादि पृथिवीसमवेतत्वेत्यादिग्रन्थस्य नासंगतिः ।

यत्तूक्तसमनैयत्यादरे द्रव्यत्वत्वगुणत्वादेर्विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वप्रसंग इति, तत्सामानाधिकरण्यस्य संसर्गत्वाभ्युपगमेन दोषस्य वारणादनुपादेयमिति ।

परे तु उक्तनियमस्य वक्ष्यमाणनियमापेक्षयाऽलघुत्वात्सामनैयत्यस्य पारिभाषिकत्वापत्तेश्चोक्तनियमो हेय इति ।

केचित्तु गुरुधर्मस्येव गुरुसंसर्गस्यापि प्रतियोगितानवच्छेदकतया द्रव्यानुयोगिकसमवायेन द्रव्यत्वाभावप्रतियोगितावच्छेदकत्वस्य समवाये लाघवेन स्वकीरादुक्तसामनैयत्यस्य तत्रोपपादयितुमशक्यतया स्वावच्छिन्नत्वस्याऽवश्यं स्ववृत्तिप्रतियोगितावच्छेदकताघटकसंबन्धेन वक्तव्यतया संसर्गनिष्ठावच्छेदकताघटकसंसर्गस्याऽप्रतिबध्यत्वादुक्तनियमो हेय इति दिक् ।

समनियतलघुधर्मेऽवच्छेदकत्वमभ्युपगच्छतां भवानन्दसिद्धान्तवागीशस्य मतं निरस्य

स्वमतमाह किन्त्विति । अतिप्रसंगाद्यनापादके लघाविति । कुत्रचित्पुस्तके अतिप्रसंगाद्यनापादके लघौ धर्मे इति पाठः । तत्र धर्मपदं समानाधिकरणस्यैव लघोरवच्छेदकतालाभार्थम्, तेन न द्रव्यत्वस्य विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वप्रसंग इति । अथ किं तावदतिप्रसंगाद्यनापादकत्वम् । अत्र केचित् । अभावविशिष्टाभावप्रतियोगितावच्छेदकत्वं तत्, संबन्धश्च स्वसमनियतत्वमेव, अभावश्च प्राथमिको यदभावप्रतियोगितावच्छेदकत्वं लघुधर्मे व्यवस्थापनीयं स एवेति प्राहुः । तत्र विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वे सत्तात्वे प्रसंजनीये विशिष्टसत्ताभावविशिष्टाभावे प्रतियोगितावच्छेदकत्वमेवाऽपेक्षणीयम्, तच्च विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वस्य सत्तात्वेऽङ्गीकुर्वता विशिष्टसत्ताभावविशिष्टस्वप्रतियोगितावच्छेदकत्वमंगीकृतमेवेति तत्र तत्प्रसंगो दुर्वारः । न च तन्निश्चयस्याऽपेक्षितत्वेन न दोष इति वाच्यम् । व्यतिरेकेऽन्योन्याश्रयात् । तथाहि विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वाभावनिर्णये उक्ताभावप्रतियोगितावच्छेदकत्वाभावनिर्णयस्तन्निर्णये च तन्निर्णयः स्यात् । न च स्वभिन्नत्वमपि वैशिष्ट्यम्, कंबुग्रीवादिमदभावस्य घटाभावस्य च वस्तुतोऽभिन्नतया घटत्वस्याऽभावविशिष्टाभावप्रतियोगितावच्छेदकत्वाभावसत्त्वेन कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वाभावापत्तेः इति अभावविशिष्टाभावप्रतियोगितावच्छेदकत्वेन निश्चितत्वं तादृशवच्छेदकत्वं वाच्यम् । तद्विरहश्च सत्तात्वादौ स्वनिश्चयः, घटत्वादौ च तादृशनिश्चितत्वस्यैव निश्चयेन तदभावो न तथेति न कोपि दोषः ।

यद्वा तत्प्रतीतिविषयताविशिष्टविषयतावदभावप्रतियोगितावच्छेदकत्वमेव तत् । तद्वैशिष्ट्यं च स्वनिरूपितप्रतियोगित्वसंबन्धावच्छिन्नप्रकारतावच्छेदकधर्मावच्छिन्नप्रकारत्वानिरूपितत्वस्वाश्रयसमनियतवृत्तित्वोभयसम्बन्धेन, तथाच विशिष्टसत्ता नास्तीति प्रतीतिविषयतावैशिष्ट्यं न कस्यामपि विशिष्टसत्ताभावविषयतायां कंबुग्रीवादिमान्नास्तीति प्रतीतिविषयताविशिष्टत्वं च घटो नास्तीति प्रतीतिविषयतायामस्तीति न दोषं इति विभावनीयम् ।

परे तु स्वाधिकरणनिष्ठाधिकरणतानिरूपकतानवच्छेदकत्व—स्वप्रतियोऽग्यंशे प्रकारीभूतधर्मावच्छिन्नव्यापकतावच्छेदकत्वोभयसम्बन्धेनाऽभावविशिष्टत्वमेव तदिति । न चाऽत्राधिकरणत्वस्याऽवश्यं प्रतियोगितावच्छेदकसम्बन्धेन वाच्यतया सत्ताभावाधिकरणजात्यादिनिष्ठसमवायसम्बन्धावच्छिन्नाधिकरणत्वाऽप्रसिद्ध्या समवेतत्वे तत्प्रतियोगितावच्छेदकत्वन्न स्यादिति वाच्यम् । स्वाधिकरणनिष्ठाधिकरणतासामान्ये यद्धर्मावच्छिन्नत्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्तद्धर्मवत्त्वस्य विवक्षणादिति वदन्ति । स्वं—अभावः ।

अत्र प्रथमे पर्वतीयवह्न्यभावसमनियतपर्वतानुयोगिकसंयोगेन वह्न्यभावप्रतियोगितावच्छेदकवह्नित्वस्य पर्वतीयवन्ह्यभावप्रतियोगितावच्छेदकत्वापत्तिः । प्रतियोगित्वयोरेकसम्बन्धावच्छिन्नत्वविवक्षणेऽपि स्वाश्रयसमवायिसमवेतत्वसम्बन्धेन कम्बुग्रीवात्वादिमदभावप्रतियोगितावच्छेदकत्वस्य समवायेन घटत्वे दर्शनेनाऽवच्छेदकत्वयोरेकसम्बन्धावच्छिन्नत्वस्याऽविवक्षणीयतया पर्वतीयवह्निमदभावसमनियतपर्वतानुयोगिकसंयोगेन वह्निमदभावप्रतियोगितावच्छेदकस्य वह्नेः संयोगेनाऽवच्छेदकत्वापत्तिः । अभावविशिष्टाभावीययत्सम्बन्धावच्छिन्नावच्छेदकतावत्त्वं यस्य तस्य तेन सम्बन्धेन तदभावप्रतियोगितावच्छेदकत्वमिति विव-

प्रमेयधूमत्वस्य तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधूमत्वाक्षणे संयोगेन वह्नेरतथात्वात् । पर्वतीयसंयोगेन वह्न्यभावसमनियतपर्वतीयवह्न्यभावप्रतियोगितावच्छेदकसंयोगस्य लघोरवच्छेदकत्वापत्तिः ! लघुसंसर्गस्य प्रतियोगितावच्छेदकत्वे व्यवस्थिते प्रतियोगित्वयोरेकसम्बन्धावच्छिन्नत्वस्यानुपादेयत्वात् । एवं च पूर्वोक्तपर्वतीयवह्न्यभावप्रतियोगितावच्छेदकत्वापत्तिरपि वह्नित्वे तदवस्थेति बहुतरकुसृष्टिकल्पनावकाशः । एवं द्वितीयेपीति ।

अन्ये तु अभावविशिष्टाभावप्रतियोगितानवच्छेदकत्वं तत् । वै० स्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेकत्व–स्ववृत्तित्वोभयसम्बन्धेन । स्ववृत्तित्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन । अत्र स्ववृत्तित्वानुक्तौ धूमान्यत्वविशिष्टद्रव्यत्वावच्छिन्नाभावविशिष्टो योऽभावो जलत्वावच्छिन्नाभावस्तत्प्रतियोगितावच्छेदकत्वस्य जलत्वे सत्त्वात् जलत्वस्यापि अतिप्रसंगाद्यनापादकत्वं स्यादतस्तदुक्तम् । प्रथमसम्बन्धानुक्तौ तद्रूपाभावविशिष्टो योऽभावो रूपत्वावच्छिन्नाभावस्तत्प्रतियोगितावच्छेदकत्वस्य रूपत्वे सत्त्वाद्रूपत्वमप्यतिप्रसङ्गाद्यनापादकं स्यादतस्तदुक्तमिति प्राहुः ।

ननु प्रमेयधूमवान् वह्नेरित्यत्राऽतिव्याप्त्या "व्यभिचारपर्यवसायिन्या" लक्षणस्य इतरभेदानुमापकहेतोर्दुष्टत्वे कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तेरभिधानमधिकोक्तिः । न च सम्भवाभिप्रायेण तत्प्रदर्शनम्, गुरुधर्मावच्छिन्नसाध्यकव्यभिचारिमात्रेऽतिप्रसंगदर्शनाऽपत्तेः । अतो धूमत्वप्रमेयत्वविशिष्टधूमत्वयोरतिरेकेण प्रसक्तामतिव्याप्तिं तयोरनतिरेकप्रदर्शनेन वारयन् स्थलान्तरानुधावनस्य दीधितिकृतोऽनधिकोक्तिं प्रदर्शयति **प्रमेयधूमत्वस्येति** । अथात्र प्रथमं प्रमेयधूमत्वे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वभेदस्याऽसत्त्वात्किं तद्वारणप्रयोजनम् । न च धूमत्वभेदस्य प्रमेयत्वरूपसाध्यतावच्छेदके सत्त्वादतिव्याप्तिरिति वाच्यम् । प्रमेयत्वस्याऽनवच्छेदकत्वे तद्रूपेण व्यापकत्वस्येष्टत्वात्, यादृशधर्मे प्रतियोगिताऽनवच्छेदकत्वं तदवच्छिन्नविधेयताकानुमितिः फलम्, एवं चाऽशंकैव नास्ति इति चेन्न । यादृशधर्मावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावः तदवच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकविधेयताकानुमितिः फलमिति नियमात्, तथाच व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्तेरभावस्याऽनङ्गीकारेण धूमत्वे प्रतियोगितावच्छेदकत्वसत्त्वे प्रमेयधूमत्वगतद्वित्वावच्छेदेनापि तादृशावच्छेदकत्वाऽभावस्य प्रमेयधूमत्वेऽसत्त्वेनाऽतिप्रसक्तिवारणात् तन्नियमाऽस्वीकर्त्तृमतेऽतिव्याप्तिरिति न ग्रन्थाऽसंगतिः । तदेतत्सूचनायाह पर्याप्त्यधिकरणमिति ।

केचित्तु पृथिवीजले न गन्धवती, घटवृत्तित्वविशिष्टपृथिवीत्वं न पटादिवृत्तीत्यादिप्रतीत्या वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावाभ्युपगमे शुद्धधूमत्वेऽप्रतियोगितावच्छेदकत्वसत्त्वेऽपि प्रमेयधूमत्वेऽवच्छेदकत्वाभावस्य सत्त्वेनाऽतिव्याप्त्यभिधानम् । अव्यासज्यवृत्त्यवच्छेदकतायाः पर्याप्तेर्व्याप्यवृत्तितया तदवच्छेदकत्वाऽप्रसिद्ध्या नातिव्याप्तिरतः स्थलान्तरमुक्तमित्याहुः ।

परे तु अतिव्याप्तिपदेन वह्निः प्रमेयधूमव्याप्य इति व्यवहारापत्तिर्दीयते तत्रैवाशंकाप्र-

न्यतात्पर्यम् । साध्यतावच्छेदकतदितरोभयानवच्छिन्नहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्नसामानाधिकरण्यस्यैव व्यवहारप्रयोजकत्वोपगमेन प्रमेयधूमत्वतदितरोभयानवच्छिन्नवह्निमन्निष्ठाभावप्रतियोगितानवच्छेदकप्रमेय'धूम'त्वावच्छिन्नसामानाधिकरणस्य च वह्नौ अबाधिततया तादृशव्यवहारप्रसंगरूपातिव्याप्तिवारणं जगदीशेन कृतम्, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणं यत्साध्यतावच्छेदकतापर्याप्त्यधिकरणं तदवच्छिन्नसामानाधिकरण्यमेव व्याप्यत्वव्यवहारप्रयोजकम्, एवं च प्रमेयधूमत्वधूमत्वयोरनतिरेकेण तयोः पर्याप्तिरेकाऽवस्तयोः पर्याप्त्यधिकरणत्वसत्त्वेनाऽनधिकरणत्वविरहाद् व्यवहारापत्तिर्न सम्भवतीति वदन्ति ।

गौरवमत्र शरीरकृतं उपस्थितिकृतं सम्बन्धकृतं च । शरीरकृतं च घ्राणग्राह्यगुणत्वे प्राह्यगन्धत्वादिकम्, सम्बन्धकृतं च कम्बुग्रीवात्वे घटत्वावाधिकम्, उपस्थितिकृतं च उभयोः समशरीरत्वे सम्बन्धत्वे चैकस्यावच्छेदकतानियामकमेव, यथा पाकजरूपवदभावप्रतियोगितायां पाकजरूपस्यैवाऽवच्छेदकत्वन्न पाकजरसादीनां, यत्र चोभयोरिव साम्यमतिप्रसंगाद्यनापादकत्वं च तत्र प्रतीतौ यस्योत्सर्गतः प्रतियोगितावच्छेदकता भासते तस्यैव व्यवतिष्ठते, यथा रूपवदभावप्रतियोगितायां शरीरेण लघोः स्वाश्रयवत्त्वसम्बन्धेन च गुरो रूपत्वस्य समवायसम्बन्धेन लघोः शरीरेण गुरो रूपस्य चावच्छेदकत्वप्रसंगेपि उत्सर्गतोऽवच्छेदकतया भासमानरूपस्यैवेत्यवधेयम् ।

दीधितौ कम्बुग्रीवादिमत्त्वेति । तथाच कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तिरित्यर्थः । अत्र कम्बुग्रीवादिमत्त्वं स्वसमवायिसमवेतत्वसम्बन्धेन बोध्यम् । साध्यतावच्छेदकसम्बन्धश्च समवायः । यत्तु स्वसमवायिसमवेतत्वसम्बन्धेन कम्बुग्रीवादिमतः संयोगेनैव साध्यत्वं न तु समवायेन, तथासति घटत्वादिहेतोरेव व्यभिचारित्वसम्भवेन द्रव्यत्व( प्रमेयत्वा )द्यनुधावनस्य सन्दर्भविरोधापत्तेः । तन्न । तत्सम्बन्धावच्छिन्नवृत्तिताविशिष्टस्य तत्सम्बन्धेनैव सत्त्वस्वीकारेण समवायेन वृत्तिताविशिष्टस्य संयोगेन कुत्राप्यसत्त्वात्तस्य विरुद्धतया साध्यविरहादेवाऽतिव्याप्तिविरहादिति । अत एव प्रमेयत्वाद्यनुधावनम् । अन्यसम्बन्धेन वृत्तिमतोऽपि तदात्म्यविषयित्वादिसम्बन्धेन वृत्तिः स्वीक्रियत एव, नातः स्वसमवायिसमवेतत्वसम्बन्धेन कम्बुग्रीवादिमतः तादात्म्येन साध्यतायां घटत्वस्य सद्धेतुत्वाभिधानं केवलान्वयिग्रन्थे भट्टाचार्याणामसंगतम् । तत्सम्बन्धावच्छिन्नवृत्तिताविशिष्टस्य तेन सम्बन्धेन तादृशवृत्तितानिरूपक एव सत्त्वं नान्यत्रेत्येतावन्मात्रमेव यदि नियमस्तदा संयोगेनापि साध्यत्वमिति । न च यथा दण्डे रक्तताशून्यतादशायां दण्डवत्यपि पुरुषे रक्तदण्डो नास्तीति प्रतीतिर्जायते विशेषणशून्यकालावच्छेदेन तद्विशेषणविशिष्टाभावस्य विशेष्यवति सर्वसंमतत्वात् । तथा च यत्र कपालद्वयसंयोगनाशाद् घटनाशो जातः तत्र कपालद्वयसंयोगनाशक्षणावच्छेदेन घटवत्यपि कम्बुग्रीवादिमान्नास्तीति प्रतीतिर्भवति कम्बुग्रीवादिमान्नास्तीत्यस्य कम्बुग्रीवारूपविशेषणविरहेण सम्भवादिति, एवं चात्र कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं न घटत्वस्य सम्भवदुक्तिकम्, अतिप्रसंजकत्वात् । कम्बुग्रीवानाशक्षणे घटस्य विद्यमानतया घटो नास्तीति तत्रासम्भवात् घटत्वावच्छिन्नाधि-

करणतायास्तदानीमपि सत्त्वात् "कथं प्रतियोगितावच्छेदकत्वं घटत्वस्ये"ति वाच्यम् । कम्बुग्रीवादिमतः कालिकेन यत्र साध्यता तत्रैवातिव्याप्तौ ग्रन्थतात्पर्यात् । तत्र कालिकसम्बन्धावच्छिन्नकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं घटत्वे सम्भवत्येव । तथाहि यत्र कपालद्वयसंयोगनाशादेव घटनाशो जातस्तत्र कम्बुग्रीवादिरूपकपालद्वयसंयोगनाशक्षणे कालिकसम्बन्धेन कम्बुग्रीवादिविशिष्टस्याऽभावो न वर्त्तते तत्क्षणेऽपि कम्बुग्रीवान्तरविशिष्टस्य घटान्तरस्य सत्त्वात् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताककम्बुग्रीवादिमान्नास्तीति प्रतीतिर्नित्ये एव भवति तत्र कालिकसम्बन्धेन घटो नास्तीत्यपि बुद्धिर्जायते इत्यतिप्रसंगविरहात् । इदं "चैकसम्बन्धावच्छिन्नवृत्तिताविशिष्टस्याऽन्यसम्बन्धेन वृत्तित्वमिति" मतेन । न चैवंसति घटत्वस्य नानात्वेऽपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताककम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं केवलपृथिवीत्वव्याप्यघटत्वेऽपि सम्भवति तेजस्त्वव्याप्यघटत्वेऽपि चाऽतिप्रसङ्गाद्यनापादकत्वात् । एवं च "न च पृथिवीत्वततेजस्त्वादिना सांकर्यांद्युत्तरग्रन्थेन" तस्य नानात्वेन कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वनिराकरणं विरुद्ध्यते इति वाच्यम् । तद्ग्रन्थस्तु नैकमपि घटत्वं कंबुग्रीवादिमदभावप्रतियोगितासमनियतमित्यभिप्रायकः । सिद्धान्तिनां मतेऽपि प्रतियोगितासमनियतस्यैव प्रतिगितावच्छेदकत्वम् । अत एव समनियतधर्मस्य प्रतियोगितावच्छेदकत्वं पूर्वमेव खण्डितम् , पुनर्नैकमपि घटत्वं कंबुग्रीवादिमत्त्वसमनियतमित्युक्तिरसंगतेति शंकापि विरस्ता । एवं च तादृशग्रन्थस्य घटत्वेऽतिप्रसंगाद्यनापादकत्वविरहेणाऽवच्छेदकत्वाभावे न तात्पर्यम् , किन्तु कंबुग्रीवादिमदभावप्रतियोगितायाः सकलघटसाधारण्येन तादृशप्रतियोगितान्यूनवृत्तित्वेन तदभावे, तथाच कंबुग्रीवादिमत्त्वसमनियतमित्यस्य कंबुग्रीवादिव्यापकमित्यर्थः । तथाच घटत्वस्य नानात्वे कंबुग्रीवादिमदभावप्रतियोगितान्यूनवृत्तित्वमेव तदर्थ इति भावः ।

यद्यप्येवमपि यत्रैककपालद्वयसंयोगनाशाद् घटनाशस्तत्रोक्तसंयोगनाशक्षणे तद्घटाधिकरणतद्भूतलावच्छेदेन कालिकसंबन्धेन कंबुग्रीवादिमान्नास्तीति प्रतीतेर्घटो नास्तीत्यप्रतीतेश्च कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकता घटत्वे न संभवति । तथाप्यत्र कालिकसंबन्धावच्छिन्नस्वाधिकरणे कालिकेन वृत्तित्वरूपसमानकालीनत्वसंबन्धेन कंबुग्रीवादिमतः साध्यतायां द्रव्यत्वादौ कालिकेन गगनादेरवृत्तित्वमते नित्ये "गगनादौ" व्यभिचारिणि द्रव्यत्वे एवाऽतिव्याप्तौ ग्रन्थतात्पर्यात् । निरुक्तसमानकालीनत्वसंबन्धावच्छिन्नप्रतियोगिताककंबुग्रीवादिमान्नास्तीति प्रतीतिर्गगनादौ "नित्ये" एव जायते तत्रैव घटो नास्तीत्यस्यापि जायमानत्वात् इति घटत्वेऽतिप्रसंगाद्यनापादकत्वं संभवति । एवं स्वाश्रयसमवेतत्वसंबन्धेन तत्कंबुग्रीवादिविशिष्टस्य यः समानकालीनत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावः तस्य कंबुग्रीवानाशक्षणेऽपि सत्त्वात्तत्र घटस्य समानकालीनत्वसंबन्धेन सत्त्वात्तद्घटीनष्ठतद्व्यक्तित्वे तत्कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं न संभवति, समानकालीनत्वसंबन्धेन तत्तत्कंबुग्रीवादिविशिष्टो नास्तीति प्रत्ययस्तत्कंबुग्रीवादिनाशक्षणे जायते तत्र तत्तत्क्षणे तद्घटो नास्तीति प्रत्ययो न जायते इत्यतिप्रसंगात् । यदि च समानकालीनत्वसंबन्धस्य वृत्त्यनियामकतया नाऽभावप्रतियोगितावच्छेदकत्वमित्युच्यते, तदा कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य निरवच्छिन्नविशे-

षणताविशेष "कालिकसंबन्धावच्छिन्नाधिकरणत्वं" तन्निरूपितस्वसमवायिसमवेतत्वसंबन्धेन वृत्तित्वरूपव्यभिचारित्वसंबन्धेन कंबुग्रीवादिमतः कंबुग्रीवाविशिष्टसंयोगेन साध्यतायामति-प्रसंगो बोध्यः । वै० स्वाश्रयसमवेतत्वमिति । व्यभिचारित्वसंबन्धस्य वृत्तिनियामकत्वन्तु इह हेतावुपाधि नेह हेताविति प्रतीतिबलसिद्धम् । तत्तत्कंबुग्रीवाशून्यकालावच्छेदेन व्यभिचारित्व-संबन्धावच्छिन्नप्रतियोगिताकतत्तत्कंबुग्रीवाप्रतीतिः तत्तत्कंबुग्रीवानाशकालोत्पन्नवस्तुक्षणे जायते तत्र तद्घटो नास्तीति प्रतीतिर्न जायते इत्यतिप्रसंगात्तत्तत्कंबुग्रीवादिमदभावप्रतियोगिता-वच्छेदकं च तद्घटत्वमिति ।

अन्ये तु यथा पृथिवीसमवेतत्वस्योपलक्षणविधयाऽवच्छेदकत्वावगाहिप्रत्ययस्यैव लाघ-वेन समवेतत्वावच्छेदकत्वविषयकत्वम्, तथा प्रकृतेऽपि कंबुग्रीवादिमत्त्वमुपलक्षणतयैव नाभा-वप्रतियोगितावच्छेदकं किंतु घटत्वमेवेत्युच्यते, साध्यताप्यत्र कंबुग्रीवादिमत्त्वस्योपलक्षितस्यैव। न च विशिष्टाभावमादायैव नातिव्याप्तिरिति वाच्यम् । तादृशसाध्यकसद्धेतौ विशिष्टाभावमा-दायाऽव्याप्तेरवश्यं वारणीयतया तन्निवेशेनैव प्रकृते विशिष्टाभाववारणात् । तथाहि—तत्रो-पलक्षणविधयाऽवच्छेदकत्वविशेषणविधयाऽवच्छेदकत्वयोः स्वरूपवैलक्षण्येन प्रतियोगितयो-र्विशेषणविशेष्योभयपर्याप्तत्वाऽपर्याप्तत्वाभ्यां वा विशिष्टप्रतियोगिकसंसर्गस्य शुद्धस्य च प्रति-योगितावच्छेदकत्वाभ्युपगमेन वाऽभावयोर्वैलक्षण्यमभ्युपेत्य महानसीयवन्हिमान् तज्ज्ञानत्वा-दित्यत्र प्रत्येकाभावमादायाऽव्याप्तिवारणाय विवक्षितस्य प्रतियोगिताविशिष्टत्वस्य स्वनिरू-पिताऽवच्छेदकताविशिष्टान्याऽवच्छेदकत्वानिरूपितत्वसंबन्धगर्भे स्ववृत्त्यवच्छेदकतात्वव्या-प्यधर्मवत्त्वनिवेशनम् । साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकवृत्तिसंख्यात्वव्याप्य-धर्मावच्छिन्ननिष्ठावच्छेदकताकपर्याप्तिकत्वस्य प्रतियोगिताविशेषणतया निवेशनं वा, साध्यता-वच्छेदकसंबन्धावच्छिन्नत्वस्य पर्याप्तिसहितस्य वा प्रतियोगितायां निवेश्य तद्वारणायाऽऽदर-णीयमिति वदन्ति ।

परेतु समवायिकारणनाशकनाश्यत्वं कार्येऽभ्युपेत्य तदभिहितमित्याहुः ।

वस्तुतस्तु स्वसमवायितावच्छेदकावच्छिन्नसमवायित्वसंबन्धेन स्ववृत्तिकंबुग्रीवात्वाश्रय-समवायिसमवेतत्वसंबन्धेन कंबुग्रीवादिमतः साध्यत्वे ग्रन्थतात्पर्यम् । तदभावप्रतियोगिताव-च्छेदकं न भवत्येव घटत्वम्, यत्किंचित्कंबुग्रीवादिनाशक्षणेऽपि कंबुग्रीवान्तरस्यैवोक्तसंबन्धेन तद्घटे सत्त्वात् । एतत्कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकं च न तद्व्यक्तित्वं एतद्घट-वति तदभावप्रत्ययप्रसंगात् । एतत्कंबुग्रीवानाशक्षणे एतद्घटो नास्तीति प्रत्ययापत्तेश्च ।

एतेन घटत्वस्यैव तदवच्छेदकत्वमतिप्रसंगाद्यनापादकत्वादिति निरस्तामिति दिक् ।

अथ स्वसमवायिसमवेतत्वसंबन्धेन कंबुग्रीवादिमतः साध्यतायां घटत्वनिष्ठाऽवच्छेदक-तायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वविरहेण कथमतिव्याप्तिरिति चेन्न । साध्य-तावच्छेदकताघटकसंबन्धावच्छिन्नत्वपदेन साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धाव-च्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावस्याऽवश्यं वक्तव्यत्वात्, तथाच घटाभावस्य लक्षणघटकत्वादतिव्याप्तिः संभवतीति । केचित्तु स्वत्वस्याऽननुगतत्वे घटत्वस्य तेन संबन्धे-नाऽभावप्रतियोगितावच्छेदकत्वविरहेऽपि स्वसमवायिसमवेतत्वसंबन्धावच्छिन्नघटत्वनिष्ठाव-

(१)ऽनतिरेकादाह कंबुग्रीवेति। न च कंबुग्रीवादिमत्त्वं कंबुग्रीवादिव्यक्तिरेव(२)
सा च प्रत्येकं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदिकैवेति कुतोऽतिव्याप्ति-

च्छेदकताककालिकसंबन्धावच्छिन्नप्रतियोगिताकस्य घटत्ववदभावस्य यथाश्रुतसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वसंभवादतिव्याप्तिसंगतिः। घटत्वस्य कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वोत्कीर्तनं हि कंबुग्रीवादिमत्त्वस्याऽनवच्छेदकत्वमात्रसंपत्त्यै। अननुगतत्वेपि स्वत्वमुपलक्षणतयैव संसर्गघटकम्, समवायिसमवेतत्वमेव हि संसर्ग इति। न चाऽग्रे स्वाश्रयसमवायिसमवेतत्वरूपपरंपरासंबन्धेन कंबुग्रीवात्वादेरेव साध्यतावच्छेदकत्वमुक्तं लाघवात्, तथाच तेन संबन्धेन घटत्वविशिष्टस्याऽप्रसिद्धिरिति वाच्यम्। घटत्वाश्रयो घटस्तत्समवायी कपालस्तत्समवेतत्वस्य कपालरूपे सत्त्वान्नाऽप्रसिद्धिरित्याहुः।

**कंबुग्रीवादिव्यक्तिरेवेति।** कंबुग्रीवा च कपालसंयोगो बोध्यः। **सा चेति।** एवंच कंबुग्रीवादिमत्त्वस्य कंबुग्रीवात्मकतया नानात्वेन घटत्वाऽसमनैयत्येन प्रतियोगितावच्छेदकतया नातिव्याप्तिरिति भावः। अथ तत्तद्व्यक्ति'कंबुग्रीवान्याक्ति'मदभावप्रतियोगितावच्छेदकत्वमपि साक्षात्संबन्धेन घटनिष्ठतत्तद्व्यक्तित्वे एवाऽभ्युपेयतेऽतिप्रसंगाद्यनापादकत्वात्, नतु तत्तद्व्यक्तौ, तथासति स्वसमवायिसमवेतत्वस्य प्रतियोगितावच्छेदकत्वे गौरवाद्, एवं च "कुतोऽतिव्याप्तिरिति"ग्रन्थाऽसंगतिः। तद्व्यक्तित्वं च तादात्म्येन सैव व्यक्तिः तदनुयोगिकसमवायो वा। न च कंबुग्रीवानाशदशायां भूतले तत्कंबुग्रीवादिमान्नास्तीति प्रतीतिर्जायते तद्व्यक्तिर्नास्तीति प्रतीतिर्न भवति तद्व्यक्तित्वावच्छिन्नस्य तद्देशेपि सत्त्वादिति नाऽतिप्रसंगाद्यनापादकत्वं तद्व्यक्तित्वस्येति न ग्रन्थाऽसंगतिरिति वाच्यम्। यस्य घटस्य स्वावयवाऽनाशेऽपि तत्संयोगनाशादेव नाशस्तत्र तद्घटो नास्तीत्यापत्तिसंभवेऽपि यस्य घटस्य कपालनाशादेव नाशः स तु संयोगनाशक्षणे एव भवति न त्वनन्तरक्षणे, तथा सति घटस्य क्षणमात्रमनाश्रितत्वापातात्, तथाच कंबुग्रीवादिमान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वस्य तत्र तद्घटत्वे संभवेन तत्कम्बुग्रीवादिव्यक्तेरनवच्छेदकत्वेनाऽतिव्याप्तिः सुसंगतैवेति चेन्न। साध्यतावच्छेदकतात्वावच्छेदेनाऽनवच्छेदकत्वग्रहस्यैवाऽनुमितिहेतुत्वेन यत्किंचित्साध्यकेऽनवच्छेदकत्वसत्त्वेऽप्यातिव्याप्त्यभावादिति। न चैवं घटत्वस्यापि कथं कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं यावत्कंबुग्रीवानाशक्षणेऽपि घटो नास्तीति प्रत्ययापत्तेरिति वाच्यम्। महाप्रलयानभ्युपगमेन तादृशक्षणस्यैवाऽप्रसिद्धेः।

वस्तुतस्तु असमवायिकारणनाशस्यैव कार्यनाशं प्रति कारणत्वेन कंबुग्रीवानाशक्षणे घटनाशो न भवितुमर्हति कारणाभावात्, किंतु कंबुग्रीवानाशोत्तरक्षणे एव, तथाच नोक्तग्रन्थाऽसंगतिरिति। केचित्तु जन्यतासंबन्धेन कंबुग्रीवाविशिष्टस्य साध्यताऽभिप्रायकोऽयं ग्रन्थः। न च जन्यतासंबन्धेन कंबुग्रीवादिव्यक्तेरवच्छेदकत्वकल्पनामपेक्ष्य स्वरूपसंबन्धेन तद्व्यक्ति-

(१) व्यासज्यवृत्तिधर्मावच्छिन्नैकदेशवृत्त्यभावानंगीकारे नातिव्याप्तिरिति भावः।
(२) व्यक्तिपदोपादानाद्व्यक्तेर्निरवच्छिन्नावच्छेदकत्वं सूचितमिति भावः।

रिति वाच्यम् । परंपरया संस्थानगतकंबुग्रीवात्वादिजातिमत्त्वस्यैव साध्यतावच्छेदकत्वात्, तस्य च परंपरयाऽवच्छेदकत्वकल्पनामपेक्ष्य लाघवेन घटत्वस्यैव साक्षात्तथात्वादिति भावः ।

---

त्वस्याऽवच्छेदकत्वकल्पने लाघवमस्तीति वाच्यम् । जन्यताया अखण्डोपाधित्वं स्वीकृत्येदमुक्तमित्याहुः । परे तु स्ववृत्तिकंबुग्रीवात्वाश्रयसमवायिसमवेतत्वसम्बन्धेन स्वप्रतियोगिकसमवायानुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकसमवायसंबन्धावच्छिन्नवृत्तितासंबन्धेन वा यत्र कंबुग्रीवाविशिष्टस्य संयोगेन साध्यता तत्रैवादावतिव्याप्तिशंका । तत्र न चेत्यादिनाऽतिव्याप्तिवारणं कृत्वा कंबुग्रीवात्वादेः साध्यतावच्छेदकत्वं प्रकल्प्यातिव्याप्तिर्दत्ता इत्यत्रैव जगदीशतात्पर्यम् । एतादृशसंम्बन्धेन कंबुग्रीवादिमान्नास्तीति प्रतीतिसाक्षिकाभावप्रतियोगितावच्छेदकत्वं तद्व्यक्तित्वे एव स्वीकार्यम्, तद्घटवति एतद्घटो नास्तीति प्रतीतिवत्तत्संबन्धेन कंबुग्रीवादिमान्नास्तीतिप्रतीतिर्न स्याद् भवत्येतद्घटवति देशेपि तादृशसंबन्धेन तत्कंबुग्रीवाविशिष्टस्य घटान्तरस्य सत्त्वादित्याहुः । तन्न । तत्स्थलाऽभिप्रायेण नायं ग्रन्थः । अन्यथा तद्व्यक्तित्वस्याऽवच्छेदकत्वाऽसंभवेऽपि घटत्वस्यैव तत्कंबुग्रीवादिमान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वं स्वीकार्यम्, क्वचिदपि घटवति घटो नास्तीतिवद् तत्कंबुग्रीवादिमान्नास्तीति प्रतीतिर्न भवति स्वप्रतियोगिकसमवायानुयोगितावच्छेदकीभूतकपालत्वावच्छिन्नानुयोगिताकसमवायसंबन्धावच्छिन्नवृत्तितासंबन्धेन तत्कंबुग्रीवाविशिष्टस्य घटस्य सत्त्वादिति ।

न च विशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकेतराऽनवच्छिन्नत्वं प्रतियोगितावच्छेदकतया निवेशनीयम्, तथाच तद्व्यक्तिनिष्ठावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकेतरतद्व्यक्तित्वेनाऽवच्छिन्नत्वात्तादृशाभावस्य लक्षणाऽघटकत्वात्कथमतिव्याप्तिवारणमिति वाच्यम् । तद्व्यक्तेः स्वरूपतो भानमङ्गीकृत्यैव "न च कंबुग्रीवादिमत्त्वम्" इत्याद्युक्तत्वात् । अथवा गुरुधर्मस्याऽवच्छेदकत्वे पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकत्वस्य लाघवाद् पटसमवेतत्वे पटत्वे वा कल्पनीयतया तन्निवेशस्याऽनावश्यकत्वादिति । परंपरया—स्वाश्रयसमवायिसमवेतत्वसम्बन्धेन । संस्थानगतेति । द्रव्यारम्भकाऽवयवसंयोगविशेषवृत्तीत्यर्थः। कंबुग्रीवात्वादिजातीति । कंबुग्रीवात्वं संयोगनिष्ठो घटत्वव्यंजकतावच्छेदको जातिविशेषः। न च संयोगवृत्तिकर्मजन्यतावच्छेदकसंयोगजन्यतावच्छेदकवैजात्याभ्यां सांकर्येण कंबुग्रीवात्वादेः संस्थानवृत्तिजातिविशेषत्वाऽसम्भव इति वाच्यम् । जन्यद्रव्यजनकतावच्छेदकसंयोगवृत्तिवैजात्यस्य संयोगजन्यतावच्छेदकवैजात्यव्याप्यत्वे द्व्यणुकानुत्पत्तिप्रसंगेन कर्मजन्यतावच्छेदकवैजात्यव्याप्यत्वाङ्गीकारात् । तस्य चेति । कंबुग्रीवात्वजातेश्चेत्यर्थः । साक्षात्—समवायेन, तथात्वात्—अवच्छेदकत्वात् । अत्र घटत्वकंबुग्रीवात्वयोर्जातित्वाविशेषेण शरीरकृतगौरवाभावेपि परम्परासम्बन्धप्रयुक्तमेव गौरवमिति । एवं चोक्तपरम्परासंबन्धे हेतुसमानाधिकरणकंबुग्रीवादिमदभावप्रतियोगित्वीयकंबुग्रीवात्वादिरूपजातिनिष्ठावच्छेदकतावच्छेदकत्वापेक्षया लाघवात् समवाये एव तादृशप्रतियोगित्वीयघटत्वनिष्ठाऽवच्छेदकत्वं गुरुधर्मे व्यवस्थापयितुं कंबुग्रीवादिमान्नास्तीति प्रतीतिमादायैव गुरुधर्मस्याऽवच्छेदकत्वं दीधितिकारो व्यवस्थापयिष्यति ।

**ननु पृथिवीत्वतेजस्त्वादिना सांकर्याद्घटत्वं यदि नाना तदा नैकमपि**

नन्वत्र कंबुग्रीवात्वस्य स्वाश्रयसमवायिसमवेतत्वसम्बन्धेन साध्यतावच्छेदकत्वे कंबुग्रीवात्वस्योल्लिख्यमानतया कंबुग्रीवात्वत्वपुरस्कारेणैव भानात् कंबुग्रीवात्वत्वस्याप्यवच्छेदकत्वापत्त्या ततोपि गौरवसंभवे "तस्य च परंपरयेत्यादिना" सम्बन्धमात्रप्रयुक्तगौरवाभिधाने न्यूनतेति चेन्न। समवायेनैव उल्लिख्यमानजातेः स्वरूपतो न भानम्, समवायान्यसंबन्धेनोल्लिख्यमानजातेरपि स्वरूपतो भानमंगीक्रियते, अत एवाऽयं गौरितिज्ञानानन्तरं गोत्वेनेमं जानामीत्यनुव्यवसायोपि संगच्छते। तत्र गोत्वेनेति तृतीयार्थः प्रकारत्वम्, निष्ठत्वसम्बन्धावच्छिन्नाया गोत्वनिष्ठा प्रकारता तादृशप्रकारताशालिज्ञानवानहमित्याकारकानुव्यवसाय इति।

**नन्विति**। पृथिवीत्वं विहाय घटत्वं सौवर्णघटे, घटत्वं विहाय पृथिवीत्वं मटे, उभयोः समावेशः पार्थिवघटे इति। एवं तेजस्त्वेनाऽपि सांकर्यं बोध्यम्। **घटत्वं यदि नानेति**। तथाच यदि तादृशाभावप्रतियोगितावच्छेदकत्वं तैजसघटत्वे स्वीक्रियते, तदा पार्थिवघटत्वावच्छिन्नाधिकरणेऽपि कंबुग्रीवादिमदभावप्रतीतिः स्यात्, पार्थिवघटत्वस्य च तथात्वे तैजसघटाधिकरणेऽपि तादृशप्रतीतिः स्यादित्येव घटत्वस्याऽसमनियतत्वकथने तात्पर्यम्, अन्यथा समनियतत्वस्य प्रतियोगितावच्छेदकत्वेऽतन्त्रत्वेनाऽसंगत्यापत्तेः। केचित्तु समनियतधर्मस्य प्रतियोगितावच्छेदकत्वं पूर्वं खंडितम्, इदानीं समनियतधर्मस्य प्रतियोगितावच्छेदकत्वव्यवस्थापने उन्मत्तप्रलपितं स्यात्, अतः प्रतियोगितासमनियतस्यैव प्रतियोगितावच्छेदकत्वमित्यभिप्रायकोयं ग्रन्थः। घटत्वं यदि नाना तदा कस्यापि घटत्वस्य न कंबुग्रीवादिमान्नास्तीत्यभावप्रतियोगितासमनियतत्वम्, एतदेवोक्तं ग्रन्थेन। न चैतादृशतात्पर्येण 'नैकमपि घटत्वं कंबुग्रीवादिमदभावप्रतियोगितासमनियतमि'त्येव कथनोक्तमिति वाच्यम्। सामान्यभावस्थले प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपतया कंबुग्रीवादिमत्त्वपदेन कंबुग्रीवादिमदभावप्रतियोगित्वस्य धारणादित्याहुः। ननु कंबुग्रीवादिमतो यदि कालिकेन साध्यत्वं तदा कथमयमतिप्रसंगः काले पार्थिवघटत्वाद्यवच्छिन्नस्य सत्त्वादिति चेन्न। एवमपि तादृशघटत्वस्य प्रतियोगितान्यूनवृत्तित्वेन तदवच्छेदकत्वाऽसंभवे एव तात्पर्यात्। **सांकर्यादिति**। अथात्र घटत्वे कथं सांकर्यान्नानात्वं साधितम्, घटत्वस्य नानात्वे सांकर्यमेव न संभवति, घटत्वस्यैकत्वे सांकर्यसंभवेऽपि न तदा नानात्वमिति चेन्न। सांकर्यादित्यस्य सांकर्यापत्तेरित्यर्थकत्वात्, घटत्वमित्यस्य च घटपदार्थतावच्छेदकमित्यर्थकत्वात्, तथाच घटपदार्थतावच्छेदकं नाना सांकर्यापत्तेरित्यनुमानम्। आपत्तेर्हेतुता च विशेष्यतासंबन्धेन बोध्या। घटपदार्थतावच्छेदकत्वं नानावृत्ति सांकर्यापत्तिविशेष्यवृत्तित्वादिति यावत्। आपत्तिश्च घटपदार्थतावच्छेदकं "घटत्वं वा" जातित्वाविशिष्टं यदि नाना न स्यात् पृथिवीत्वादिसंकीर्णं स्यादिति विपक्षबाधकव्याघातः।

"आपाद्याभावहेतुना आपादकाभावस्य सिद्धिः" आपाद्याभावश्च सांकर्याभावः आपादकाभावश्च नानात्वाभावाभावो नानात्वमेवेति घटपदार्थतावच्छेदकं पक्षीकृत्य सांकर्येणैव हेतुना नानात्वसिद्धिः। हेतुतावच्छेदकसम्बन्धश्च स्वनिष्ठप्रतियोगिताकाभाववत्त्वमित्यपि केचित्।

घटत्वं कंबुग्रीवादिमत्त्वसमनियतमत आह घ्राणग्राह्ये(१)ति ।

घ्राणग्राह्यगुणत्वापेक्षया लघोर्ग्राह्य(२)गन्धत्वस्यैव प्रतियोगितावच्छे

नानात्वं च धर्मविशिष्टत्वम् । वै० स्वावच्छिन्नबोधकपदवत्तासंबन्धेन । पदवत्ता च स्वशक्यता-वच्छेदकत्वस्वशक्यतावच्छेदकवृत्तिभेदप्रतियोगित्वोभयसम्बन्धेन, तथाच घटत्वे घटत्वविशिष्टत्वमस्ति, स्वावच्छिन्नबोधकं यद् घटपदं तच्छक्यतावच्छेदकत्वस्य तच्छक्यतावच्छेदकंयत्तेजस्त्वव्याप्यं घटत्वं तद्वृत्तिभेदप्रतियोगित्वस्य च पृथिवीत्वव्याप्यघटत्वे सत्त्वान्नानात्व-संभवात् । परे तु घटपदं पक्षीकृत्य घटपदवत्त्वरूपं नानात्वं सांकर्येण साधनीयम्, तत्र घटपदे "घटपदवत्त्वरूप" नानात्वं च स्वतादात्म्यस्वशक्यतावच्छेदकवृत्तिभेदप्रतियोगि य-त्स्वशक्यतावच्छेदकं तत्कत्वसम्बन्धेन । सांकर्यं च जातिविशिष्टत्वम् । वै० स्वसामानाधिकरण्य-स्वाभाववद्वृत्तित्व-स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसम्बन्धेन । अत्र स्वसामानाधिकरण्यानुक्तौ द्रव्यत्वस्य गुणत्वविशिष्टत्वात्सांकर्यापत्त्या द्रव्यत्वस्य जाति-त्वानुपपत्तेः । स्वाभाववद्वृत्तित्वाऽनुक्तौ स एव दोषः सत्ताविशिष्टत्वाद्द्रव्यत्वस्येति । तृतीयस्या-ऽनुक्तौ सत्ताया जातित्वानुपपत्तिः द्रव्यत्वविशिष्टत्वादिति । न चैतादृशसांकर्यस्य पदेऽभा-वात्स्वरूपासिद्धिरिति वाच्यम् । प्रकृते च वृत्तिताद्वयं भेदप्रतियोगितावच्छेदकता च स्वश-क्यतावच्छेदकत्वस्वसंबन्धेन ग्राह्या । वाच्यतावच्छेदकस्य भेदेपि वाच्यतावच्छेदकत्वेन हि तस्याऽनुगतत्वमेव । न च पटादिव्यभिचारः, जात्यवच्छिन्नशक्तत्वे सतीति हेतौ विशेष-णादिति । ननु पीतद्रव्ये सुवर्णे तेजोभागस्योपष्टम्भकत्वात्तेजस्त्वप्रवाद एव न तु वास्तवतेज-स्त्वं, किन्तु पृथिवीत्वमेव, तथाच घटत्वे तेजस्त्वसामानाधिकरण्यविरहात्सांकर्याभावः । न च काष्ठत्वपाषाणमयत्वमादाय सांकर्यं संभवतीति वाच्यम् । घटत्वमपि कंबुग्रीवात्वादिवद् घटत्वव्यंजकसंस्थानविशेषवृत्त्येवास्तु तावतैव सांकर्याभावाद् । न चैवमपि पृथिवीत्वतेजस्त्वा-देरपि विनिगमनाविरहेण संस्थानगतत्वसंभवेन सांकर्यमस्त्येवेति वाच्यम् । पृथिवीत्वतेज-स्त्वादेः परमाणुसाधारण्यानुरोधेन संस्थानगतत्वाऽसंभवात । एवं सांकर्यस्य जातिबाधक-त्वमप्रामाणिकम् । अत एव प्रकृतसंस्थानगतघटत्वजातिमभिप्रेत्य सांकर्यापादनं च न साधु-तदा घटत्वकंबुग्रीवात्वयोरभेदप्रसंगेन पूर्वग्रन्थाऽसंगतिरित्युक्तावपि न क्षतिरित्यत आह यदीति।

कंबुग्रीवादिमत्त्वस्य कंबुग्रीवादिरूपत्वे नानात्वेनाऽनुगतकंबुग्रीवादिमानितिबुद्ध्यनिर्वाह-कत्वमित्यगत्या कंबुग्रीवात्वादेः संस्थानवृत्तिजातिविशेष्यत्वमभ्युपेत्य कंबुग्रीवादिमत्त्वस्य परम्परासम्बन्धेन तादृशजातिमत्त्वरूपत्वमुपेत्योक्तबुद्धेः परम्परासम्बन्धेन जातिविशेषावगा-हित्वाङ्गीकारेऽपि घटत्वस्य पार्थिवत्वादिव्याप्यत्वेन कतिपयरूपत्वाङ्गीकारेणाऽनुगतघटबुद्धेः समवायेन घटत्वावगाहित्वाङ्गीकारेणैव निर्वाहे संस्थानवृत्तित्वमुपेत्योक्तबुद्धेः परम्परासंबन्धेन घटत्वावगाहित्वाङ्गीकारस्याऽनौचित्यादिति ध्येयम् ।

ग्राह्यगन्धत्वस्यैवेति । न तु गन्धत्वस्येति भावः । अन्यथा-गन्धत्वमात्रस्य प्रति-

(१) घ्राणेनीति पाठान्तरम् ।

(२) परमाणौ तादृशगुणो नास्तीतिवत् गंधो नास्तीत्यप्रत्ययात् ग्राह्येत्युक्तम्, ग्राह्यगंधत्वं च लौ-किकप्रत्यक्षविषयताविशिष्टगंधत्वमिति ।

नाऽप्यनतिरिक्तवृत्तित्वम्, प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रतिव्यक्ति भिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात् ।

न च तथाविधयत्किंचिदेकाभावप्रतियोगितासामान्यशून्याऽवृत्तित्वं तत्,

---

दकत्वं बोध्यम्, (अन्यथा परमाणौ गन्धत्वेन सह घ्राणग्राह्यगुणत्वस्य समनियतत्वाभावाद् गन्धत्वस्य प्रतियोगिताव(१)च्छेदकत्वाभावादिति भावः)

अत्र घ्राणग्राह्यगुणत्वम्, घ्राणग्राह्यत्वे सति गुणत्वाऽ(२)व्यापकजा-

---

योगितावच्छेदकत्वे । घ्राणग्राह्यगुणत्वं च, घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयताविशिष्टगुणत्वम् । नन्वेवं घ्राणग्राह्यगुणाभावप्रतियोगितावच्छेदकं न ग्राह्यगन्धत्वमपि तथासति पार्थिवपरमाणौ ग्राह्यगन्धो नास्तीतिवद् घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयताविशिष्टगुणो नास्तीत्यपि प्रतीतिर्न स्यात् ग्राह्यगन्धत्वावच्छिन्नाधिकरणतायास्तत्र सत्त्वादिति चेन्न । ग्राह्यगन्धत्वपदेन लौकिकप्रत्यक्षविषयताविशिष्टगन्धत्वस्योक्तत्वात् । तथाच परमाणौ लौकिकप्रत्यक्षविषयताविशिष्टगन्धो नास्तीति प्रतीतिरपि भवत्येव, परमाणुगन्धस्य लौकिकप्रत्यक्षाऽसम्भवात् । एवं च घ्राणग्राह्यगुणत्वं यदि घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयताविशिष्टगुणत्वं तदा ग्राह्यगन्धत्वमपि लौकिकप्रत्यक्षविषयताविशिष्टगन्धत्वमेव, नातः पार्थिवपरमाणावतिप्रसङ्गः । घ्राणग्राह्यगुणत्वस्य यथाश्रुतार्थकत्वे गन्धत्वमात्रस्याऽप्यतिप्रसङ्गाद्यनापादकत्वाद् ग्राह्येत्यस्य वैयर्थ्यप्रसङ्गात् ।

अत्रेति । अथात्र घ्राणेन्द्रियजन्यप्रत्यक्षविषयतावैशिष्ट्यं गुणत्वे किं वा गुणत्वाऽव्यापकजातौ विशेषणम् । यदि गुणत्वे तदा तदभावस्य द्रव्यत्वाभावस्वरूपतया तदवच्छेदकत्वं न गन्धत्वे कल्पयितुं शक्यते प्रतियोगितासमनैयत्यविरहादतो गुणत्वाऽव्यापकजातावेव तद्विशेषणम् । एवं च तादृशजातेः साध्यतावच्छेदकत्वे सुरभिर्नास्ति असुरभिर्नास्ति गन्धो नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्कथमतिव्याप्तिरिति चेन्न ! तादृशजातिमत्त्वं तादृशजात्यधिकरणत्वं, तथाच तादृशजात्यधिकरणतात्मकसाध्यतावच्छेदके प्रतियोगिताऽनवच्छेदकत्वसत्त्वादतिव्याप्तिः सम्भवत्येवेति । केचित्तु प्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतातावच्छेदकतावच्छेदकं तद्रूपाविशिष्टावच्छिन्नसाध्यसामानाधिकरण्यरूपलक्षणे साध्यतावच्छेदकतावच्छेदकजातित्वे सुरभित्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वसत्त्वादित्याहुः । परे त्वयमेवाऽस्वरसः कश्चिदित्युक्त्या सूचित इति दिक् ।

दीधितौ नाप्यनतिरिक्तवृत्तित्वमिति । अवच्छेदकत्वमित्यनुषज्यते । ननु अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वप्रवेशेऽपि यत्र समवायेन कंबुग्रीवात्वविशिष्टस्य स्वसमवायिसमवेतप्रतियोगिकसंयोगेन साध्यता तत्र प्रमेयत्वेऽतिव्याप्तिः, तथाहि—स्वसमवायिसमवेतप्रतियोगिकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताककंबुग्रीवाभावप्रतियोगितावच्छेदकत्वं अतिप्र-

---

(१) प्रतियोगितानवच्छेदकत्वादिति पाठान्तरम् । (२) गुणत्वव्याप्यजातिमत्त्वमिति पाठान्तरम् ।

तिमत्त्वम्, तेन गन्धत्वस्य लघोः समनैयत्ये तात्पर्यमिति (१)कश्चित् ।

[ अतथात्वेन-प्रतियोगितानवच्छेदकत्वेन, तेन रूपेण-प्रमेयधूमत्वादिरूपेणेत्यर्थः ] व्यभिचारिणि-प्रमेय(२)त्वादौ, [ सपक्षवृत्तिप्रमेयत्वादौ ] तेन विरुद्धे साध्यसामानाधिकरण्याभावादतिव्याप्त्यभावेऽपि न क्षतिः ।

नापीति । तादृशप्रतियोगितायास्तद्व्यक्तित्वावच्छिन्नाभाववद्वृत्तित्वमपि नेत्यर्थः । तेन तादृशप्रतियोगिताप्रतियोगिकाभाववद्वृत्तितया धूमत्वादेरवच्छेदकत्वाभावादातिप्रसङ्गसम्भवात् स्वरूपसम्बन्धात्मिकाया इत्यस्य न वैयर्थ्यम्, न वाऽग्रिम(३)ग्रन्थविरोध इति ध्येयम् ।

---

सज्ञायनापादके घटत्वे एव स्वीकरणीयम्, प्रतियोगितावच्छेदकसम्बन्धलाघवानुरोधात्, यत्रैवोक्तसम्बन्धेन कंबुग्रीवा नास्तीति प्रत्ययः तत्रैव संयोगेन घटो नास्तीति प्रत्ययः, तथाच तत्प्रतियोगिताया घटे एव सत्त्वेन साध्यतावच्छेदकीभूतकंबुग्रीवात्वस्य तादृशप्रतियोगित्वाभाववति कंबुग्रीवायां सत्त्वेन प्रतियोगिताऽतिरिक्तवृत्तित्वादिति चेन्न । तथासति तत्प्रतीतेः प्रतियोग्यंशे भ्रमत्वापत्तेस्तस्य चाऽस्वीकारात् । एवमुक्तसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वं कंबुग्रीवात्वे एव कथं न स्वीक्रियते, साक्षात्सम्बन्धस्यैव प्रतियोगितावच्छेदकताघटकतया गौरवानवकाशात् । न चैवमपि प्रतियोगितावच्छेदकसम्बन्धांशे गौरवमिति वाच्यम् । प्रतियोगितावच्छेदकसम्बन्धलाघवस्य प्रतियोगितावच्छेदकलाघवाऽप्रयोजकत्वात्, प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धलाघवस्य प्रतियोगितावच्छेदकलाघवपर्यवसायित्वादिति ।

अथवा वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वमेव हेतुमतीति यद्वाकल्पाभिप्रायेण, तन्मते प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्याऽनिविष्टतया शुद्धसंयोगादिसम्बन्धावच्छिन्नाभावमादायैवाऽतिव्याप्तिवारणसम्भवादिति ।

अथ प्रतियोगिताऽनतिरिक्तवृत्तित्वमित्यस्य प्रतियोगित्वाभाववदवृत्तित्वमेव यथाश्रुतोऽर्थः, एवं च प्रतियोगितायाः प्रतिव्यक्ति भेदेन भिन्नत्वं स्वीकृत्याऽतिव्याप्तिदानं न सङ्गच्छते, प्रतियोगिताया ऐक्येपि तादृशप्रतियोगित्वघटोभयाभाववति धूमे धूमत्वस्य वृत्तितयाऽतिव्याप्तिसम्भवाद् इति चेत्तत्राह तेनेति । तत्तद्व्यक्तित्वेन प्रतियोगिताया निवेशनेनेत्यर्थः । एवं च नोभयाभावमादायाऽतिव्याप्तिसम्भव ऐक्यपक्षे । ननु प्रतियोगिताया भिन्नत्वमतेऽपि प्रतियोगितात्वावच्छिन्नाभावनिवेशेनैव नातिव्याप्तिरत आह नवेति । "न च तथाविधयत्किंचिदेकाभावप्रतियोगितासामान्यशून्याऽवृत्तित्वं" इत्यत्र सामान्यपदस्यापि तदर्थकतया विरोध इति भावः । तथाच प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितात्वसमानाधिकरणोभया-

---

( १ ) कश्चिदित्यस्वरसः—घ्राणग्राह्याया गुणत्वाव्यापकजातेः साध्यतावच्छेदकस्थले सुरभित्वावच्छिन्न-असुरभित्वावच्छिन्न-गन्धत्वावच्छिन्नप्रतियोगिताकाभावमादाय नातिव्याप्तिरिति ।

( २ ) आदिपदाद् द्रव्यत्वपरिग्रहः, तेन गुणाभावप्रतियोगितावच्छेदकत्वस्य गुणत्वे सत्त्वेपि न क्षतिः ।

( ३ ) उत्तरग्रन्थेति पाठान्तरम्।

वृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वमेव परिभाषिकांऽवच्छेदकत्वं तदन्यत्वं साध्यतावच्छेदके विवक्षणीयम् , एवं च प्रतियोगितायाः प्रतिव्यक्ति भेदेन भिन्नत्वं स्वीकृत्याऽतिव्याप्तिर्दत्ता, तथाहि–तादृशप्रतियोगित्वघटोभयाभावस्योभयावृत्तिधर्मानवच्छिन्नत्वाद् वारणेऽपि धूमाभावीयप्रतियोगित्वनिष्ठतत्तद्व्यक्तित्वावच्छिन्नाभावस्य च प्रत्येकं तत्तद्धूमे सत्त्वाद् धूमत्वस्य तत्र वृत्तित्वा(१)दिति ।

अथात्र हेतुसमानाधिकरणाभावीयतद्व्यक्तित्वेतरधर्मानवच्छिन्नतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्य इतरवारकन्यूनवारकसहितस्यैव प्रकृते निवेशः कार्यः । तथाहि—हेतुसमानाधिकरणाभावप्रतियोगिताव्यक्तित्वावच्छिन्नत्वस्य प्रमेयत्वेन विशिष्टं यद्वन्ह्यभावप्रतियोगिताव्यक्तित्वावच्छिन्नं प्रतियोगित्वं तन्निरूपकाभावाधिकरणघटितस्य तद्व्यक्तित्वावच्छिन्नतत्क्षणविशिष्टप्रतियोगिताकाभावाधिकरणघटितस्य वाऽभावस्य तद्व्यक्तिवृत्तितद्व्यक्तित्वावच्छिन्नाभावाधिकरणतत्तद्व्यक्तिनिष्ठवृत्तित्वघटिताभावस्य तद्व्यक्तित्वावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितेत्यादिवृत्तितात्वानिष्ठावच्छेदकताकप्रतियोगिताभावान्तर्गतत्वे वह्नित्वे सत्त्वेनाऽव्याप्त्या तत्तद्व्यक्तित्वावच्छिन्नत्वादीनामितरवारकस्य निवेशः । सति च तस्मिन् हेतुसमानाधिकरणाभावीयप्रतियोगिताव्यक्त्यभावाधिकरणनिरूपितवृत्तित्वाभावस्य वह्नित्वे इव धूमत्वेऽपि प्रतियोगितायाः प्रतिव्यक्तिभेदेन भेदाऽभावेऽपि धूमाभावप्रतियोगित्वव्यक्तिघटोभयाभावाधिकरणनिरूपितवृत्तित्वसत्त्वेनाऽभावाद् अतिव्याप्तिः स्याद् वह्न्यभावप्रतियोगिताव्यक्तित्वहेतुसमानाधिकरणाभावप्रतियोगिताव्यक्तित्वअन्यतरावच्छिन्नप्रतियोगिताकाभावघटिताऽभावस्य वह्नित्वे सत्त्वेनाऽव्याप्तिरतस्तद्व्यक्तित्वेतरधर्मानवच्छिन्नत्वनिष्ठाऽवच्छेदकतानिरूपितत्वस्य निवेशः । तद्व्यक्तेः स्वरूपतो भानाभ्युपगमेन तद्व्यक्त्य-

---

(१) परे तु हेतुसमानाधिकरणाभावीयप्रतियोगितात्वसमानाधिकरणोभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव इत्यादिनिवेशे यावत्त्वावच्छिन्नाभावमादायाऽव्याप्तिः, यावत्त्वावच्छिन्नाभावीयप्रतियोगिवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावाऽसिद्धेरतः प्रतियोगिभेदेन प्रतियोगित्वस्य भिन्नत्वमवश्यं स्वीकारणीयम् , तथाच घटाद्यात्मकयावत्त्वावच्छिन्नाभावीयप्रतियोगितावृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्य तद्घटादौ प्रसिद्धत्वान्नाऽव्याप्तिः । एवं च व्यभिचारिण्यतिव्याप्तिर्दुर्वारैव । न च यावत्त्वावच्छिन्नाभावमादायाऽव्याप्तिवारणाय हेतुसमानाधिकरणाऽभावे यत्किञ्चित्त्वं निवेशनीयमिति वाच्यम् । तदाऽग्रिमकल्पाऽभेदप्रसङ्गादित्याहुः ।

अन्ये तु स्वरूपसंबन्धात्मकप्रतियोगित्वस्य प्रतिव्यक्तिभेदेन भिन्नत्वमते सप्तपदार्थातिरिक्तपदार्थत्वेन प्रतियोगितात्वस्यापि न प्रतियोगिताभिन्नत्वम् , तथा च प्रतियोगितात्वस्य नानात्वेन धूमवान् वन्हेरित्यत्राऽतिव्याप्तितादवस्थ्यात् , धूमाभावीयप्रतियोगितात्वावच्छिन्नाभाववति धूमान्तरे धूमत्वस्य वृत्तित्वात् । न च प्रतियोगितात्वस्य नानात्वे धूमो नास्तीति प्रतीतौ एकविधधूमसामान्याभावविषयकत्वानुपपत्तिस्तत्र धूमत्वावच्छिन्नप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितानिरूपकतावत्वं तद्विषयीभूताभावे बोध्यते, तत्र प्रतियोगितात्वस्य नानात्वे तादृशनिरूपकतावत्वस्य तद्धूमाभावे पर्यवसानादिति वाच्यम् । प्रतियोगितात्वस्य नानात्वेपि धूमाभावीयप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितानिरूपकतावत्वस्य धूमाभावत्वावच्छेदेन स्वीकारात् । तथाच धूमवान् वह्नेरित्यादावतिव्याप्तितादवस्थ्यम् । अस्माकन्तु न च तथाविधेत्यादिकल्पे हेतुसमानाधिकरणाभावीयप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नाभावकूटनिवेशान्नोक्तदोषः । न चाऽत्रापि कल्पे तादृशकूटनिवेशेनैव वारणमिति वाच्यम् । यावत्त्वावच्छिन्नाभावमादायाऽव्याप्तिवारणाय हेतुसमानाधिकरणाभावं यत्किंञ्चित्त्वनिवेशस्याऽवक्तव्यतया ... वदन्ति ।

धिकरणनिरूपितवृत्तित्वाभावादिकमादायाऽव्याप्तिवारणाय. प्रतियोगित्वानिष्ठावच्छेदकतानिरूपितत्वादिनिवेशः । एवं तद्रूपवान् तद्रसादित्यत्र यावदभावीयतद्रूपनिष्ठप्रतियोगिताव्यक्तिन्तद्व्यक्तित्वेनोपादाय तद्व्यक्त्यभावाधिकरणनिरूपितवृत्तित्वाभावस्य तद्रूपत्वे सत्त्वादव्याप्तिरिति चेद् । यावत्त्वानवच्छिन्नप्रतियोगिताकहेतुसमानाधिकरणाभावनिवेशेन तद्वारणादतिव्याप्त्यनुधावनमिति । न चोत्तरकल्पेऽपि यावदभावस्यैतादृशनिवेशेनैव वारणाद् यत्किंचित्त्वनिवेशनं व्यर्थम् । लाघवेनैव तत्सम्भवात् तत्तद्व्यक्त्यभावमादायाऽसम्भवाच्च । न च विषयितया यावत्साध्यकव्यभिचारिणि अतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नत्वयावत्त्वावच्छिन्नत्वोभयाभावस्य विवक्षितत्वादिति । प्रतियोगिवैयधिकरण्यघटितलक्षणे यावदभावमादायाऽव्याप्तिर्न सम्भवतीत्यतिव्याप्त्यनुधावनमिति वा । न च प्रतियोगिवैयधिकरण्यप्रवेशेऽपि तद्घटीयरसभिन्नपटीयरूपोभयाभावमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम् । तस्याऽग्रिमकल्पेपि तुल्यत्वात् । यत्तु अग्रिमकल्पेऽप्यव्याप्तेर्वक्ष्यमाणत्वेन यावदभावमादाय सम्भवन्तीमप्यव्याप्तिमप्रदर्श्यातिव्याप्तिमात्रं प्रदर्शितमिति । तन्न । अग्रिमकल्पे वारणीयाया उक्ताऽव्याप्तेः प्रदर्शनस्यैवोचितत्वादिति ।

केचित्तु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितावृत्तिउभयाऽवृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकः तद्व्यक्तिर्नास्तीत्याकारकः प्रथमाभावनिवेशः, अन्यथा महानसीयवह्न्यादिरूपतत्तद्व्यक्त्यभावस्यापि प्रतियोगिव्याधिकरणहेतुसमानाधिकरणतया प्रतियोगिव्यधिकरणहेतुसमानधिकरणभावीयप्रतियोगिताशून्यत्वं नास्तीत्यभावस्याऽप्रसिद्धतयाऽसम्भवः स्यात् । प्रतियोगिव्याधिकरणहेतुसमानाधिकरणतदभावप्रतियोगिताशून्यत्वनिवेशे च यत्किंचिदेकाभावप्रतियोगितासामान्यशून्याऽवृत्तित्वेत्यादिवक्ष्यमाणग्रन्थेन सह पौनरुक्त्यं स्यादिति । द्वितीयाभावश्च तद्व्यक्तित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वन्नास्तीत्याकारः, तद्व्यक्तित्वनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नाऽवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ननिरवच्छिन्नत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतेत्यादिक्रमेण सकलपदार्थानामितरवारकन्यूनवारकपर्याप्तिसहितः । तद्व्यक्तित्वनिष्ठानिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकताया इतरवारकपर्याप्त्यनिवेशे प्रतियोगिव्यधिकरणहेतुसमानाधिकरणीभूतघटाभावीयप्रतियोगितानिष्ठतद्व्यक्तित्ववह्न्यभावीयप्रतियोगितानिष्ठतद्व्यक्तित्वएतदन्यतरनिष्ठावच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्यापि तादृशाभावाक्रान्ततया वह्नित्वादौ तत्सत्त्वेन वह्नित्वादावपि पारिभाषिकावच्छेदकत्वापत्तिः । न चान्यतरनिष्ठावच्छेदकतायां अन्यतरत्वनिष्ठावच्छेदतानिरूपितत्वसत्त्वेन निरवच्छिन्नत्वविरहात् तद्व्यक्तित्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वन्नास्तीति सामान्याभावाक्रान्तत्वविरह इति वाच्यम् । अन्यतरस्य स्वरूपतो भाननये तादृशसामान्याभावाक्रान्तत्वसम्भवात् । यदि चाऽन्यतरस्य स्वरूपतो भानमप्रामाणिकमिति विभाव्यते, तदा निरवच्छिन्नतद्व्यक्तित्वनिष्ठावच्छेदकताया इतरवारकपर्याप्तिर्न निवेश्या प्रयोजनविरहादिति विभावनीयम् । अथ तद्व्यक्तित्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वानिवेशे प्रयो-

जनविरह इति चेन्न । सामानाधिकरण्यघटितंसामानाधिकरण्यसम्बन्धेन तद्धूमवृत्तिताविशिष्टप्रतियोगिव्यधिकरणहेतुसमानाधिकरणीभूतधूमाभावप्रतियोगितानिष्ठतद्व्यक्तित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावाधिकरणवृत्तित्वाभावस्य धूमत्वे विरहेण तादृशवृत्तितावद्धर्मो नेति तृतीयाभावस्य धूमत्वादौ सत्त्वात् धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । निरवच्छिन्नत्वनिवेशे तादृशतद्व्यक्तित्वनिष्ठावच्छेदकतायां तादृशवृत्तितावैशिष्ट्यनिष्ठावच्छेदकतानिरूपितत्वसत्त्वेन निरवच्छिन्नत्वविरहात् तादृशाभावस्य निवेशाकान्तत्वाभावेनातिव्याप्तिव्युदासादिति । प्रतियोगित्वनिष्ठावच्छेदकताया इतरवारकपर्याप्त्यनिवेशे सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धेन पटनिष्ठव्यक्तित्वविशिष्टघटाभावीयप्रतियोगितानिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकताकाभावनिष्ठनिरूपकताकाधिकरणताया घटे एव वर्त्तमानतया तादृशप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावाभावस्य वह्नित्वादौ सत्त्वादव्याप्तिः । न च तादृशप्रतियोगित्वावच्छिन्नाधिकरणतायाः पटे सत्त्वेऽपि तादृशप्रतियोगिताकाभावसत्त्वे को बाधकः, तादृशप्रतियोगित्वावच्छिन्नाधिकरणतायास्तादृशप्रतियोगित्वावच्छिन्नाभावविरोधित्वादिति वाच्यम् । प्रतियोगिताकाभावनिरूपकतासम्बन्धेन प्रतियोगिताविशिष्टाभाव इति । तथा च सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धघटकचरमवृत्तिता यत्सम्बन्धावच्छिन्ना तत्तत्सम्बन्धावच्छिन्नावच्छेदकप्रथमवृत्तिता यत्सम्बन्धावच्छिन्ना तत्सम्बन्धावच्छिन्ननिरूपकताकाधिकरणता प्रथमसामानाधिकरण्यं यत्तदन्तर्भावेन तत्रैव स्वीकारात् । एवं च पटवृत्तित्वाधिकरणनिरूपितवृत्तित्वमभावे स्वरूपसम्बन्धेन प्रतियोगितायामभाववृत्तित्वं निरूपकतासम्बन्धेनेति निरूपकत्वसम्बन्धावच्छिन्नतादृशप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितस्वरूपसम्बन्धावच्छिन्नअभावनिष्ठनिरूपकताकाधिकरणतायाः पटे एव सत्त्वादिति पटनिरूपितवृत्तिताविशिष्टतादृशप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्य वह्नित्वादौ सत्त्वेन तद्दोषतादवस्थ्यम्, अतोऽभावत्वनिष्ठावच्छेदकताया इतरवारकनिवेशः । तादृशप्रतियोगिताकाभावाधिकरणपटनिरूपितवृत्तित्वन्नास्तीत्यादिक्रमेण तु तद्विशेषाभावमादाय तद्दोषतादवस्थ्यात् तत्तत्पदार्थानां इतरवारकपर्याप्तिनिवेशः स्वयमूहनीयः । तद्व्यक्तेः स्वरूपतो भानात् तद्व्यक्तित्व तद्व्यक्तिनिरूपितवृत्तितावान्न तदधिकरणनिरूपितवृत्तितावान्नेत्यादिक्रमेण तत्तद्विशेषाभावमादाय तद्विशेषिततृतीयाभावस्य धूमत्वादौ सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरतः सकलपदार्थानां न्यूनवारकपर्याप्तिर्निवेश्येति प्राहुः ।

अथोक्तरीत्या सामान्याभावनिवेशे तादात्म्येन तद्व्यक्तिभिन्नप्रमेयसाध्यकवाच्यत्वादिहेतौ "प्रतियोगिताया ऐक्येपि" अतिव्याप्तिसम्भवे प्रतियोगिताभेदस्वीकारो व्यर्थः, तथा हि—प्रातियोगिव्यधिकरणहेतुसमानाधिकरणतद्व्यक्तिभिन्नप्रमेयाभावीयप्रतियोगितानिष्ठोभयाऽवृत्ति "तत्तद्व्यक्तित्वरूप" धर्मावच्छिन्नप्रतियोगिताकाभावाधिकरणत्वस्य तद्व्यक्तत्वेव प्रसिद्ध्या तादृशप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तितात्वस्य तद्व्यक्तिनिरूपितवृत्तितात्वापेक्षया गुरुतया तदवच्छिन्नाभावाऽप्रसिद्ध्या साध्याभावस्य लक्षणाघटकत्वादभावान्तरमादायाऽतिव्याप्तिरिति चेत् । सत्यम् । तादृशप्रतियोगिताकाभावाधिकरणत्वसमानाधिकरणोभया-

वृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावं "तद्व्यक्तिनिरूपितवृत्तित्वन्नास्तीत्याकारकप्रतीतिसाक्षिकाऽभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकूटत्वविशिष्टवद्धर्मो नेति तृतीयाभावस्य विवक्षणात्, तथा च तादृशकूटत्वावच्छिन्नवान् यो धर्मः स एव परिभाषिकाऽवच्छेदकः तदन्यत्वं साध्यतावच्छेदके विवक्षणीयमिति। तथाचोक्तस्थले नातिव्याप्तिरतः प्रतियोगितायाः प्रतिव्यक्ति भेदेन भिन्नत्वं स्वीकरणीयम्। न चैवमपि यत्र तादात्म्येन तद्व्यक्तिभिन्नप्रमेयवतस्तादात्म्येन साध्यता तत्र तादृशतद्व्यक्तिनिरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितायास्तद्व्यक्तावेव प्रसिद्धतया तद्व्यक्तिनिरूपितवृत्तित्वन्नास्तीत्यभावस्य तद्व्यक्तिनिष्ठतादात्म्यसम्बन्धावच्छिन्नवृत्तितारूपतद्व्यक्तिर्नास्तीत्यभावे एव पर्यवसानात्। तादृशवृत्तित्वावच्छिन्नाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध्याऽभावान्तरमादायाऽतिव्याप्तिरिति। न च तद्व्यक्तिनिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नवाच्यत्वावच्छिन्नतद्व्यक्तित्वावच्छिन्ना वृत्तिता इति न तद्व्यक्तिनिरूपितवृत्तित्वाभावस्य तद्व्यक्तिर्नास्तीत्यभावे पर्यवसानं सम्भवतीति वाच्यम्। तथासति वह्निमान् धूमादित्यादौ तादृशप्रतियोगिताकाभावाधिकरणनिरूपितप्रमेयत्वावच्छिन्नवाच्यत्वावच्छिन्नवृत्तितामादाय तस्याः प्रमेयत्ववाच्यत्वस्वरूपतया केवलान्वयित्वेन तदभावकूटाऽप्रसिद्ध्याऽव्याप्तिभयेन केवलान्वयितानवच्छेदकधर्मावच्छिन्नवृत्तितानिवेशस्यावश्यकतया प्रमेयत्वावच्छिन्नवाच्यत्वावच्छिन्नवृत्तितावारणसम्भवेन तद्व्यक्तिनिरूपिततद्वृत्तित्वावच्छिन्नाभावस्य तादृशवृत्तितारूपतद्व्यक्तिर्नास्तीत्यभावे पर्यवसानसम्भवात्। न चैवमपि तद्व्यक्तिनिरूपिततत्प्रकारत्वावच्छिन्नतद्विशेष्यत्वावच्छिन्ना नानैव वृत्तिता इति न तद्व्यक्तिर्नास्तीत्यभावे पर्यवसानं सम्भवतीति वाच्यम्। तथासति तादृशस्थलेऽप्यतिव्याप्तिवारणेऽपि यत्र तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकतादात्म्यतद्व्यक्तिभिन्नप्रमेयवद्व्यक्तित्वावच्छिन्नप्रतियोगिताकतादात्म्याऽन्यतरसम्बन्धेन तद्व्यक्तिभिन्नप्रमेयवतः साध्यतायां तादृशप्रतियोगिताकाभावाधिकरणतद्व्यक्तिनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तिता तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकतादात्म्यसम्बन्धावच्छिन्नैकैव तद्व्यक्तित्वावच्छिन्नवृत्तिता इति तद्व्यक्तिनिरूपितवृत्तित्वाभावस्य तादृशवृत्तितारूपतद्व्यक्तिर्नास्तीत्यभावे पर्यवसानसम्भवात्तदभावाऽप्रसिद्ध्याऽभावान्तरमादायाऽतिव्याप्तिरिति चेन्न। तादृशप्रतियोगितावृत्तिउभयावृत्तिधर्मावच्छिन्नाभावाधिकरणनिरूपितवृत्तितात्ववृत्तिउभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिककूटत्वावच्छिन्नवान् यो धर्मः स एव पारिभाषिकाऽवच्छेदकस्तदन्यत्वस्य साध्यतावच्छेदके विवक्षणान्न कोऽपि दोष इति।

अस्यानुगमस्तु हेत्वधिकरणवृत्ति "प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतावान्नेति" भेदीयप्रतियोगितानिरूपिताऽधिकरणत्वनिष्ठावच्छेदकतानिरूपितनिरूपकतानिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रतियोगिताविशिष्टान्यत्वं साध्यतावच्छेदके निवेशनीयम्। वै० स्ववृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्ववृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटवत्त्वसम्बन्धेनेति।

अथ व्यासज्यवृत्तिधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकः स्वसमनियतव्यासज्यवृत्तिधर्म एव, तथाच तादृशाऽभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वनिवेशाऽसम्भवः; अभावत्वस्याऽव्यासज्यवृत्तितया कूटानुयोगिताऽनवच्छेदकत्वात् "व्यासज्यवृत्तिपर्याप्तेर्व्यासज्यवृत्तिधर्मावच्छेदेनैव स्वीकारात्" । यत्तु तादृशाऽभावत्वव्यापककूटत्वनिवेशे न दोष इति । तन्न, तथासति निरुक्तस्थले एव तादृशवृत्तितारूपतद्व्यक्तिप्रतियोगिकाभावरूपतद्व्यक्तिवृत्तिभेदप्रतियोगितावच्छेदकत्वत्वापेक्षया तादृशाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्ध्या तादृशाभावत्वव्यापकत्वनिवेशाऽसम्भवात् । नच तादृशप्रतियोगिताविशिष्टधर्म एव पारिभाषिकाऽवच्छेदकः । वै० स्ववृत्त्युभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावाऽवृत्तित्वसम्बन्धेन, अभावनिरूपितवृत्तिता च सामानाधिकरण्यसम्बन्धेन, सामानाधिकरण्यघटकाधिकरणता साध्यतावच्छेदकताघटकसम्बन्धेन, वृत्तिता च स्वरूपसम्बन्धेनेति न दोष इति वाच्यम् । तथासति निरुक्तस्थले एव तादृशाभावनिरूपितवृत्तित्वाभावस्य व्यभिचारनिरूपकाधिकरणतद्व्यक्तिर्नास्तीत्यभावे पर्यवसानसम्भवेन तादृशसम्बन्धस्य गुरुधर्मावच्छिन्नप्रतियोगिताकाऽभावरूपतयाऽप्रसिद्ध्या तादृशनिवेशाऽसम्भवात् । न च तादृशवृत्तितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन प्रतियोगितावैशिष्ट्यं पारिभाषिकावच्छेदके निवेश्यमिति वाच्यम् । तादृशवृत्तितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य तद्व्यक्तिर्नेति भेदे एव पर्यवसानसम्भवेन निरुक्तभेदप्रतियोगितावच्छेदकत्वस्य तद्व्यक्तित्वे एव कल्पयितुमुचितत्वेन तादृशवृत्तितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपसम्बन्धस्याऽप्रसिद्ध्या उक्तस्थलेऽतिव्याप्त्यापत्त्या तेन सम्बन्धेन प्रतियोगितावैशिष्ट्यनिवेशाऽसम्भवात् । न च तादृशवृत्तितावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वसम्बन्धेन प्रतियोगितावैशिष्ट्यं निवेशनीयम्, न च तदवच्छेदकं तद्व्यक्तित्वम् व्यधिकरणत्वादिति वाच्यम् । स्वकालीनतद्व्यक्तिमत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावे एव पर्यवसानसम्भवात् "स्वकालीनतद्व्यक्तित्वस्यैव प्रतियोगितावच्छेदकत्वौचित्येन" तादृशाभावस्य गुरुसम्बन्धावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध्योक्तव्यभिचारिणि अतिव्याप्तिः, वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वेऽतिव्याप्तिश्चेति चेन्न । स्ववृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तितावत्त्वसम्बन्धावच्छिन्नसम्बन्धितावत्त्वसम्बन्धेन प्रतियोगिताविशिष्टधर्म एव पारिभाषिकावच्छेदक इति । सम्बन्धितावत्ता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । अत्र सम्बन्धिताव्यक्तेः स्वरूपतो भानात् तद्व्यक्तिनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य न कस्मिन्नप्यभावे पर्यवसानं सम्भवतीति न गुरुधर्मावच्छिन्नप्रतियोगिताकत्वमिति विभावनीयम् ।

केचित्तु तादृशवृत्तितावृत्तित्वमवच्छेदकत्वम् । वृत्तिता च स्वाश्रयवत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वाश्रयवत्ता च स्वनिरूपितवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, तथाच न कोपि दो० इति वदन्ति ।

परे तु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताविशिष्टकूटत्वावच्छि

स्वरूपसम्बन्धात्मिकाया इति प्रतिव्यक्तिभिन्नत्वे हेतुः । तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थः । तत्तत्प्रतियोगिमात्रस्वरूपत्वे सामान्याभा

---

न्नवत्त्वम् । प्रतियोगितावै० कूटत्वे स्वविशिष्टवृत्तितात्वव्यापकत्वसम्बन्धेन, स्वं प्रतियोगिता । वृत्तितायां स्ववै० स्वनिष्ठोभयावृत्तिधर्मपर्याप्तावच्छेदकताकप्रतियोगिताकाभाववन्निरूपितत्वसम्बन्धेन, स्वं प्रतियोगिता, व्यापकता च स्वाश्रयाभावीयोभयावृत्तिधर्मावच्छिन्नप्रतियोगितावत्त्वसम्बन्धेनेत्याहुः ।

अन्ये तु तादृशप्रतियोगितावृत्तिउभयावृत्तिधर्मावच्छिन्नाभावाधिकरणवृत्तित्वमेव प्रतियोगितावच्छेदकत्वमिति । वृत्तिता च स्वाधिकरणवृत्तित्वसम्बन्धावच्छिन्नेति, तथाच नोक्तदोषाणामवकाश इति प्राहुः ।

दीधितौ **स्वरूपसम्बन्धात्मिकाया इति । अयमभिप्रायः** । धूमो नास्तीति विशिष्टवैशिष्ट्यावगाहिनी बुद्धिः धूमत्वविशिष्टस्याऽभावे सम्बन्धमवश्यमेव गोचरयति, अन्यथा विशिष्टवैशिष्टयावगाहित्वानुपपत्तेः । स च न संयोगसमवायादिः, अभावे तदसम्भवात् । अधिकरणस्वरूपत्वाभ्युपगमपक्षे अधिकरणस्य संयोगसमवायादिसम्भवेऽपि प्रतियोना तदसम्भवात । कैवल्यव्याघातात् पदार्थान्तरस्य प्रमाणपथाऽनारोहितत्वादिति स्वरूपमेवोभयोः सम्बन्धः । स एव प्रतियोगितात्वेनाऽभावबुद्धिगोचरतया व्यवह्रियते । संसर्गता च न धूमत्वेन ~~प्य~~भावत्वेन उभयाननुगमात् , किन्तु प्रतियोगितात्वेन । तच्च अतिरिक्तविषयता विशेषणाभावबुद्धिविशेषरूपम् वा । तादृशज्ञानाऽविषयं सत्संसर्गतावच्छेदकमित्यन्यदेतत् ।

**प्रतिव्यक्तिभिन्नत्वे हेतुरिति** । यतः स्वरूपसम्बन्धात्मिका अतः प्रतिव्यक्तिभिन्नेति तदर्थः । यतः स्वरूपसम्बन्धात्मिका "प्रतियोगितदभावोभयस्वरूपा धूमाभावनिरूपितप्रतियोगिस्वरूपा अभावस्वरूपा चेत्यर्थः" अतः प्रतिव्यक्तिभिन्ना यतः प्रतिव्यक्तिभिन्ना अतो धूमत्वादौ तदतिरिक्तवृत्तित्वम् , "धूमाभावीयतत्प्रतियोगित्वाभावाधिकरणनिरूपितवृत्तित्वम्" अतो धूमत्वादेरनवच्छेदकत्वापाताद्व्यभिचारिण्यतिप्रसङ्गादिति शेषः । तथाचाऽवच्छेदकत्वपदार्थः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताऽनतिरिक्तवृत्तित्वाभाववान् स्वरूपसम्बन्धात्मकत्वप्रयोज्यप्रतिव्यक्तिभिन्नत्वप्रयोज्यतदतिरिक्तत्वप्रयोज्यधूमत्वादिनिष्ठाऽनवच्छेदकत्वप्रयोज्यव्यभिचारिण्यतिप्रसङ्गादिति भावः ।

ननु स्वरूपसम्बन्धात्मकत्वेऽपि प्रतियोगितावच्छेदकरूपत्वमस्तु इति न स्वरूपसम्बन्धात्मकत्वं प्रतिव्यक्तिभेदे हेतुः सम्भवतीत्याशंकां परिजिहीर्षुः प्रतियोग्यभावयोः संसर्गतयाभासनस्य स्वरूपत्वकल्पने प्रतियोगितदभावस्वरूपत्वमेव कल्पयितुमुचितम् , ननु प्रतियोगितावच्छेदकस्वरूपत्वमित्याशयेन तद्ग्रन्थं व्याचष्टे **तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थ इति** । सामान्याभावीयायाः इत्यादिः । प्रतियोगिस्वरूपत्वेऽपि प्रतिव्यक्तिभिन्नतयेत्यस्य यद्यपि सङ्गतिः सम्भवति तथापि अभावस्वरूपत्वाभिधानं स्वरूपकीर्तनमिति मन्तव्यम् । प्रतियोगिस्वरूपत्वादेव प्रतियोगितायाः अप्रामाणिकत्वव्युदासाद् अभावस्वरू-

**वविशेषाभावप्रतियोगितयोविशेषापत्तेरिति ध्येयम् । धूमत्वादेरपीति । तथा-च धूमवान् वह्नेरित्यादौ व्याप्तिलक्षणाऽतिव्याप्तिरिति भावः ।**

---

त्वकल्पनमप्रयोजकमिति स्वरूपकीर्त्तनमप्यसङ्गतमित्यतोऽभावस्वरूपत्वे प्रमाणमुपन्यस्यति प्रतियोगिमात्रेति । अविशेषापत्तेरिति । अभेदप्रसङ्गादित्यर्थः । वह्न्यभावीयमहानसीयवह्निनिष्ठप्रतियोगित्वं महानसीयवह्न्यभावीयप्रतियोगित्वाभिन्नमित्यवच्छेदकावच्छेदेनाऽभेदाऽवगाहिप्रत्ययापत्तेरिति भावः । यद्यपि प्रतियोगिस्वरूपत्वेऽपि सामान्याभावीयप्रतियोगिता निखिलप्रतियोगितास्वरूपा विशेषाभावप्रतियोगिता न तथेत्ययं विशेषः सम्भवति, तथापि न चैकैकापि प्रतियोगिता निखिलप्रतियोगिस्वरूपा, सर्वप्रतियोगिव्यक्तीनामभेदप्रसंगादिति, तत्तत्प्रतियोगितैव तत्तत्प्रतियोगिस्वरूपाऽतः का विशेषाभावप्रतियोगिताया भेदमासादयेत् । न च निखिलप्रतियोगिनां स्वरूपतो भेदेऽपि प्रतियोगित्वात्मनाऽभेद एष्टव्य इति वाच्यम् । भेदाऽभेदे परेण जितं स्यात् । न चोभयोरविशेषे इष्टापत्तिरिति वाच्यम् । अभावस्य तद्व्यक्तित्वादिना हेतुत्वस्य सिद्धान्तविरुद्धतया वह्न्यभावस्य वह्नित्वावच्छिन्नप्रतियोगिताकत्वेनैव हेतुत्वादेर्वक्तव्यतायां तत्तद्वह्न्यभावानां तत्त्वापत्तेः । न चाऽभावात्मकत्वेऽपि समानः प्रसङ्गः, भेदाऽभेदवादाऽऽपत्तिभिया एकस्य "सामान्याभावस्य" अभावतत्प्रतियोग्यात्मकत्वाऽसम्भवादिति वाच्यम् । तथासत्यभावसाधारणतादृशप्रतियोगितात्वावच्छेदेन वह्नित्वावच्छिन्नत्वं तत्तद्वह्निमात्रनिष्ठप्रतियोगितात्वाच्छेदेन तत्तद्वह्नित्वावच्छिन्नत्वमित्यभ्युपगमेन सामंजस्यात् । अथ तर्हि निखिलवह्निवृत्तिप्रतियोगितात्वावच्छेदेन वह्नित्वावच्छिन्नत्वं तत्तद्वह्नित्वावच्छिन्नत्वमित्यभ्युगमेऽपि सामंजस्यमिति चेन्न । यावद्वह्न्यभावप्रतियोगित्ववह्निसामान्याभावप्रतियोगित्वयोरभेदापत्तेस्तथाप्यवारणात्, विशेषाभावेत्यादेरुपलक्षणत्वादिति ।

अथ सामान्यभावीयप्रतियोगितात्वसामानाधिकरण्येन धूमविशेषाभावीयप्रतियोगितात्वावच्छिन्नप्रतियोगिताकतादात्म्यसत्त्वात् उक्तापत्तिस्तदवस्थैवेति चेन्न । असति बाधके उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकावच्छेदेन विधेयाऽन्वय इति नियमस्तथाच धूमसामान्याभावप्रतियोगितात्वावच्छेदेन तद्धूमाभावप्रतियोगितात्वावच्छिन्नप्रतियोगिताकतादात्म्यविरहात् । न च सामान्याभावप्रतियोगित्वस्याऽभावेऽपि सत्त्वेन तदवच्छेदेन विशेषाभावप्रतियोगित्वाऽभेदाऽपादानाऽसम्भवेऽपि विशेषाभावप्रतियोगितात्वावच्छेदेन सामान्यभावीयप्रतियोगित्वाऽभेदसम्भवेन विशेषाभावप्रतियोगित्वं सामान्याभावप्रतियोगित्वाऽभिन्नमित्यापत्तिस्तदवस्थैवेति वाच्यम् । व्यासज्यवृत्तिधर्मस्य समनियतव्यासज्यवृत्तिधर्मावच्छेदेनैव पर्याप्त्यभ्युपगमेन सामान्यभावप्रतियोगितात्वावच्छिन्नभेदस्यैव विशेषाभावप्रतियोगित्वावच्छेदेन सत्त्वादिति । तथाच सामान्याभावीयप्रतियोगित्वमभावप्रतियोग्युभयस्वरूपम्, विशेषाऽभावप्रतियोगित्वं च केवलप्रतियोगिरूपमिति फलितम् । नन्वत्राऽविशेषापत्तिभयेन सामान्याभावप्रतियोगित्वं तदभावमात्रस्वरूपमेव कल्पनीयम्, विशेषाभावप्रतियोगित्वं च प्रतियोगिमात्रस्वरूपमिति चेन्न । समनियताभावानामैक्यमते संख्याऽभावपरिमाणाऽभावयोः समनैयत्येनैकतया तत्प्रतियोगित्वयोरविशेषापत्तेः । उभयरूपत्वे तु संख्याऽभावसंख्योभयरूपा एका संख्यात्वावच्छिन्ना, परिमाण[illegible] अपरा परिमाणत्वावच्छिन्ना इ-

न चेति । वाच्यमिति परेणाऽन्वयः । तथाविधेति यत्किञ्चित्पदं व्या-

---

त्यभावाऽभेदेऽपि तयोर्भेद इति ।

ननु विशेषाभावप्रतियोगित्वं प्रतियोगितदभावोभयस्वरूपं, सामान्याभावप्रतियोगित्वं
प्रतियोगिमात्रस्वरूपमस्तु विनिगमनाविरहादिदि चेन्न । विशेषाभावप्रतियोगित्वस्योभयरूप-
त्वे तद्व्यक्तितदभावोभयस्वरूपत्वं कल्पनीयम्, तत्रानन्ताभावस्वरूपत्वकल्पने गौरवात् लाघ-
वज्ञानसाचिव्येन सामान्याभावप्रतियोगितैवोभयस्वरूपेति ध्येयम् । ननु विशेषाभावप्रतियो-
गित्वं तदभावस्वरूपं सामान्यभावप्रतियोगित्वं प्रतियोगिमात्रस्वरूपमिति चेन्न । तद्रूपाभावी
यप्रतियोगित्वतद्रूपसाभावीयप्रतियोगित्वयोरविशेषापत्तेरिति । न च सत्तावदभावप्रतियोगित्व-
स्य द्रव्येऽनुपपत्तिः, तत्प्रतियोगिताया उभयरूपतया सत्तावदभावस्य द्रव्येऽसम्भवात्, स-
मवायेन सत्तावतो गुणादेस्तत्र सत्त्वादिति वाच्यम् । सत्तावदभावस्य सत्तावदभावत्वेनैव
हि सत्तावद्गुणादिना विरोधः, न तु प्रतियोगितात्वेन, यथा कपिसंयोगाभावस्य निरवच्छि-
न्नवृत्तिकत्वविशिष्टकपिसंयोगाभावत्वेनैव कपिसंयोगविरोधित्वम्, न तु संयोगाभावत्वेनेति
स्वरूपसम्बन्धेन प्रतियोगित्वस्य तत्र नानुपपत्तिः । यद्वा प्रतियोगितदभावोभयात्मकत्वं प्रति-
योगित्वस्य नैकस्य कस्यचिदुभयरूपत्वम्, अभावप्रतियोगिनोरुभयोरभेदप्रसङ्गात्, तदभि-
न्नाभिन्नस्य तदभिन्नत्वनियमात्, किन्तु गुणसामान्याभावाभावस्य निखिलगुणात्मत्वं यथा
तादृशाभावस्य निखिलगुणत्वे च पर्यवस्यति तथा प्रतियोगितायास्तदुभयात्मकत्वं
प्रतियोगितात्वे तदुभयवृत्तित्वे पर्यवस्यति । प्रतियोगित्वं चाऽभावात्मकं भिन्नं, प्रति-
योग्यात्मकं च भिन्नमिति प्रतियोगित्वव्यवहारेऽभावान्यप्रतियोगितैव तादात्म्येन प्रयोजिका,
तथा च सत्तावतोऽभेदस्य द्रव्ये सत्त्वेन न प्रतियोगित्वानुपपत्तिः । न वा प्रतियोगिताया-
उभयस्वरूपत्वाविशेषेपि अभावस्य प्रतियोगित्वापत्तिरिति । यत्तु स्वनिष्ठानुयोगितानिरू-
पितप्रतियोगित्वमेवाऽभावांशस्य प्रतियोगित्वव्यवहारे संसर्ग इति सत्तावदभावप्रति-
योगित्वस्य द्रव्यादौ नानुपपत्तिरिति । तदनादेयम्, अन्योन्याश्रयग्रस्तत्वादिति ।

ननु सामान्याभावप्रतियोगित्वस्योभयरूपत्वे समनियताभावानामैक्यात्संयोगेन द्रव्याभा-
वप्रतियोगित्व-संयोगेन प्रमेयाभावप्रतियोगित्वयोरविशेषापत्तिः, तत्र प्रमेयाभावप्रतियोगिता-
त्वावच्छेदेनाऽविशेषापत्त्यसम्भवेऽपि द्रव्याभावीयप्रतियोगितात्वावच्छेदेनाऽभेदसत्त्वात्तादृशप्रतियो-
गितात्वस्य द्रव्ये द्रव्याभावे च सत्त्वेन तत्र प्रमेयप्रमेयाभावात्मकप्रतियोगितातादात्म्यसत्त्वा-
दिति चेन्न । संयोगेन प्रमेयसामान्याभावप्रतियोगितावच्छेदकत्वस्य नानाविधप्रमावि-
विषयत्वे कल्पनापेक्षया द्रव्यत्वेनैव लाघवेनाऽवच्छेदादविशेषप्रसङ्गस्येष्टत्वादिति ।

परन्तु इदानीं समनियताभावयोरैक्याभ्युपगमे प्रतियोगित्वस्वरूपत्वाभ्युपगमो निरर्थक
इति विभावनीयम् । न च प्रतियोगितात्वेऽप्यतिरिक्ताऽनतिरिक्तत्वमिदानीमीक्षणीयम् । एन-
द्ग्रन्थेनैव बौद्धाधिकारादौ तत्खण्डनादिति ।

ननु इदानीं व्याप्तिलक्षणप्रस्तावे धूमत्वस्याऽनवच्छेदकत्वप्रदर्शनं धूमत्वस्य व्यापकता-
वच्छेदकलक्षणाऽतिव्याप्तिबोधकमर्थान्तरप्रस्तमत आह—तथाचेति । वह्निनिष्ठसामाना-

दवृत्तिसाध्यकस्थलीयलक्षणाऽभिप्रायेण, तथाच तथाविधो हेतुसमानाधिकरणो यो यत्किञ्चिदभावस्तत्प्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वं तत्रार्थः । तथाविधाभावीयप्रतियोगितासामान्यशून्यत्वमप्रसिद्धं, सर्वस्यैव वस्तुनस्तादृशयावत्त्वाद्यवच्छिन्नाभावप्रतियोगितावत्त्वादत उक्तम् यत्किञ्चिदिति । ✗/c

---

धिकरण्यनिरूपकतानवच्छेदकत्वेन सम्प्रतिपन्ने धूमत्वे निरुक्तानवच्छेदकत्वस्य व्याप्तिलक्षणाऽतिव्याप्तिसम्पादकस्य प्रदर्शनेन व्याप्तिलक्षणाऽतिव्याप्तिरेव प्रदर्शितेति नार्थान्तराऽऽपत्तिरिति भावः । अत एव व्याप्तिलक्षणाऽतिव्याप्तिरिति लिखनमपि साधु सङ्गच्छते इति ।

तथाचेति । तथाविधः हेतुसमानाधिकरण इत्यर्थः । अस्य निवेशस्तु हेतुसमानाधिकरणोभयावृत्तिधर्मनिष्ठा या निरवच्छिन्नाऽवच्छेदकता तादृशाऽवच्छेदकताभिन्ना सती अभावत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिका या अभावनिष्ठा निरूपितत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तादृशाऽवच्छेदकताभिन्ना सती प्रतियोगितात्वावच्छेदकताभिन्ना याऽवच्छेदकता तादृशाऽवच्छेदकत्वानिरूपिका ईदृशाऽवच्छेदकताका या प्रतियोगित्वनिष्ठा प्रतियोगिता तादृशप्रतियोगिताकाभाववद्वृत्तित्वाभावो निवेश्यः ।

तथाच तदभावनिरूपितप्रतियोगित्वं नास्तीत्याकारकप्रतीतिसाक्षिकः प्रथमाभावो निवेश्यः । प्रथमाभावप्रतियोगितावच्छेदकताया द्वितीयाभावप्रतियोगितावच्छेदकतया तन्निष्ठावच्छेदकताया इतरवारकन्यूनवारकसहितद्वितीयाभावो तादृशप्रतीतिसाक्षिकाभावनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितवृत्तितात्वसमानाधिकरणोभयाऽवृत्तिधर्मपर्याप्ताऽवच्छेदकताकप्रतियोगिताकाभावकूटरूपो निवेश्यः, तादृशाऽवच्छेदकतानिरूपितपरम्परया प्रतियोगितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वं नास्तीति प्रतीतिसाक्षिकद्वितीयाभावप्रतियोगितावच्छेदकतायास्तृतीयाभावप्रतियोगितावच्छेदकतया तन्निष्ठावच्छेदकताया इतरवारकन्यूनवारकसहिततृतीयाऽभावः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वसमानाधिकरणोभयाऽवृत्तिधर्मनिष्ठाऽवच्छेदकतानिरूपिताऽभावत्वनिष्ठाऽवच्छेदकतानिरूपितपरम्परया वृत्तितात्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकाभाववद्धर्मो नेति प्रतीतिसाक्षिको निवेश्य इति ध्येयम् ।

अत्र निरवच्छिन्नत्वानिवेशे सामानाधिकरण्यसम्बन्धेन निरूपितत्वसम्बन्धावच्छिन्नतद्धूमात्मकप्रतियोगितानिरूपितवृत्तित्वविशिष्टं यद्धूमाभावव्यक्तित्वं तदवच्छिन्ननिरूपितप्रतियोगित्वं तद्धूमे एवाऽधिकरणत्वं विलक्षणमेव, तथाचैतादृशप्रतियोगित्वाभावस्य धूमान्तरे सत्त्वाद् धूमत्वमप्यवच्छेदकं न स्यात् । तन्निवेशे च तद्व्यक्तित्वनिष्ठावच्छेदकत्वं न निरवच्छिन्नं, किन्तु उक्तवैशिष्ट्यावच्छिन्नमेवेति तद्व्युदासः । एवं महानसीयवह्निवृत्तित्वविशिष्टजातित्वावच्छिन्नाधिकरणत्वं महानसीयवह्नावेव स्वीक्रियते, तथाच निरूपितत्वसम्बन्धावच्छिन्नतद्धूमात्मकप्रतियोगितानिरूपितवृत्तित्वविशिष्टधूमाभावनिष्ठतद्व्यक्तित्वावच्छिन्ननिरूपितप्रतियोगित्वाधिकरणत्वं तद्धूम एव स्वीकर्त्तव्यम्, तथाच तत्प्रतियोगित्वाभावस्य धूमान्तरे सत्त्वाद् धूमत्वम-

प्यवच्छेदकं न स्यादत इतरवारकपर्याप्तिनिवेशः, तथाच तद्धूमाभावनिष्ठतत्तद्व्यक्तित्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तत्तद्धूमात्मकप्रतियोगितान्यूनवृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकता तन्निरूपकत्वान्नातिव्याप्तिः। तद्व्यक्तेः स्वरूपतो भानस्वीकारे घटाभावप्रतियोगित्वाभावस्यापि हेतुमन्निष्ठधूमाद्यभावव्यक्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वेन तादृशप्रतियोगित्वाभाववति धूमे धूमत्वन्यूनवृत्तित्वाद् (एवं तद्व्यक्तिर्नेत्यभावमादायाऽपि) अतिव्याप्तिरतो न्यूनवारकपर्याप्तिनिवेशः। तथाच घटाभावनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतायां धूमाभावव्यक्तित्वनिष्ठावच्छेदकतानिरूपितत्वाभावान्नातिव्याप्तिः धूमाभावप्रतियोगित्वघटोभयाभावमादायाऽतिव्याप्तिवारणाय निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना प्रतियोगितात्वनिष्ठावच्छेदकताभिन्नेत्यादि इतरवारकपर्याप्तिनिवेशः। अत्र तद्व्यक्तेः स्वरूपतो भानानंगीकारे उभयत्र न्यूनवारकपर्याप्तिनिवेशनं व्यर्थमेवेति।

अथ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वसमानाधिकरणोभयाऽवृत्तित्वस्य तृतीयाभावप्रतियोगितावच्छेदकत्वे तद्व्यक्तित्वरूपप्रतियोगितावच्छेदकविशेषणत्वं स्यात्, परंपराघारणप्रतियोग्यंशे प्रकारीभूतधर्मस्यैव प्रतियोगितावच्छेदकत्वात्, तथाच तादृशोभयाऽवृत्तित्वस्य तद्व्यक्तित्वरूपद्वितीयाभावप्रतियोगितावच्छेदकविशेषणत्वे द्वितीयाभावप्रतियोगितावच्छेदकत्वापत्तिः प्रतियोगितावच्छेदके प्रकारतया भासमानपदार्थस्य प्रतियोगितावच्छेदकत्वादिति। न च द्वितीयाभावप्रतियोगितावच्छेदकत्वे का क्षतिरिति वाच्यम्। तादृशोभयाऽवृत्तित्वस्य प्रथमाभावप्रतियोगितावच्छेदकीभूततद्व्यक्तित्वविशेषणत्वे प्रथमाभावस्यापि प्रतियोगितावच्छेदकतादृशोभयाऽवृत्तित्वनिष्ठावच्छेदकताकधर्मनिष्ठावच्छेदकताकअभावत्वनिष्ठावच्छेदकताकप्रतियोगित्वाभावाधिकरणनिरूपितवृत्तित्वं नास्तीत्याकारकप्रतीतिसाक्षिकद्वितियाभावस्य धूमत्वादौ विरहेणाऽनवच्छेदकत्वापातात् धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेरिति चेन्न। तादृशोभयावृत्तित्वस्य द्वितीयाभावीयप्रतियोगितानिरूपिततद्व्यक्तित्वनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतायां सामानाधिकरण्यसम्बन्धेन विशेषणत्वात्, तादृशावच्छेदकतायाः तृतीयाभावप्रतियोगितावच्छेदकतया तादृशोभयावृत्तित्वस्य तद्विशेषणतया तृतीयाभावप्रतियोगितावच्छेदकत्वादिति विभावनीयम्।

अथ तदभावनिरूपितप्रतियोगित्वं नास्तीत्याकारकाऽभावनिवेशेऽपि तद्रूपवान् रसादित्यादौ व्यभिचारिणि "तद्रूपभेदाभावरूप" तदभावनिरूपितप्रतियोगित्वाभावस्य "तादृशप्रतियोगितारूप" तद्व्यक्तिर्नास्तीत्यभावे पर्यवसानसम्भवेन तद्रूपाभावीयप्रतियोगित्वं नास्तीत्यभावप्रतियोगितावच्छेदकत्वं प्रतियोगितानिष्ठतद्व्यक्तित्वे एव स्वीकरणीयम्, तथाच तादृशाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतया घटाभावप्रतियोगित्वाभावस्यैव लक्षणघटकतया तादृशाभावाधिकरणवृत्तित्वाभावस्य साध्यतावच्छेदके विरहेण तृतीयाभावसत्त्वादतिव्याप्तिरिति। न च तद्रूपघटान्यतराभावमादायाऽतिव्याप्तिवारणं सम्भवतीति वाच्यम्। वह्निमान् धूमादित्यत्र तत्पर्वतान्यत्वविशिष्टाभावस्य तत्पर्वते हेतुसमानाधिकरणस्य प्रतियोगित्वाभाववति घटे वह्नित्वस्याऽवृत्तित्वादव्याप्तिः। न च तत्पर्वतान्यत्वविशिष्टाभावस्य तत्पर्वतीय-

वह्नावपि सत्वात्तत्र वह्नित्वस्य वृत्तित्वान्नाव्याप्तिरिति वाच्यम्। तत्पर्वतभेदाधिकरणे तत्पर्वतीयतृणकाष्ठादौ तत्पर्वतीयवह्नेर्वृत्तित्वादत उक्तविशिष्टाभावप्रतियोगित्वस्य तत्पर्वतीयवह्नावपि सत्वात्प्रतियोगित्वाभावविरहेणाऽव्याप्तिर्भवत्येवाऽतो हेतुसमानाधिकरणेऽभावे साध्यतावच्छेदकातिरिक्ताऽभावानवच्छिन्नप्रतियोगिताकत्वमवश्यं निवेशनीयम्, एवं चाऽन्यतराभावस्य भेदद्वयावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकतया लक्षणाऽघटकत्वात्। एतेन "अत्राऽपरघटान्यत्वविशिष्टाभावस्याऽपरघटे हेतुसमानाधिकरणस्य प्रतियोगित्वाभाववति अपरघटीयरूपेऽवृत्तित्वस्य साध्यतावच्छेदके सत्वान्नातिव्याप्तिरिति निरस्तम्। न च साध्याधिकरणत्वसमानाधिकरणोभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदानवच्छिन्नप्रतियोगिताकाभावनिवेशेनैव तत्पर्वतान्यत्वविशिष्टाभाववारणसम्भवात्साध्यतावच्छेदकाऽतिरिक्तभेदानवच्छिन्नत्वनिवेशे प्रयोजनविरह इति वाच्यम्। तादात्म्यसम्बन्धेन तद्व्यक्तिसाध्यकव्यभिचारिणि तद्व्यक्तिघटान्यतराभावस्य तादृशभेदावच्छिन्नप्रतियोगिताकत्वेन लक्षणाऽघटकत्वात् घटाद्यभावमादायाऽतिव्याप्तेर्दुर्वारत्वात्। न च तादृशभेदनिष्ठसाक्षादवच्छेदकत्वानिरूपितत्वस्य प्रतियोगितायां निवेशनीयतया तादृशान्यतराभावीयप्रतियोगितायां भेदनिष्ठावच्छेदकतानिरूपितत्वविरहेणाऽनिरूपितत्वसत्वाल्लक्षणघटकतया तमादायाऽतिव्याप्तिवारणं सम्भवतीति वाच्यम्। तथासति स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन तद्व्यक्तेर्यत्र साध्यता तद्व्यक्तिभेदवाच्यत्वान्यतरत्वस्य हेतुता तत्र तद्व्यक्तिघटान्यतराभावस्य हेतुसामानाधिकरण्यविरहादभावान्तरमादायाऽतिप्रसङ्गस्य दुर्वारत्वात्। न चाऽभावान्तरस्य हेतुसामानाधिकरण्यविरह इति वाच्यम्। तादृशसम्बन्धेन तद्व्यक्तिसाध्यकसद्धेतौ तादृशसम्बन्धावच्छिन्नप्रतियोगिताकहेतुसमानाधिकरणाभावाऽप्रसिद्ध्याऽव्याप्तिभयेन साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभाववत्त्वार्थकतया तत्र संयोगेन घटाद्यभावमादायाऽतिव्याप्तेर्दुर्वारत्वात्। न च तत्र तद्व्यक्तिघटोभयाभावमादाय तद्रूपवान् रसादित्यादौ तद्रूपघटोभयाभावमादायाऽतिव्याप्तिवारणं कर्तुं शक्यते इति वाच्यम्। तथासति तद्व्यक्तित्वानवच्छिन्नप्रतियोगिकस्ववृत्तिवाच्यत्ववत्ता—स्वरूपसम्बन्धावच्छिन्नाधेयतान्यतरसम्बन्धेन तद्व्यक्तिसाध्यकतादृशान्यतरत्वहेतौ तादृशोभयस्य तादृशस्ववृत्तिवाच्यत्ववत्तासम्बन्धेन तद्व्यक्तिभेदे स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन वाच्यत्वे सत्त्वेन तदभावस्य हेतुसामानाधिकरण्यविरहात् अभावान्तरमादायाऽतिव्याप्तेर्दुर्वारत्वात्। न च तादृशसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावस्यापि प्रतियोगिव्यधिकरणहेतुसामानाधिकरण्यविरहादभावाऽप्रसिद्ध्याऽतिव्याप्तिवारणमिति वाच्यम्। तेन सम्बन्धेन तत्साध्यकवाच्यत्वहेतुकसद्धेतौ तत्सम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाऽभावाऽप्रसिद्ध्याऽव्याप्तिभयेन साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य पारिभाषिकार्थकतया संयोगेन पटाद्यभावस्य लक्षणघटकतया तमादायाऽतिव्याप्तेर्दुर्वारत्वात्। वस्तुतो वह्निमान् धूमादित्यादौ वह्निघटोभयाभावमादायाऽव्याप्तिवारणाय हेतुसमानाधिकरणाभावीयप्रतियोगितायामवच्छेदकताविशिष्टान्यत्वनिवेशस्याऽऽवश्यकतया तावतैव तद्रूपघटोभयाभावस्य लक्षणाऽघटकत्वात्तद्रूपवान् रसादित्यादौ नातिव्याप्तिरित्यवधेयम्। वै० स्वनिरूपितत्वस्व-

भिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन । न च वह्निधूमोभयाभावीयप्रतियोगितायां वह्नि-
त्वनिष्ठावच्छेदकताविशिष्टत्वाद् वह्निधूमोभयवान् वह्नेरित्यत्राऽतिव्याप्तिरिति वाच्यम्। सा-
ध्यतावच्छेदकाऽवृत्त्यवच्छेदकताविशिष्टान्यत्वनिवेशात् वह्नित्वनिष्ठावच्छेदकतायां साध्य-
तावच्छेदकाऽवृत्तित्वविरहान्नातिव्याप्तिरिति चेत् ।

सत्यम् । तदभावनिरूपितप्रतियोगित्वं नास्तीत्यभावस्य लाघवात् प्रतियोगितारूपतद्व्य-
क्तिर्नास्तीत्यभावे पर्यवसानसम्भवात् प्रतियोगितायाः प्रतियोगितदभावोभयस्वरूपत्वात् ।
प्रतियोगिरूपतद्व्यक्तिर्नास्तीत्यभावे पर्यवसाने प्रतियोगिरूपतद्व्यक्तौ तदभावनिरूपितप्रतियो-
गित्वं नास्तीति प्रतीत्यापत्तिः, तद्व्यक्तौ तद्व्यक्तिर्नास्तीति सर्वानुभवसिद्धत्वात् । अभावरूपतद्व्य-
क्तिर्नास्तीत्यभावे पर्यवसाने अभावरूपतद्व्यक्तौ तदभावनिरूपितप्रतियोगित्वं नास्तीति प्रती-
त्यनुपपत्तिः, अभावरूपतद्व्यक्तौ तद्व्यक्तिर्नास्तीत्यप्रतीतेः ।

अथ तथापि तादात्म्येन अभावस्य साध्यतायां वाच्यत्वहेतौ व्यभिचारिणि प्रतियोगिव्य-
धिकरणहेतुसमानाधिकरणअभावभेदरूपतदभावनिरूपितप्रतियोगित्वं नास्तीत्यभावस्य भाव-
मात्रे सत्त्वेन भावभेदरूपतद्व्यक्तिर्नास्तीत्यभावे पर्यवसानसम्भवात् तादृशप्रतियोगित्वाभावस्य
गुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध्याऽभावान्तरमादायाऽतिव्याप्तिरिति । न चाऽत्रापि
तद्व्यक्तिघटोभयाभावमादायातिव्याप्तिवारणं कर्तुं शक्यत इति वाच्यम्। तथा सति पूर्वोक्तरी-
त्या तद्व्यक्तित्वानवच्छिन्नप्रतियोगिकस्ववृत्तिवाच्यत्ववत्तास्वरूपसम्बन्धावच्छिन्नाधेयतान्यतर-
सम्बन्धेन अभावरूपतद्व्यक्तिसाध्यकतद्व्यक्तिभेदवाच्यत्वान्यतरत्वादिहेतुकव्यभिचारिण्यतिव्या-
प्तेर्दुर्वारत्वादिति चेन्न। तदभावनिरूपितप्रतियोगितावृत्तिउभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिता-
काभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवन्निरूपितवृत्तित्वाभावनिवेशात् तदभा-
वनिरूपितप्रतियोगित्वं नास्तीत्यभावस्याऽप्रसिद्धावपि प्रतियोगितारूपतद्व्यक्तिर्नास्तीत्यभावकूट-
मादायातिव्याप्तेर्व्युदाससम्भवादिति । परे तु तद्रूपघटोभयत्वावच्छिन्नविशेष्यतावान्नास्तीति
प्रतीतिसाक्षिकाभावमादाय तद्रूपवान् रसादित्यत्र नातिव्याप्तिः । न चैवमपि यत्र तद्व्यक्तेः
स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन साध्यता तत्र तद्व्यक्तिभेदवाच्यत्वाऽन्यतरत्वहेतावति-
व्याप्तिः, तत्र साध्याभावप्रतियोगित्वाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्धेः,तद्व्य-
क्तिघटोभयत्वावच्छिन्नविशेष्यतावान्नास्तीतिप्रतीतिसाक्षिकाभावस्य लक्षणाऽघटकत्वात्तादृश-
विशेष्यतावतो घटस्य हेत्वधिकरणे सत्त्वादिति वाच्यम् । तद्व्यक्तिघटोभयत्वात्मकतद्व्यक्त्यव-
च्छिन्नाभावमादायाऽतिव्याप्तिविरहात्, तादृशतद्व्यक्त्यवच्छिन्नाभावीयप्रतियोगितायामवच्छे-
दकताविशिष्टान्यत्वस्यापि सत्त्वात् । न च व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभे-
दस्वीकारे तद्व्यक्तिघटोभयत्वावच्छेदेन तद्व्यक्तिभेदस्य सत्त्वेन व्यभिचारनिरूपकाधिकरणे
तद्व्यक्तिघटोभयत्वावच्छिन्नस्य स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन सत्त्वेनाऽभावविरहा-
दतिव्याप्तिस्तदवस्थैवेति वाच्यम् । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदस्याऽनङ्गी-
कर्तृमतेनैवेदं लक्षणम्, अतो नोक्ताऽतिव्याप्तिः ।

अथवा तद्व्यक्त्यभावीयप्रतियोगित्वाभावप्रतियोगितावच्छेदकत्वं न प्रतियोगितानिष्ठतद्व्य-
क्तित्वे कल्पयितुं शक्यते तद्रूपवति तादृशप्रतियोगित्वं नास्तीति प्रतीत्यनुपपत्तेः, तादृशप्रतियो-

गितायास्तद्व्यक्तिस्वरूपतया तद्व्यक्तित्वावच्छिन्नाधिकरणतायांस्तत्र सत्वात्। न चोक्ताभावप्रतियोगितावच्छेदकत्वमुक्तत्व्यक्तित्व एव, परन्त्वभावस्योक्तप्रतियोगित्वावच्छिन्नाधिकरणतया सार्धमेव विरोधित्वं कल्पनीयम्, तथाच तद्रूपवति तादृशप्रतियोगितात्वावच्छिन्नाधिकरणताविरहादेव न तादृशप्रतीत्यनुपपत्तिरिति वाच्यम्। तद्रूपेण तद्रूपं नास्तीति प्रत्ययानुपपत्तेः, तद्रूपाभावीयप्रतियोगितायास्तद्रूपस्वरूपतया प्रतियोगितानिष्ठतद्व्यक्तित्वावच्छिन्नाभावं प्रति उक्तरूपेण विरोधित्वकल्पने तद्रूपप्रत्ययविरहादिति। न च प्रतियोगितात्वावच्छिन्नाधिकरणतया तद्रूपत्वावच्छिन्नाधिकरणतया च सार्धं विरोधित्वं कल्पनीयम्, तथाच तद्रूपेऽधिकरणताद्वयविरहादेव न दोष इति वाच्यम्। तद्रूपे तद्रूपाभावीयप्रतियोगित्वं नास्तीति प्रत्ययापत्तेः अधिकरणताद्वयविरहात्तथा च न तद्व्यक्तित्वे प्रतियोगितावच्छेदकत्वं कल्पनीयम्, किन्तु प्रतियोगितात्वे एवेति नोक्तव्यभिचारिणि अतिव्याप्तिरिति चेन्न। यत्र स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेनाभावस्य साध्यता भावभेदअभावत्वान्यतरत्वस्य हेतुता तत्राऽतिव्याप्त्यापत्तेः, तत्राऽभावाभावीयप्रतियोगित्वाभावप्रतियोगितावच्छेदकत्वस्याभावाभावनिरूपितत्वप्रतियोगितात्वोभयापेक्षया लघोर्भावभेदत्वस्य कल्पयितुमुचितत्वात्, यत्रैव भावभेदो नास्तीति प्रत्ययस्तत्रैवाऽभावाभावप्रतियोगित्वं नास्तीति प्रत्ययः, तथाच तादृशप्रतियोगित्वाभावस्य लक्षणाऽघटकत्वम्। न चाऽभावान्तरस्यापि हेतुसमानाधिकरणत्वविरहादभावाऽप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम्। यत्र स्वरूपसम्बन्धावच्छिन्नाधेयतास्ववृत्तिवाच्यत्ववत्तासम्बन्धेनाऽभावस्य साध्यताऽभावभेदवाच्यत्वान्यतरत्वस्य हेतुता तत्राऽप्रसिद्धिनिबन्धनाऽव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वपदेन साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यानिष्ठत्वोभयाभावस्य विवक्षणात्तथाचोक्तसद्धेतौ घटाभावमादायैव लक्षणसमन्वयः। एवंसति अभावसाध्यकव्यभिचारिण्यपि संयोगेन घटाभावमादायैवाऽतिव्याप्तिः। न च हेतुसमानाधिकरणाभाववद्वृत्तित्वाभावस्य निवेशान्न दोष इति वाच्यम्। धूमवान् वह्नेरित्यादावतिव्याप्तेः, हेतुसमानाधिकरणधूमाभावव्यक्तिनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकमध्ये तद्धूमात्मकप्रतियोगितानिष्ठतद्व्यक्तित्वावच्छिन्नाभावोऽपि भवति तद्वन्निरूपितवृत्तित्वाभावस्य धूमत्वेऽसत्त्वात्। अथ हेतुसमानाधिकरणाभावव्यक्तिनिरूपितप्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटनिवेशेनाऽतिव्याप्तिवारणं सम्भवति परन्तु कूटपदेन तद्धूमात्मकप्रतियोगितावृत्तितद्व्यक्तित्वावच्छिन्नाभावेत्यादिघटितकूटमादाय पुनरतिव्याप्तितादवस्थ्यमिति तन्निवारणाय हेतुसमानाधिकरणाभावव्यक्तिनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्ननिरूपकताकाधिकरणतावन्निरूपितवृत्तित्वाभावस्य निवेशान्न दोषः। व्यासज्यवृत्तिधर्मप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य समनियतव्यासज्यवृत्तिधर्मे एव स्वीकारात्, तत्तद्धूमरूपप्रतियोगित्वाभावत्रयगतकूटत्वं न तादृशभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकमिति नातिव्याप्तिरिति चेन्न। तद्रूपवान् रसादित्यत्राऽतिव्याप्त्यापत्तेः, तद्रूपाभावीयप्रतियोगितानिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वस्याऽप्रसिद्धेः साध्याभावस्य लक्षणाऽघटकत्वात्। न च हेतुसमानाधिकरणाभावव्यक्तिनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्माव-

च्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकं यत्तदवच्छिन्नाधिकरणतावन्निरूपितवृत्तित्वाभावस्यैव लक्षणे निवेशनीयत्वात् तथाच तद्रूपाभावीयप्रतियोगित्वाभावगतैकत्वमेव तादृशपर्याप्तिकमिति तदवच्छिन्नाधिकरणतावन्निरूपितवृत्तित्वाभावस्य तद्रूपत्वे सत्त्वेन पारिभाषिकावच्छेदकत्वान्नातिव्याप्तिरिति वाच्यम् । धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः, धूमाभावीयप्रतियोगित्वाभावगतैकत्वस्य धूमाभावनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकतया तदवच्छिन्नाधिकरणतावति तद्धूमे धूमत्वस्याऽवृत्तित्वविरहेण पारिभाषिकाऽवच्छेदकत्वं न स्यादिति । न च हेतुसमानाधिकरणाभावव्यक्तिनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकं यद्यत्किञ्चित्तदवच्छिन्नाधिकरणतावन्निरूपितवृतित्वाभावस्य लक्षणे निवेश्यतया उक्तयुक्त्या धूमवान् वह्नेरित्यादावतिव्याप्तिविरहादिति वाच्यम् । वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः, प्रमेयत्वेन प्रमेयस्याऽव्यासज्यवृत्तितया प्रमेयत्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं घटाभावनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वस्यापि तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तीयप्रमेयत्वावच्छिन्नप्रतियोगित्वावच्छिन्नप्रतियोगिताश्रयघटाभावीयप्रतियोगित्वाभाववह्न्यभावीयतत्तत्प्रतियोगित्वाभावगतकूटत्वं तदवच्छिन्नाधिकरणे घटे वह्नित्वस्याऽवृत्त्या पारिभाषिकाऽवच्छेदकत्वसत्त्वात् । न चोक्तप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तीयप्रतियोगितानिरूपिताऽवच्छेदकतासमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपिकावच्छेदकताकनिरूपकताकाधिकरणतावन्निरूपितवृत्तित्वाभावस्य लक्षणे निवेश्यतया वह्निमान् धूमादित्यादावव्याप्त्यसम्भवात्, तादृशपर्याप्तीयप्रतियोगितानिरूपितावच्छेदकत्वं प्रमेयत्वे एव तस्य नानात्वेन तन्निष्ठावच्छेदकतासमानाधिकरणोभयावृत्तिधर्मतद्विषयतात्मकप्रमेयत्वनिष्ठतद्व्यक्तित्वतद्धर्मावच्छिन्नावच्छेदकतानिरूपकावच्छेदकताकाधिकरणतावन्निरूपितवृत्तित्वाभावस्य वह्नित्वेऽसत्त्वेन पारिभाषिकावच्छेदकत्वविरहादिति वाच्यम् । धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः, धूमाभावीयप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तीयप्रमेयत्वावच्छिन्नप्रतियोगितावच्छेदकतासमानाधिकरणोभयावृत्तिधर्मतद्विषयतात्मकप्रमेयत्वनिष्ठतद्व्यक्तित्वावच्छिन्नावच्छेदकतानिरूपकावच्छेदकताकनिरूपकताकाधिकरणत्वस्य तद्धूमे सत्त्वेन तन्निरूपितवृत्तित्वाभावस्य धूमत्वे विरहात्पारिभाषिकावच्छेदकत्वं घटत्वे एवेति । न च पर्याप्तीयप्रतियोगितायामपि उभयावृत्तिधर्मावच्छिन्नत्वं निवेश्यम्, तथाच प्रमेयत्वावच्छिन्नप्रतियोगितायामुभयाऽवृत्तिधर्मावच्छिन्नत्वविरहेण धूमवान् वह्नेरित्यादावतिव्याप्तिविरहादिति वाच्यम् । वह्निभेदस्याऽव्यासज्यवृत्तितया तत्प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य धूमाभावीयप्रतियोगितावृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वे स्वीकरणीयतया तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तीयउभयावृत्तिवह्निभेदत्वावच्छिन्नप्रतियोगितानिरूपितावच्छेदकतासमानाधिकरणवह्निभेदत्वनिष्ठतद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकताकनिरूपकताकाधिकरणतावति धूमे धूमत्वस्याऽवृत्तित्वविरहेण पारिभाषिकावच्छेदकत्वानुपपत्त्या धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तिरतो

गत्यन्तरविरहेण कूटत्वस्यैव लक्षणे निवेश्यतया तद्रूपवान् रसादित्यादावतिव्याप्तितादवस्थ्यात् ।

केचित्तु तद्रूपवान् रसादित्यादावतिव्याप्तिवारणाय हेतुसमानाधिकरणाभावीयप्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्ना स्वरूपसम्बन्धावच्छिन्नावच्छेदकताभिन्ना समवायसम्बन्धावच्छिन्नावच्छेदकताभिन्ना कालिकसम्बन्धावच्छिन्नावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नाधिकरणतावन्निरूपितवृत्तित्वाभावस्यैव लक्षणे निवेश्यत्वात्, तथाचोक्तस्थले तद्रूपाभावीयप्रतियोगित्वाभावपटवदभावघटाभावगतकूटत्वस्यैवोक्तकूटत्वपदेन धर्तव्यतया तादृशकूटत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावति तद्रूपत्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वसत्त्वान्नातिव्याप्तिरिति । न च घटाभावीयप्रतियोगित्वाभावसंयोगसामान्याभावघटवदभावगतकूटत्वस्योक्तकूटान्तर्गतत्वेन तदवच्छिन्ननिरूपकताकाधिकरणत्वस्य द्रव्यातिरिक्तपदार्थे एव सत्त्वेन तत्र वह्नित्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वेन वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । तादृशभिन्नावच्छेदकत्वानिरूपकप्रतियोगितायां स्वरूपसम्बन्धावच्छिन्नत्वमवश्यं निवेशनीयम्, अन्यथा घटाभावीयप्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्ना तत्सम्बन्धावच्छिन्नावच्छेदकताभिन्नाऽवच्छेदकताभिन्नाऽवच्छेदकत्वानिरूपकघटाभावीयप्रतियोगितानिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावकूटवति नित्ये वह्नित्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वेन वह्निमान् धूमादित्यत्राऽव्याप्तिः, एवं च गुणसामान्याभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वस्य वन्ह्यादावपि सत्त्वेन तत्र वह्नित्वस्याऽवृत्तित्वविरहेण वह्निमान् धूमादित्यादावव्याप्तिविरहात् । न च वह्नित्वावच्छिन्नविषयत्वाभावघटाभावीयप्रतियोगित्वाभावपटवदभावगतकूटत्वस्योक्तकूटान्तर्गततया तदवच्छिन्ननिरूपकताकाधिकरणत्वस्योक्तकूटान्तर्गततया तदवच्छिन्ननिरूपकताकाधिकरणत्ववति वह्नित्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वाद् वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यमिति वाच्यम् । तादृशप्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठकालिकसम्बन्धावच्छिन्नावच्छेदकताभिन्ना समवायसम्बन्धावच्छिन्नावच्छेदकताभिन्ना संयोगसम्बन्धावच्छिन्नावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवन्निरूपितवृत्तित्वाभावस्यैव निवेश्यत्वात्, तथा च तादृशभिन्ना या विषयतात्वनिष्ठावच्छेदकता तदनिरूपकत्वस्योक्तप्रतियोगितायां विरहेणाऽव्याप्त्यभावादिति वदन्ति ।

परे तु पूर्वोक्तस्थले कूटाऽप्रसिद्ध्याऽतिव्याप्तिवारणाय तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकसंख्यावच्छिन्नवद्वृत्तित्वाभावो निवेश्यः, एवं च तद्व्यक्तिसाध्यकस्थले तदभावनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटाऽप्रसिद्धावपि तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकतद्व्यत्त्यभावगतैकत्वसंख्यां स्वीकृत्य अतिप्रसङ्गभङ्गः इति । नन्वेवमपि धूमाभावनिरूपितप्रतियोगितारूपतद्व्यक्तिर्नास्तीत्याद्यभावगताऽन्यतमत्वस्यापि तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकतया तदवच्छिन्नवन्निरूपितवृत्तित्वाभावस्य धूमत्वे विरहेण धूमत्वादेरप्यनवच्छेदकत्वापत्तेः । न च तादृशानुयोगिताकपर्याप्तिकयत्किंचिदवच्छिन्नवन्निरूपितवृत्तित्वाभावनिवेशे तादृशान्यतमत्वावच्छिन्नवन्निरूपितवृ-

त्तित्वाभावस्य धूमत्वादौ विरहेऽपि तादृशाभावगतकूटत्वावच्छिन्नवह्निरूपितवृत्तित्वाभावसत्त्वेनाऽनवच्छेदकत्वविरहादिति । ननु यत्किञ्चित्त्वनिवेशे घटाभावनिरूपितप्रतियोगितावृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिनिष्ठप्रमेयत्वावच्छिन्नप्रतियोगिताकत्वस्य वन्ह्यभावीयप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावगतकूटत्वे सत्त्वेन तादृशपर्याप्तिकवन्ह्यभावीयप्रतियोगित्वाभावगतकूटत्वमादाय वह्निमान् धूमादित्यादावव्याप्तिः । न च घटाभावीयप्रतियोगितावृत्तिउभयावृत्तिधर्मावच्छिन्नाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिता प्रमेयत्वावच्छिन्नाऽपि घटाभावीयप्रतियोगित्वाभावगतकूटत्वे एव न तु वह्न्यभावप्रतियोगित्वाभावगतकूटत्वे तादृशकूटत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वघटाभावीयप्रतियोगितारूपतत्तद्व्यक्त्यभावत्वे विरहात् इति वाच्यम् । एकधर्मावच्छिन्नप्रतियोगिताया ऐक्येन प्रमेयत्वावच्छिन्नवह्न्यभावीयत्वाभावगतकूटत्वनिष्ठप्रतियोगिताया घटाभावीयप्रतियोगित्वाभावगतकूटत्वनिष्ठप्रतियोगिताया ऐक्यात् घटाभावीयप्रतियोगितारूपतत्तद्व्यक्त्यभावत्वावच्छिन्नप्रतियोगिताकपर्य्याप्तिनिरूपितघटाभावीयप्रतियोगितानिरूपितत्तद्व्यक्त्यभावगतकूटनिष्ठप्रतियोगिताया वह्न्यभावीयप्रतियोगित्वाभावगतकूटत्वेपि सत्त्वात् । नचैवं प्रमेयत्वावच्छिन्नप्रतियोगितानिरूपितपर्याप्तेः ब्रह्माण्ड एव सत्त्वात्, प्रमेयत्वावच्छिन्नप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वं ब्रह्माण्डगतसमुदायत्वे एव, न तु वह्न्यभावीयप्रतियोगित्वाभावगतकूटत्वे इति न तादृशाकूटत्वमादायाव्याप्तिरिति वाच्यम् । प्रतियोगिताया ऐक्येपि तन्निरूपकपर्य्याप्तेर्नानात्वात् प्रमेयत्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकं एकत्वद्वित्वबहुत्वकूटत्वब्रह्माण्डगतसमुदायत्वमपि । तत्र चायं विशेषः—घटत्वनिष्ठप्रमेयत्वावच्छिन्नप्रतियोगितानिरूपकतत्पर्य्याप्तिनिष्ठतद्व्यक्तित्वावच्छिन्ननिरूपकतानिरूपितानुयोगितावच्छेदकमेव, एवं तत्तदभावगतकूटत्वनिष्ठप्रमेयत्वावच्छिन्नप्रतियोगितानिरूपकतत्पर्य्याप्तिनिष्ठतद्व्यक्तित्वावच्छिन्ननिरूपकतानिरूपितानुयोगितावच्छेदकं तत्तद्व्यक्त्यभावत्वं तादृशप्रमेयत्वावच्छिन्नप्रतियोगितानिरूपकपर्य्याप्तिनिष्ठतादृशप्रमेयत्वावच्छिन्नप्रतियोगितानिरूपितत्वपर्याप्तित्वोभयधर्म्मावच्छिन्ननिरूपकतानिरूपितानुयोगितावच्छेदकब्रह्माण्डगतसमुदायत्वमिति वह्न्यभावीयप्रतियोगित्वाभावगतकूटत्वनिष्ठप्रमेयत्वावच्छिन्नप्रतियोगितानिरूपकीभूतघटाभावीयप्रतियोगित्वाभावगतकूटत्वप्रतियोगिकपर्याप्तिनिष्ठतद्व्यक्तित्वावच्छिन्ननिरूपितानुयोगितावच्छेदकत्वस्य घटाभावीयप्रतियोगित्वाभावे सत्त्वेन तादृशाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वस्य वह्न्यभावीयप्रतियोगित्वाभावगतकूटत्वे सत्त्वादिति चेन्न । तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वत्वनिवेशेपि उक्तरीत्या वह्न्यभावीयप्रतियोगित्वाभावगतकूटत्वमादायाव्याप्तितादवस्थ्यात् प्रकारान्तरेण तु मन्मतेपि तथानिवेशे तादृशकूटत्वमादायाव्याप्तिवारणसम्भवादिति चेत् । सत्यम् । धूमाभावीयप्रतियोगितारूपतत्तद्व्यक्त्यभावगताया अन्यतमत्वप्रतियोगिकपर्य्याप्तेर्नानात्वात् तत्तत्पर्याप्त्यन्यतमत्वावच्छिन्ननिरूपकतानिरूपितानुयोगितावच्छेदकत्वं तादृशाभावगतअन्यतमत्वत्वावच्छिन्नप्रतियोगिताकत्वपर्याप्तित्वोभयधर्म्मावच्छिन्ननिरूपकतानिरूपितानुयोगितावच्छेदकत्वं वा तादृशतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वं न तु तत्तत्पर्य्याप्तिनिष्ठतत्तद्व्यक्तित्वावच्छिन्ननिरूपकतानिरूपितानुयोगितावच्छेदकत्वम्, तथाच तादृशा-

नुयोगितानिरूपितउभयावृत्तिधर्म्मावच्छिन्नपर्याप्तिनिष्ठनिरूपकतासमानाधिकरणनिरूपकतानिरूपितप्रतियोगितावत्त्वस्य निवेशात् तादृशान्यतमत्वस्य एतादृशप्रतियोगितावत्त्वविरहात् तादृशाभावगतकूटत्वप्रतियोगिकपर्याप्तेरैक्येन तादृशाभावत्वावच्छिन्नानुयोगिताकतादृशाभावत्वावच्छिन्नानुयोगिताकतादृशपर्याप्तिप्रतियोगित्वस्य तादृशकूटत्वे सत्त्वात् तमादायातिव्याप्तिवारणसम्भवात् कूटत्वे यत्किञ्चित्वनिवेशप्रयोजनविरहेणानुपपत्तिविरहादिति । न च तादृशाभावत्वावच्छेदेन तादृशान्यतमत्वप्रतियोगिकपर्याप्तिरेकैव स्वीक्रियते इति तत्पर्य्याप्त्यनुयोगितावच्छेदकत्वस्य तादृशाभावत्वे सत्त्वात् तादृशान्यतमत्वमादायातिव्याप्तितादवस्थ्यमेवेति वाच्यम् । तथासति तादृशाभावगतकूटत्वेन सह तादृशान्यतमत्वस्य वैलक्षण्यानुपपत्तेः तस्यापि व्यासज्यवृत्तित्वादिति । तन्मदम् ।

असमवेतसंख्याऽभावादेव तादृशनिवेशाऽसम्भवः, कूटत्वस्य धीविशेषविषयत्वरूपत्वे विषयताया विषयभेदेन भिन्नतया तद्विषयत्वावच्छिन्नाधिकरणवृत्तित्वस्य धूमत्वादौ सत्त्वेन तत्तद्विषयत्वावच्छिन्नाधिकरणवृत्तित्वं नास्तीति सामान्याभावविरहादतिव्याप्तितादवस्थ्यात् । तदर्थं प्रकारान्तरानुसरणे तु वह्निभेदप्रतियोगिकपर्याप्तिमादायोक्तयुक्त्याऽतिव्याप्तिरिति ।

वस्तुतस्तु हेतुसमानाधिकरणाभावव्यक्तिनिरूपितप्रतियोगिताकपर्याप्तिकधीविशेषविषयत्वावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वाभावस्य ( तादृशाभावत्वावच्छिन्नानुयोगितानिरूपितउभयावृत्तिधर्मावच्छिन्ननिरूपकतावच्छेदकीभूतधर्मावच्छिन्ननिरूपकतानिरूपितधीत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्नधीनिष्ठावच्छेदकताभिन्नविषयतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततादृशधर्मावच्छिन्नावच्छेदकतानिरूपितधीनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयतात्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकारूपवृत्तिनिरूपकताकाधिकरणवृत्तित्वं नास्तीत्याकारकाभावस्य ) निवेश्यत्वात् । निरूपकतायां रूपवृत्तित्वञ्च स्वनिरूपितविषयतानिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तद्रूपवान् रसादित्यत्र तद्रूपाभावीयप्रतियोगित्वावच्छिन्नविषयतामादाय नातिव्याप्तिः, धूमवान् वह्नेरित्यत्र अयमेकः अयमेक इत्याकारकसकलधूमाभावीयप्रतियोगित्वाभावविशेष्यकएकत्वप्रकारकसमूहालंबनज्ञानीयएकत्वप्रकारतानिरूपितविशेष्यतात्वेन विषयताया व्यासज्यवृत्तितया प्रत्येकावृत्तित्वमिति तादृशविषयतामादाय नातिव्याप्तिः । न चाऽभावत्वेन सकलधूमाभावप्रतियोगित्वाभावावगाहि अभाव इतिधीविषयत्वस्यापितादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकतया एकत्वप्रकारतानिरूपितधीविशेषविषयत्वस्यैव व्यासज्यवृत्तितया तादृशविषयत्वस्य व्यासज्यवृत्तित्वेन तदवच्छिन्नवत्त्वस्य एकप्रतियोगित्वाभाववति धूमेऽपि सत्त्वेन तत्र धूमत्वस्य वृत्तेरिति वाच्यम् । व्यासज्यवृत्तिधर्मस्य पर्याप्तिरेका, अव्यासज्यवृत्तिधर्मस्य पर्याप्तिरनेका, तथाच हेतुसमानाधिकरणाभावव्यक्तिनिरूपितप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगितात्वावच्छिन्ननिरूप्यतानिरूपितोभयावृत्तिधर्मावच्छिन्ननिरूपकतावच्छेदकावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगितावद्धीविशेषविषयत्वावच्छिन्ननिरूपकताकाधिकरणतानिरूपितवृत्तित्वाभाववद्-

र्मः पारिभाषिकावच्छेदका इति. निवेशान्नातिव्याप्तिः । अभावत्वप्रकारतानिरूपितविषयता-
त्वावच्छिन्नप्रतियोगिताकपर्याप्तित्वावच्छिन्ननिरूपकतायामुभयावृत्तिधर्मावच्छिन्नत्वविरहात् ।
निरूपकतासामानाधिकरण्यमंपहाय निरूपकतावच्छेदकावच्छिन्नत्वनिवेशान्न पुनरतिव्याप्तिः,
अन्यथाऽनुयोगितात्वावच्छिन्ननिरूप्यतानिरूपिता या निरूपकता सा उक्तैकत्वप्रकारतानिरू-
पितविशेष्यतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिरन्यतरनिष्ठा या उभयावृत्तिधर्मावच्छिन्ना नि-
रूपकता सा एकत्वप्रकारतानिरूपितविशेष्यताशालिज्ञानीयएकत्वप्रकारतानिरूपितविषयता-
त्वावच्छिन्नप्रतियोगिताकपर्याप्तित्वावच्छिन्ना निरूपकता तत्समानाधिकरणा या निरूपकता
अभावत्वप्रकारतानिरूपिता विषयतासमानाधिकरणा या निरूपकताऽभावत्वप्रकारता-
निरूपिता विषयतात्वावच्छिन्नप्रतियोगितावद्धीविशेष्यविषयत्वावच्छिन्ननिरूपकताकाधिक-
रणत्वस्य एकाभाववति धूमेऽपि सत्त्वेन तन्निरूपितवृत्तित्वसत्त्वाद् धूमत्वस्याऽप्यव-
च्छेदकत्वं न स्यादिति वाच्यम् । तादृशधीवृत्त्युभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताभि-
न्नावच्छेदकत्वानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती विषयतात्वनिष्ठा-
वच्छेदकताभिन्नावच्छेदकत्वानिरूपिता याऽवच्छेदकता तदवच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-
गितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावद्वृत्तित्वस्यैव निवेशात्, वृत्तित्वं च स्वनिरूपि-
तावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तादृशरूपं च
तद्विषयतागतसमुदायत्वमेव, तद्वृत्तिनिरूपकताकाधिकरणताया एकस्मिन्नपि धूमेऽसत्वेन न
तमादायाऽतिव्याप्तिरिति चेन्न । असमवेतसंख्यानंगीकारात् । तादृशावच्छेदकतात्वावच्छिन्न-
प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यदेकत्वप्रकारतानिरूपितविषयतात्वगतविषयित्वं त-
न्नाऽभावत्वप्रकारतानिरूपितविषयत्वावच्छिन्ननिरूपकताया उक्तसम्बन्धेन सत्त्वाद् धूमवान्
वह्नेरित्यत्राऽतिव्याप्तिस्तदवस्थैवेति ।

परे तु तादृशाभावत्वावच्छिन्नानुयोगिताका धीत्वसमानाधिकरणोभयावृत्तिधर्मानिष्ठनि-
रवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपितत्वसम्बन्धावच्छेदकताभिन्ना सती
विषयितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या पर्याप्तीयप्रतियोगिता तन्निरूपि-
तनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितधीत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरव-
च्छिन्नावच्छेदकतासमानाधिकरणावच्छेदकताभिन्ना सती विषयितात्वनिष्ठावच्छेदकताभि-
न्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततादृशावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततादृशाव-
च्छेदकताद्वयनिरूपितविषयतानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततादृशावच्छेदकतानि-
रूपिता या निरूपकता तन्निरूपिताधिकरणतावन्निरूपितवृत्तित्वं नास्तीत्यभावस्य निवेशात् ।
तथाच तादृशविषयतात्वावच्छिन्ननिरूपकताकाधिकरणताया एकस्मिन्नपि धूमेप्यसत्वेन न
तामादायाऽतिव्याप्तिरिति । असमवेतसंख्यानङ्गीकारे पूर्वोक्तनिवेशाऽसंभवेनाऽतिव्याप्तिवार-
णाय अयमेक अयमेक अभावश्चेत्याकारकबुद्धिविषयतात्वेन व्यासज्यवृत्तित्वेन च स्वीकारा-
त् । अभावत्वावच्छिन्नविषयताभेदीविशिष्टबुद्धिनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदक-
तानिरूपितेत्यादि प्रतियोगितानिरूपिततादृशावच्छेदकतासमानाधिकरणावच्छेदकताकपरम्प-
रानिरूपितनिरूपकतयापि प्राप्ततया तस्या अयमेक अभावश्चेत्याकारकाव्यासज्यवृत्तिविषय-

त्वावच्छिन्नायास्तन्निरूपिताधिकरणतायाः धूमेऽपि सत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिरतः प्रतियोगितावच्छेदककुक्षौ सर्वत्रैवेतरवारकपर्याप्तिनिवेशः। तन्निवेशे तु बुद्धित्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकता भेदनिष्ठावच्छेदकता तन्निरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता इति न तामादायाऽतिव्याप्तिः। भेदवै० बुद्धौ निरूपितत्वघटितसामानाधिकरण्यसम्बन्धेन। ननु स्वरूपसम्बन्धेनाऽस्त्विति चेन्न। स्वरूपेणाभावत्वावच्छिन्नविषयताभेदविशिष्टतद्धीविषताया व्यासज्यवृत्तित्वेन तादृशविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य समनियतधर्मस्यैव स्वीकारेण तादृशाभावत्वस्य तथात्वाऽसम्भवेन तमादायाऽतिव्याप्तिः। यद्यपि अयमेक अभावश्चेति एकत्वप्रकारतानिरूपितइदन्त्वावच्छिन्नविषयतात्वेनाऽपि तद्धीनिरूपितविषयतायां व्यासज्यवृत्तित्वेन स्वीकारात् अभावत्वावच्छिन्नविषयताभेदस्य प्रतियोगितावच्छेदककुक्षावप्राप्ततया तादृशबुद्धेर्लक्षणाऽनाक्रान्तत्वेन न तमादाय दोषः। तथापि अयमेक अभावश्चेत्यत्राभावत्वावच्छिन्नाविषयता न विशिष्टतद्धीविषयतात्वपुरस्कारेणापि व्यासज्यवृत्तित्वस्य वक्तुं शक्यत्वेन एवं गृहीत्वा दोषस्य तादवस्थ्यात् इति पर्याप्तियिप्रातियोगितायामुभयाऽवृत्तिधर्मावच्छिन्नत्वञ्च पूर्वोक्तरीत्या बोध्यमिति ध्येयम्।

ननु हेतुसमानाधिकरणयत्किंचिदेकाभावीयप्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वस्याव्यासज्यवृत्तित्वेन व्यासज्यवृत्तितादृशाभावत्वेऽनंगीकारेण व्यासज्यवृत्तिधर्मस्यैव स्वीकारेण पूर्वोक्तनिवेशाऽसंभवात्। न च तादृशाऽभावत्वव्यापककूटत्वमेव निवेश्यते इति वाच्यम्। तद्रूपवान् रसादित्यादौ हेतुसमानाधिकरणाभावयिप्रतियोगितावृत्त्युभयावृत्तिपर्यन्तस्योपलक्षणविधयैव निवेशेन न पूर्वोक्तदोष इति चेन्न। धूमवान् वह्नेरित्यादौ तद्व्यक्तिनिरूपितपर्वतीयधूमस्वरूपप्रतियोगितावृत्तिउभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताभिन्ना सती स्वरूपसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती कालिकसम्बन्धावच्छिन्नावच्छेदकताभिन्ना सती संयोगसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगित्वाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वा(निरूपकप्रतियोगित्वाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वा)भावस्य तद्गतकूटत्वे एव सत्त्वेन तत्कूटत्वावच्छिन्नाधिकरणताया महानसीयधूमे सत्त्वेन तन्निरूपितवृत्तित्वाभावस्य गगने सत्त्वादतिव्याप्तिरिति। न च तादृशप्रतियोगितावच्छेदकत्ववृत्त्युभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावेत्यादि निवेश्यते इति वाच्यम्। तन्निवेशेपि तत्रैवाऽतिव्याप्तिवारकः, तथा कूटत्वस्य निवेशे तु तथैव गतिरिति ध्येयम्। नच तादृशाभावत्वव्याप्यत्वेऽपि यत्किञ्चित्त्वनिवेशादभावत्वव्यापककूटत्वमादाय लक्षणसमन्वयः, पर्यवसितार्थस्तु व्याप्यतासम्बन्धेन तादृशाभावत्ववृत्ति कूटत्वम्, तन्निवेशश्च तादृशाभावत्ववृत्तिउभयाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकताककूटत्वम्, अभावत्ववृत्त्युभयाभावश्च कूटत्वाभाववन्निरूपितवृत्तित्वाभावः, तथाच न कुत्रापि दोष इति वाच्यम्। घटाभावप्रतियोगित्वाभाववद्धथभावप्रतियोगित्वाभावगतकूटत्वमादाय वह्निमान् धूमादित्यादावव्याप्तिः। न च तथापि तादृशाभावत्वं यद्व्यक्तिनिरूपितवृत्तित्वाभावतन्निरूपितवृत्तित्वाभावत्वं पारिभाषिकावच्छेदके

निवेश्यमिति वाच्यम्। तादृशाभावत्वस्य शुद्धाभावत्वाऽनतिरिक्तत्वात् शुद्धाभावत्वे यद्व्यक्तिनि-
रूपितवृत्तित्वाभाववन्निरूपितवृत्तित्वस्य सत्त्वादसम्भवः। तदर्थं यदि हेतुसमानाधिकरणाभाव-
व्यक्तिनिरूपितप्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्ननिरूपकतावच्छेदकतात्वाव-
च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्व्यक्तिनिरूपितवृत्तित्वाभाववन्निरूपितवृत्ति-
त्वाभावनिष्ठनिरूपकतावच्छेदकव्यक्तिनिरूपितवृत्तित्वाभावो निवश्यते तथाच नोक्तदोष इति
चेन्न। असमवेतसंख्यानङ्गीकारे हेतुसमानाधिकरणाभावव्यक्तिनिरूपितप्रतियोगितात्वसमाना-
धिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यदभावत्वगतैकत्वरूपं
विषयत्वं तत्र यद्व्यक्तिनिरूपितवृत्तित्वाभाववन्निरूपितवृत्तित्वाभावत्वावच्छिन्ननिरूपक-
तावच्छेदकतात्वावच्छिन्नप्रतियोगितावच्छेदकत्वसत्त्वादतिव्याप्त्यसम्भवः। न च तादृशा-
भावत्वावच्छिन्ननिरूपकत्वं यद्व्यक्तिनिरूपितवृत्तित्वाभाववन्निरूपितवृत्तित्वाभाववत् तद-
वृत्तित्वं निवेश्यमिति वाच्यम्। निरूपकभेदेन निरूपकताया भेदात्तादृशाभावीयैकप्रतियोगि-
त्वाभावनिष्ठनिरूपकताकम् अन्यधूमव्यक्तिवृत्तित्वाभाववन्निरूपितवृत्तित्वाभावसत्त्वादति-
व्याप्तितो यद्व्यक्तिनिरूपितवृत्तित्वाभाववन्निरूपितवृत्तित्वं स्वनिरूपकतावच्छेदकतावत्त्व-
सम्बन्धेन। निवेशस्तु परम्परायाः संसर्गत्वानभ्युपगमे न सम्भवतीति चेन्न। तादृशनिरूप-
कतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तीया या धीत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठ-
निरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता-
भिन्ना सती विषयतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततादृशावच्छेदकतानिरूप-
कानुयोगिता तादृशानुयोगितानिरूपितपरम्परावच्छेदकत्ववति धीत्वसमानाधिकरणोभया-
वृत्तिधर्मे यद्व्यक्तिनिरूपितवृत्तित्वाभाववन्निष्ठनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-
पर्याप्त्यनुयोगितानिरूपितपरम्परयाऽवच्छेदकत्वाभाववत्त्वं विवक्षितम् तथाच न कोपि दोषः।

निवेशस्तु तादृशनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेन।
केचित्तु वै० स्वनिरूपितप्रतियोगित्वाभाववद्वृत्तित्वाभाववत्त्वसम्बन्धेन। तदप्यसत्। स्व-
त्वस्याननुगततया संसर्गांशे तदनिवेशेन निरूपितप्रतियोगतायाः सर्वत्रैव सत्त्वेन तदभावाऽ-
प्रसिद्धेः। यथाकथंचित्प्रसिद्धावपि कूटनिवेशस्याऽऽवश्यकतया पूर्वोक्तसंगतिरिति ध्येयम्।

मान्यास्तु तथाविधो—हेतुसमानाधिकरणो यो यत्किञ्चिदभाव इति। अत्र हेतुसमानाधिक-
रणाभावत्वमुपलक्षणम्, तथात्र तद्व्यक्तिनिरूपितप्रतियोगित्वं नास्तीति प्रतीतिसाक्षिकः
तद्व्यक्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततद्व्यक्तिनिष्ठावच्छेदकताभिन्नप्रति-
योगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततद्व्यक्तित्वनिष्ठावच्छेदकताकतद्व्यक्ति-
निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितद्व्यक्तिनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकः प्र-
थमाऽभावः। अत्र प्रथमाभावप्रतियोगितानिरूपिततद्व्यक्तित्वनिष्ठावच्छेदकता न हेतुसमाना-
धिकरणाभाववृत्तिरुभयाऽवृत्तित्वसामानाधिकरण्येनाऽनुगततया द्वितीयाभावप्रतियोगितावच्छेद-
कतयोपादेया अनुगमेन प्रयोजनाऽभावात् द्वितीयाभावप्रतियोगितानिरूपिताऽऽश्रयत्वसम्बन्धाव-
च्छिन्नतद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकताश्च उक्तसामानाधिकरण्येनाऽनुग-
तरूपेण तृतीयाभावप्रतियोगितावच्छेदकतयोपादेया एव, अन्यथा यत्किंचित्तद्व्यक्तित्वनिष्ठाव-

च्छेदकतावच्छेदकप्रतियोगिताकतृतीयाभावस्य साध्यतावच्छेदके सत्वेनाऽतिव्याप्तिः स्यात्। यद्यपि द्वितीयाऽभावस्तद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपिततद्भिन्नाऽवच्छेदकत्वानिरूपितावच्छेदकताभिन्नप्रतियोगितात्वानिष्ठावच्छेदकताभिन्नावच्छेदत्वानिरूपितप्रतियोगिताकाभावविनिरूपितवृत्तित्वं नास्तीति प्रतीतिसाक्षिकः तद्व्यक्तिनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नाऽवच्छेदकतात्वनिष्ठावच्छेदकताभिन्नाऽवच्छेदकत्वानिरूपिततद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वनिरूपित( तदवच्छेदकतानिरूपितभेदनिष्ठावच्छेदकताभिन्नाऽवच्छेदकतानिष्ठावच्छेदकताभिन्नाऽवच्छेकत्वाऽनिरूपित )तद्व्यक्तित्वनिष्ठाऽवच्छेदकतानिरूपिताऽवच्छेदकतात्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्ना( वच्छेदकताभिन्ना )भावत्वनिष्ठाऽवच्छेदकताभिन्नाऽवच्छेदकत्वानिरूपिततत्तन्निष्ठावच्छेदकतानिरूपिताऽभावनिष्ठाच्छेदकताभिन्नाऽवच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततत्तन्निष्ठावच्छेदकतानिरूपितप्रातियोगित्वसम्बन्धावाच्छिन्नावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततत्तन्निष्ठावच्छेदकतानिरूपितावच्छेदकताभिन्नप्रतियोगितात्वनिष्ठावच्छेदकताभेदनिष्ठावच्छेदकतात्वा भिन्नावच्छेदकत्वा निरूपिततत्तन्निष्ठावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नाभावत्वनिष्ठावच्छेदकताभिन्नाऽवच्छेदकत्वानिरूपितं तत्तन्निष्ठावच्छेदकता निरूपितावच्छेदकताभिन्नाऽवच्छेदकत्वानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितावच्छेदकताभिन्नवृत्तित्वत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततत्तन्निष्ठावच्छेदकानिरूपितप्रतियोगिताको द्वितीयाऽभावो भवति। तथापि स न तेन रूपेण तृतीयाऽभावप्रतियोगितावच्छेदकः येन रूपेण तस्य तथा त्वं तदग्रे व्यक्तीभविष्यति ।

अत्र द्वितीयाभावो यदि तद्व्यक्त्यवच्छिन्नप्रतियोगिताकाभावाधिकरणवृत्तित्वं नास्तीति प्रतीतिसिद्धः तद्व्यक्त्यवच्छिन्नत्वानिष्ठावच्छेदकताभिन्नप्रतियोगितात्वानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतेत्यादिघटितप्रतियोगिताकाभावत्वेन तृतीयाभावप्रतियोगितावच्छेदकतयोपादीयते, तदा तादृशाभावस्य निरूपितत्वसम्बन्धावच्छिन्नतद्धूमात्मकप्रतियोगितानिरूपितवृत्तित्वविशिष्टतद्व्यक्तिघटितवृत्तित्वप्रतियोगिकत्वेन, तद्व्यक्तिनिरूपितप्रतियोगिताघटोभयाभावाधिकरणनिरूपितवृत्तित्वप्रतियोगिकत्वेन वा गगनादावेव तत्सत्त्वाद्व्यभिचारिमात्रेऽतिव्याप्तिः स्याद्। यदि तद्व्यक्तिनिष्ठावच्छेदकतानिरूपिततत्तद्व्यक्तिनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावत्वेन तृतीयाऽभावप्रतियोगितावच्छेदकतया निवेश्यते तदा तथाविधाभावान्तर्गतस्य निरुक्तवृत्तित्वसामान्याभावस्य धूमत्वे सत्वेनाऽतिव्याप्तिविरहेऽपि वृत्तित्वघटोभयाभावस्य घटनिरूपितवृत्तित्वाभावस्य घटवृत्तित्वविशिष्टाभावाधिकरणनिरूपितवृत्तित्वाभावस्य तद्व्यक्तिनिष्ठावच्छेदकतानिरूपितवह्न्यभावनिष्ठान्यतरावच्छिन्नावच्छेदकतानिरूपितप्रतियोगिताकाभावाधिकरण निरूपितवृत्तित्वाभावस्य तद्व्यक्तित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितवन्ह्यभावव्यक्तित्वनिष्ठाऽन्यतरावच्छिन्नावच्छेदकत्वानिरूपितावच्छेदकताकप्रतियोगि-

ताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्य च सामान्याभावरूपतृतीयाभावप्रतियोगिनो वह्नित्वेऽपि सत्वेनाऽव्याप्तिः। तादृशाभाववद् यद्यद् तद्व्यक्तिभेदकूटनिवेशेऽपि सैवेति इतरवारकपर्याप्तिघटितद्वितीयाभावस्य निवेशनम्।

अथ हेतुसमानाधिकरणाभाववृत्तित्वोभयावृत्तित्वसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितेत्याद्यभावनिष्ठावच्छेदकताकप्रतियोगिताकभेदत्वेन तृतीयाभावो निवेश्यते, तदा तद्व्यक्तिनिरूपितप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभाववद्भेदरूपस्य सामान्याभावस्यैव वह्नित्वे सत्वेन सद्धेतौ नाऽव्याप्तिरिति चेन्न। तथासति घटाभावनिष्ठतद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितेत्याद्यभाववद्भेदस्य घटाभावव्यक्तित्वविशिष्टाऽवच्छेदकताघटिताऽभाववद्भेदस्य घटाभावव्यक्तिविशिष्टावच्छेदकतानिरूपितेत्याद्यभाववद्भेदस्य घटनिष्ठप्रतियोगित्वविशिष्टावच्छेदकतानिरूपितेत्याद्यभाववद्भेदस्य तादृशप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठप्रतियोगित्वाभावविशिष्टावच्छेदकतानिरूपितेत्याद्यभाववद्भेदस्य तादृशाभावनिष्ठावच्छेदकतानिरूपितधूमनिष्ठावच्छेदकताकप्रतियोगिताकाभाववद्भेदस्य तादृशाधिकरणनिष्ठावच्छेदकताकतादृशवृत्तित्वत्वधूमत्वत्वनिष्ठतद्व्यक्तित्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभाववद्भेदस्य तादृशाधिकरणनिष्ठावच्छेदकताकवृत्तित्वावच्छिन्नप्रतियोगिताकघटत्ववृत्त्यभाववद्भेदस्य तादृशाभाववद्घटत्ववद्भेदस्य धूमत्वेऽपि सत्वेनाऽतिव्याप्तिः स्यादिति सामान्यभेदरूपतृतीयाभावो निवेश्यः, तथाचोक्ताऽव्याप्तिवारणायेतरवारकपर्याप्तिमदवच्छेदकताकप्रतियोगिताकप्रथमाभावघटितस्य तादृशस्य द्वितीयाऽभावस्य तृतीयाभावप्रतियोगितावच्छेदकतयोपादानम्। न च प्रथमाभावप्रतियोगिता—तदवच्छेदकताविशेषाणां तदनिरूपितत्वादीनां तृतीयाभावप्रतियोगितावच्छेदकद्वितीयाभावप्रतियोगितावच्छेदकतायां प्रतियोगित्वतदवच्छेदकत्वमात्रमत्र प्रवेश्यम्, तावतैवोक्तदोषाणां वारणात्। प्रतियोगित्वनिष्ठावच्छेदकताभिन्नाऽभावत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपितेत्यादि तु पूर्वदोषवारणाय निवेशनीयम्। अत्र तद्व्यक्तित्वेतरधर्मावच्छिन्नघटाभावव्यक्तिनिष्ठावच्छेदकताकप्रतियोगिकाभावाधिकरणनिरूपितवृत्तित्वाभावस्य धूमत्वेऽसत्वेऽपि तद्व्यक्तित्वेतरधर्मानवच्छिन्नत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितेत्यादिप्रतियोगिताकाभावस्यापि तादृशवृत्तित्वाभावत्वेन तृतीयाभावप्रतियोगितावच्छेदकतया तस्य धूमत्वे सत्वेन धूमसाध्यकेऽतिव्याप्तेरप्यसम्भवादिति वाच्यम्। तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्क्षणविशिष्टावच्छेदकतानिरूपितेत्यादिघटितवृत्तित्वाभावस्यापि निरुक्ततृतीयाभावप्रतियोगितावच्छेदकत्वेन तस्याऽपरक्षणावच्छेदेन वह्नित्वे सत्वात्, तत्क्षणविशिष्टघटितवृत्तित्वस्य तत्क्षणावच्छेदेनैव सत्वादिति वह्निमान् धूमादित्यादावव्याप्तेः, तद्व्यक्तित्वेतरधर्मानवच्छिन्नत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वादेरवश्योपादेयत्वात्। एवमन्येषामपि क्षणघटिताऽभावमादायाऽनिरूपितत्वान्तानां सार्थक्यमिति। एवं च तद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितत्वमात्रनिवेशे तस्याप्युक्तरीत्याऽव्याप्तिवारणायेतरवारकस्यैव निवेशनीयतया तद्व्यक्तित्वेतरधर्मानवच्छिन्नतद्व्यक्तित्वावच्छिन्नतद्व्यक्तिनिष्ठावच्छेदक-

ताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्याऽतथात्वात्तद्व्यक्तित्वावच्छिन्नतद्व्यक्ति-निष्ठावच्छेदकताकप्रतियोगिताकाभावाधिकरणवृत्तित्वाभावस्य तत्क्षणविशिष्टतद्व्यक्तिनिरू-पितप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वस्य धूमत्वेऽसत्त्वेनाऽसद्धेतुतयाऽतिव्याप्तेस्त-द्व्यक्तित्वेतरधर्मानवच्छिन्नत्वमवश्यं निवेश्यम् , तथाच तादृशाऽनवच्छिन्नत्वनिष्ठावच्छेदकता-भिन्नतादृशावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकताकप्रतियोगिताक-यथोक्तवृत्तित्वाभावान्तर्गतस्य तद्व्यक्तित्वेतरधर्मानवच्छिन्नतद्व्यक्तित्वावच्छिन्नावच्छेदकताकप्र-तियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्यैव धूमत्वे सत्त्वेनाऽतिव्याप्तेर्नावकाशः ।

एतेन वह्न्यभावव्यक्तित्वहेतुसमानाधिकरणाभावनिष्ठतद्व्यक्तित्वान्यतरवन्निरूपितेत्या-द्यभावमादायाऽव्याप्तिवारणाय तद्व्यक्तिनिष्ठावच्छेदकतायां निरवच्छिन्नतद्व्यक्तित्वनिष्ठावच्छेद-कतानिरूपितत्वं निवेश्यम् , प्रकृते तद्व्यक्तित्वनिष्ठावच्छेदकताऽन्यतरत्वावच्छिन्नेति तद्व्य-क्तित्वेतरधर्मानवच्छिन्नत्वनिवेशनमफलमिति प्रत्युक्तम् । प्रागुक्तक्रमेणैव तत्सार्थक्यात् । तद्व्य-क्तित्वनिष्ठावच्छेदकतापि निरवच्छिन्नैव प्रकृते निवेश्या, अन्यथोक्तवृत्तित्वाभावप्रतियोगिनः तत्क्षणविशिष्टतद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपिततद्व्यक्तिनिष्ठावच्छेदकतानिरूपितप्रतियोगिता-काभावाधिकरणवृत्तित्वस्यैव सत्त्वाद् धूमत्वे न तादृशाभाववत्त्वमित्यतिव्याप्तिः स्यात् । न च तद्व्यक्तित्वनिष्ठाऽवच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरवच्छिन्नतद्व्यक्तित्वनिष्ठावच्छे-दकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्याप्युक्ताभावान्तर्गततया तस्यैव धूमत्वे सत्त्वेनाऽतिव्याप्त्यभाव इति वाच्यम् । तत्क्षणवैशिष्ट्यप्रक्षेपेणाऽव्याप्ति-वारणाय तद्व्यक्तिनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वानिष्ठावच्छेद-कताभिन्नावच्छेदकत्वानिरूपितत्वेनैव तद्व्यक्तित्वनिष्ठावच्छेदकतायाः प्रवेश्यतया निरवच्छिन्न-त्वस्याधिकस्याऽवच्छेदकतायां प्रवेशेनोक्तवृत्तित्वाभावस्याऽतथात्वेनाऽतिव्याप्तेर्दुर्वारत्वादिति ।

तद्व्यक्तित्वेतरधर्मावच्छिन्नत्वादिनिष्ठावच्छेदकताभिन्नाऽवच्छेदकता तद्व्यक्तित्वावच्छिन्न-त्वादिनिष्ठावच्छेदकताभिन्नत्वेन विशेषणीया, तेन तद्व्यक्तित्वेतरधर्मानवच्छिन्नतद्व्यक्तित्वावच्छि-न्नावच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्याप्युक्ताभावान्तर्गततया तस्यैव धूमत्वे सत्त्वेनाऽतिव्याप्तेरनवकाशात्, अन्यथा तद्व्यक्तित्वेतरधर्मावच्छिन्नावच्छे-दकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्यैव तादृश-त्वेन तत्प्रतियोगिनो घटाभावाद्यात्मकतद्व्यक्तिनिरूपितप्रतियोगित्वप्रतियोगिताकाभावाधिकर-णनिरूपितवृत्तित्वस्य संयोगादिध्वंसप्रतियोगिताव्यक्तिनिरूपकाभावाधिकरणनिरूपितवृत्तित्वा-त्मकस्य च धूमत्वे सत्त्वेनाऽतिव्याप्तिः स्यात्, तद्व्यक्तेश्च स्वरूपत एव भानाभ्युपगमेन तन्निष्ठावच्छेदकतायामुक्तानिरूपितत्वस्य ध्वंसप्रतियोगिताया अनवच्छिन्नत्वेन तद्व्यक्तित्वे-तरधर्मानवच्छिन्नत्वस्य च सत्त्वादिति । एवं च तद्व्यक्तेः स्वरूपतो भानाभ्युपगमेऽपि त-द्व्यक्तित्वावच्छिन्नत्वानिष्ठावच्छेदकतानिरूपितत्वादीनां निवेशनमफलतामासादयति, तथाहि— तद्व्यक्तित्वेतरधर्मानवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वस्य घटाभावात्मकतद्व्यक्तिनिरू-पितप्रतियोगिताकाभावसाधारण्येन तदवच्छिन्नवृत्तित्वस्य धूमत्वे सत्त्वेन तद्व्यक्तित्वेतरधर्मा-वच्छिन्नावच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्याऽसत्त्वेपि तद्व्यक्ति-

त्वेतरधर्मानवच्छिन्नतद्व्यक्तित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावाधिकरणवृत्तित्वाभावस्यैव सत्त्वेनाऽतिव्याप्तेरसम्भवः, घटाभावनिष्ठतद्व्यक्तित्वेतरधर्मानवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वस्य वह्न्यभावात्मकतद्व्यक्तिनिरूपितप्रतियोगित्वाभावेऽसत्त्वेपि घटाभावात्मकतद्व्यक्तिनिरूपितप्रतियोगित्वाभावेऽपि सत्त्वेन तदवच्छिन्नवृत्तित्वाभावस्य तादृशतद्व्यक्तित्वेतरधर्मानवच्छिन्नतद्व्यक्तित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य च सुतरामेव वह्नित्वेऽसत्त्वादव्याप्तेश्च सुतरामसम्भवः। तादात्म्येन साध्यतावच्छेदकतास्थले तद्व्यक्तित्वेतरधर्मानवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्याऽप्रसिद्धत्वेऽप्यनवच्छिन्नत्वावच्छिन्नत्वविशेषितावच्छेदकताघटिताभावस्यैव प्रसिद्धिसम्भवेन नाऽव्याप्त्यवकाशः। यदि वह्न्यभावात्मकतद्व्यक्तिनिष्ठावच्छेदकताव्यक्तिनिरूपितप्रतियोगितातादृशप्रतियोगितात्मकतद्व्यक्तिनिरूपिताभाव—तादृशाभावात्मकतद्व्यक्त्याधिकरणतद्व्यक्तिवृत्तित्वघटिताभावानामपि यथोक्ताभावान्तर्गतत्वेन वह्नित्वे सत्त्वादव्याप्त्या तत्तन्निष्ठावच्छेदकतानिरूपितत्वस्य निवेश इत्युच्यते, तदा सावच्छिन्नत्वमात्रमेव प्रवेश्यम्, नतु तत्तन्निष्ठावच्छेदकतानिरूपितत्वमपि प्रयोजनाभावात्। अवच्छेदकताकप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वाभावस्योक्ताभावान्तर्गतत्वसम्भवेऽपि तस्य गगनाद्यवृत्तावेव प्रसिद्धत्वादप्रसिद्धत्वाच्च क्षतिकरत्वाभावादिति।

अत्रेदमवधेयम्। यथोक्तवृत्तित्वाभावाधिकरणत्वस्य निरवच्छिन्नविशेषतया क्षणघटिताभावमादाय दोषाऽसम्भवात्, वह्न्यभावघटिताभावान्यतरनिष्ठावच्छेदकताया अपि तद्व्यक्तित्वानवच्छिन्नत्वात्, वह्न्यभावव्यक्तित्वघटाभावव्यक्तित्वान्यतरनिष्ठावच्छेदकताया अपि निरवच्छिन्नत्वाभावेन प्रतियोगित्वनिष्ठा"वच्छेदकतानिरूपितत्वा"न्तानामितरवारकन्यूनवारकपर्याप्तिनिवेशनं विफलमेवेति। एवं च निरवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिता सती हेतुसमानाधिकरणाभाववृत्ति उभयावृत्तित्वसमानाधिकरणाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता या तद्व्यक्तिनिष्ठावच्छेदकतानिष्ठावच्छेदकता तन्निरूपितप्रतियोगित्वनिष्ठावच्छेदकताभिन्नाभावत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसावच्छिन्नावच्छेदकताभिन्नवृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको द्वितीयाभावः तृतीयाभावप्रतियोगितावच्छेदकः। यद्वा प्रतियोगित्वनिष्ठावच्छेदकताभिन्नाऽभावत्वनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वाभावो अभावनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वाभावे निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नवृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वाभावश्चाऽखण्ड एव तद्व्यक्तित्वेन तत्तदवच्छेदकप्रतियोगित्वयोर्विशेषणम्। तथासति तृतीयाभावश्च निरवच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितत्वनिष्ठावच्छेदकताभिन्नोक्तसामानाधिकरण्यनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकताभिन्नाधेयत्वसम्बन्धावच्छिन्नावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नाऽवच्छेदकत्वाऽनिरूपितावच्छेदकताभिन्नाऽऽधेयत्वसम्बन्धावच्छिन्नतद्व्यक्तिनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छे-

दकत्वानिरूपितावच्छेदकताभिन्नप्रतियोगित्वनिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेकत्वानिरूपितावच्छेदकताभिन्नाभावानिष्ठाधेयत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नतद्व्यक्तिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकताभिन्नतद्व्यक्तिनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकताभिन्नवृत्तितात्वावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नतद्व्यक्तिनिष्ठावच्छेदकताभिन्नप्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकताभिन्नाभावत्वनिष्ठावच्छेदकत्वानिरूपितावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदरूपः पर्यवसितः । इतरवारकपर्याप्तिनिवेशनफलं प्रागेव प्रसङ्गादभिहितम् । धूमत्वत्वाभावात्मकतद्व्यक्तिमद्भेदादिकमादायाऽतिव्याप्तिवारणायावच्छेदकतायां सावच्छिन्नत्वमात्रं परं निवेशनीयमेवेति ।

अत्रोक्ताऽनिरूपितत्वविशिष्टावच्छेदकतात्वावच्छिन्नभेदघटितानिरूपितत्वस्य निवेशापेक्षया तादृशानिरूपितत्वस्याऽतिलाघवम्, यथा यथा चाऽनिरूपितत्वनिष्ठावच्छेदकताकभेदघटितानिरूपितत्वस्य निवेशो भवेत्तथा तथा गौरवपरम्परोपनिपातः स्यादिति लाघवानुरोधेनैव न्यूनवारकस्य निवेशनम् । इदमभिप्रेत्यैव द्वितीयाभावेपि अनुपदमेव तन्निवेशितमिति सूक्ष्ममीक्षणीयमन्वीक्षारसिकैरिति । केचित्तु वृत्तित्वघटोभयाभावमादायाऽव्याप्तिवारणायेतरवारकपर्याप्तिनिवेशस्याऽऽवश्यकतया परम्परानिरूपितत्वोपगमेऽसम्भववारणाय साक्षात्परम्परया वाऽवच्छेदकानां सर्वेषामेव तत्रैवेतरवारकोऽवश्यमेव निवेश्यो नान्यत्र प्रयोजनाभावात्, अधिकविशेषणघटिताभावमादाय दोषस्यापि तत एव वारणादिति ।

यत्तु तत्र तत्रैवेतरवारकनिवेशे तु बहु अवच्छेदकतायामुत्तरोत्तरपदार्थनिष्ठावच्छेदकतानिरूपितत्वस्यापि सत्त्वेनाऽसम्भववारणाय तद्भेदानामपि निवेशनीयतयाऽतिगौरवापत्त्या वृत्तित्वनिष्ठप्रतियोगितायामेव निवेशनीयमिति । तन्न । परस्परनिरूप्यनिरूपकभावानभ्युपगमादिति वदन्ति । परे तु इतरवारकनिवेशेऽपि तत्रोभयाभावादिकमादाय दोषवारणाय तत्रापि पुनरितरवारकपर्याप्तिनिवेशे अनवस्थेतेतरवारकनिवेशनपरम्परापात इति प्रतियोगितावैलक्षण्याभ्युपगमेन तत्परीहारो, विलक्षणप्रतियोगितासम्बन्धेन वोक्तवृत्तिताविशिष्टाभाववद्भेद एव निवेश्यतां तावतैव सर्वदोषवारणादिति प्राहुरित्युपरम्यते इति प्रवदन्ति ।

अथात्र किं तावदुभयाऽवृत्तित्वम्, स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वमित्युच्यते तद्घटगगनोभयभेदविशिष्टत्वस्यैव तद्घटनिष्ठतद्व्यक्तित्वे सत्त्वेनाऽतोत्र भेदो व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकः प्रतियोग्यवृत्तिर्वा बोध्यः । उभयभेदश्च न तादृशः । तद्रूपवद्भेदश्च तद्रूपनाशकालावच्छेदेन तद्घटे विद्यमानोऽपि न निरवच्छिन्नस्वरूपसम्बन्धेन न वा प्रतियोग्यवृत्तिः । स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वमेव वा सम्बन्धः । न च तद्व्यक्तित्वमुभयत्वावच्छिन्नवृत्तितद्घटभेदाभावाभावस्य तद्घटभेदस्वरूपत्वेन तद्व्यक्तित्वाश्रयतद्घटभेदाभावस्य तद्घटभेदप्रतियोगितानुयोगितात्वेऽपि स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वस्वावच्छिन्नाधिकरणतावद्वृत्तित्वोभयसम्बन्धेन भेदत्वविशिष्टान्यत्वस्य विवक्षया तद्व्यक्तित्वेऽप्युभयावृत्तित्वमुपपाद-

नयिम् तद्घटभेदत्वाभावाभावस्य तद्घटभेदस्वरूपत्वेन तद्घटभेदत्वाभावे तद्घटभेदत्वनिरूपितप्रतियोगित्वाश्रयत्वतदवच्छिन्नाधिकरणत्वयोः सत्त्वेऽपि स्वनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टप्रतियोगित्वन्तु न तत्र वर्त्तते इति प्रकृते तादृशप्रतियोगितावद्वृत्तित्वमेव सम्बन्धः। अत्र वृत्तित्वं न स्वरूपेण सत्त्वस्योभयाऽवृत्तित्वप्रसंगात्। नापि तेषामन्यतमसम्बन्धेन स्वरूपेणोभयाऽवृत्तेर्द्रव्यत्वस्याऽतथात्वापत्तेः। नापि येनसम्बन्धेनोभयाऽवृत्तित्वन्तेन सम्बन्धेन, तत्पर्वतानुयोगिकसंयोगेन वह्नेरुभयाऽवृत्तित्वाप्रसंगात् तत्सम्बन्धावच्छिन्नवृत्तिताद्वयस्याऽप्रसिद्धेः। एवं च वाच्यत्वतद्व्यक्तित्वान्यतरत्वादिना तद्व्यक्तित्वस्यापि उभयवृत्तित्वेन तत्राऽव्याप्तिः। घटत्वेन संयोगेनाभयावृत्तेर्वह्नित्वेनोभयावृत्ति तत्राप्यव्याप्तिश्चेति चेद्। भेदत्वविशिष्टवृत्तित्वाभाववत्त्वमेव तत्। वैशिष्ट्यं स्वावच्छिन्नाधिकरणतावन्निरूपितत्व—स्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्नवृत्तितावत्त्वोभयसम्बन्धेन, वृत्तितावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन वृत्तिता च येन रूपेणोभयावृत्तित्वं चिकीर्षितं तद्रूपावच्छिन्ना,— अभावश्च येन सम्बन्धेनोभयाऽवृत्तित्वं विवक्षितं तत्सम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, एवं च भेदत्वविशिष्टा वृत्तिता तद्व्यक्तित्वनिष्ठा कालिकसम्बन्धावच्छिन्नैव। संयोगसम्बन्धावच्छिन्नैव वह्निनिष्ठा वृत्तिता भेदत्वविशिष्टा। तद्व्यक्तित्वनिष्ठाऽन्यतरत्वावच्छिन्नवृत्तिता च न तद्व्यक्तित्वावच्छिन्ना घटत्वावच्छिन्नवृत्तिता न वह्निनिष्ठेति नैकस्यापि दोषस्याऽवकाशः। कालिकेन गगनादीनामवृत्तित्वे वृत्तितास्थाने सम्बन्धिता निवेश्या। वाच्यत्वनिष्ठवृत्तिताविशिष्टत्वं स्वरूपसम्बन्धावच्छिन्नतद्व्यक्तिनिष्ठवृत्तितायां वर्तते इति सामानाधिकरण्यप्रवेशः। कालिकसम्बन्धावच्छिन्नतद्व्यक्तित्वनिष्ठवृत्तितावत्त्वस्य स्वरूपसंबन्धावच्छिन्नतद्व्यक्तित्वनिष्ठवृत्तितायामिति स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशः। येन रूपेणोभयाऽवृत्तित्वं चिकीर्षितं तद्रूपावच्छिन्नत्वस्यान्यतरत्वावच्छिन्नवृत्तितामादाय दोषवारणाय प्रथमवृत्तितायान्निवेशनीयतया सामाधिकरण्यमनिवेश्यमेवेति।

यद्वा वस्तुमदन्यत्वमुभयाऽवृत्तित्वम्। वस्तुमत्ता च स्ववृत्तित्वस्वनिष्ठप्रतियोगिताकभेदवद्वृत्तित्वोभयसम्बन्धेन। अत्रापि पूर्वक्रमेण दोषवारणाय भेदः प्रतियोग्यवृत्तित्वेन विशेषणीयः।

स्वनिरूपितत्वस्वानिरूपितवृत्तित्वोभयसम्बन्धेन स्वनिष्ठप्रतियोगिताविशिष्टानुयोगित्वावच्छिन्नाधिकरणत्वम्, स्वनिष्ठप्रतियोगित्वावच्छिन्ननिरूपकतानिरूपितनिरूपकतावच्छेदकधर्मावच्छिन्नाधिकरणत्वं वा विवक्षणीयम्।

वस्तुविशिष्टतद्धर्मावच्छिन्नसम्बन्धित्वाभाव एव पर्यवसितार्थः। वै० स्वनिरूपितत्व–स्वनिष्ठप्रतियोगिताविशिष्टभेदत्वावच्छिन्नाधिकरणतावन्निरूपितसम्बन्धितावत्त्वोभयसम्बन्धेन। सम्बन्धितावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन। अभावश्च तत्सम्बन्धावच्छिन्नसम्बन्धिताप्रतियोगिताकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताक इति।

अथवा द्वित्वावच्छिन्ननिरूपितवृत्तितासामान्ये ... न्धावच्छिन्नत्वयद्धर्माव-

**समनियताभावयोरैक्यानुपगमाच्च घटादिसामान्याभावस्यैव घटीयादिसंयोगेन प्रमेयादिसामान्याभावतया पुनर्नाऽप्रसिद्धिः ।**

च्छिन्नत्व एतत्त्रितयाभावस्तत्त्वम् तेन सम्बन्धेन तेन रूपेणोभयाऽवृत्तित्वम् । स्वरूपसम्बन्धावच्छिन्नतद्व्यक्तित्वत्वावच्छिन्नतद्व्यक्तित्वनिष्ठा वृत्तिता न द्वित्वावच्छिन्ननिरूपिता घटत्वाद्यवच्छिन्ना न वह्न्यादिनिष्ठा संयोगसम्बन्धावच्छिन्ना न द्रव्यत्वादिनिष्ठा प्रमेयत्वान्यतरत्वाद्यवच्छिन्ना तद्व्यक्तित्वनिष्ठा न तद्व्यक्तित्वत्वाद्यवच्छिन्नेति न कुत्रापि दोष इति ध्येयम् ।

**समनियताभावयोरिति** । ननु अत्र हेतुसमानाधिकरणयत्किञ्चिदभावनिरूपितप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमवश्यं निवेशनीयम्, अन्यथा समवायसम्बन्धावच्छिन्नवह्न्यभावनिरूपितप्रतियोगित्वाभाववति वह्नित्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वाद्वह्निमान् धूमादित्यादावव्याप्तिः। न च महानसीयसंयोगेन वह्न्यभावमादाय पुनस्तत्राऽव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकसम्बन्धस्येतरवारकपर्याप्तिं निवेशयित्वा वारणात्, तथाच समनियताभावयोरैक्येपि घटीयसंयोगेन प्रमेयाभावनिरूपितप्रतियोगित्वस्याऽतथात्वेन कुतोऽप्रसिद्धिः । न चोक्तदोषवारणायाऽभावे एव साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वमितरवारकपर्याप्तिश्च तत्रत्यप्रतियोगितायां निवेश्येत्यप्रसिद्धिसम्भव इति वाच्यम् । तथासति महानसीयवह्निसंयोगेन वह्न्यभावमादायाऽव्याप्त्यापत्तेः । तादृशाभावस्य संयोगेन महानसीयवह्न्यभावानतिरेकेण साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वादिति चेत् ।

अत्र केचित् । यत्र संयोगेन द्रव्यस्य साध्यता प्रमेयत्वादिकं च हेतुस्तत्राऽतिव्याप्तिः, संयोगेन द्रव्याभावस्य संयोगेन प्रमेयसामान्याभावस्य चैक्यात् साध्यतावच्छेदकसंयोगसम्बन्धेनाऽवच्छिन्नं यत्प्रमेयनिष्ठं प्रतियोगित्वं तत्सामान्यशून्यत्वाऽप्रसिद्ध्या ईदृशाभावस्य लक्षणाऽघटकत्वेन साध्यतावच्छेदकसंयोगसम्बन्धेन घटाभावस्यैव सौलभ्यात् तत्प्रतियोगितासामान्यशून्याऽवृत्तिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वात्, अतः प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपहाय तत्सम्बन्धावच्छिन्नप्रतियोगिताकत्वमेवाऽभावे विवक्षणीयम्, तथाच संयोगेन घटाभावस्य लक्षणघटकत्वेऽपि तन्निरूपितघटीयसंयोगसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगित्वाभावाऽप्रसिद्ध्यैवोक्तस्थले नातिव्याप्तिः, एवं सति साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाभावाऽप्रसिद्ध्याऽसम्भवभिया समनियताभावयोरैक्यानभ्युपगमः स्वीकार्य इत्याहुः । तन्मन्दम् । समवायसम्बन्धावच्छिन्नप्रतियोगितासामान्यशून्यत्वाऽप्रसिद्ध्याऽभावान्तरप्रतियोगितानतिरिक्तवृत्तिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वेन समवायेन प्रमेयसाध्यकवाच्यत्वादिहेतावतिव्याप्तिवारणाय यद्धर्मव्यापकतावच्छेदकं तादृशप्रतियोगितात्वं तद्धर्म एव पारिभाषिकावच्छेदक इति वक्ष्यमाणविवक्षणेन तत्रातिव्याप्तिवारणसम्भवे तद्वारणाय तादृशप्रयासस्याऽनुचितत्वादिति । उक्तरीत्या महानसीयवह्निसंयोगेन वह्न्यभावमादायाऽव्याप्तितादवस्थ्याच्च ।

परे तु प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेपि द्रव्यसाध्यकव्यभिचारिण्यतिव्याप्तिवारणायाऽभावे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वनिवेशस्याऽऽवश्यकतया वह्निप्रतियोगिकसंयोगेन वह्निसाध्यकधूमहेतुकस्थलेऽव्याप्तिः, तादृश-

संयोगेन घटाभावस्य तादृशसम्बन्धेन यावत्त्वावच्छिन्नाभावस्य चैक्येन वह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नघटाभावनिरूपिततत्सम्बन्धावच्छिन्नयावत्त्वावच्छिन्नप्रतियोगित्वाभावाऽप्रसिद्धेरित्याहुः ।

केचित्तु प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशेऽपि प्रतियोगित्वाभावप्रतियोगितावच्छेदकत्वस्य संयोगसम्बन्धावच्छिन्नत्वेऽपि स्वीकारेण गौरवादतोऽभावे एव साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वं निवेश्यम्, तथाच तद्व्यक्तिनिरूपितत्वप्रतियोगितात्वोभयधर्मस्यैव प्रतियोगितावच्छेदकत्वमिति न गौरवमिति । तदपि मन्दतरम् । प्रतियोगित्वाभावस्यापि प्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगित्वाभावार्थकतया प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वे विरहात् । वस्तुतस्तु संयोगेन घटाभावस्य संयोगेन घटघटान्यप्रमेयोभयाभावस्यैक्यतया घटाभावनिरूपितसंयोगेन घटघटान्यप्रमेयोभयत्वावच्छिन्नप्रतियोगित्वाभावाऽप्रसिद्ध्याऽव्याप्त्यापत्तेः, घटीयसंयोगेन प्रमेयसामान्याभावस्य चोपलक्षणत्वादिति दिक् ।

ननु विशिष्टसत्ताभाववान् गुणत्वादित्यादावव्याप्तिः, साध्याभावस्यापि सत्तारूपतया हेतुसमानाधिकरणत्वेन तन्निरूपितप्रतियोगित्वाभाववति साध्यतावच्छेदकस्याऽवृत्तित्वात् । न च हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूताऽनुयोगितानिरूपितत्वं प्रतियोगितायां निवेश्यमतो नाऽव्याप्तिरिति वाच्यम् । घटघटाभावत्वोभयाभाववान् घटत्वादित्यादावव्याप्त्यापत्तेः, तत्र हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतघटाभावत्वरूपानुयोगितानिरूपितसाध्यनिष्ठप्रतियोगित्वाभाववति साध्यतावच्छेदकस्याऽवृत्तित्वात् । न च तादृशानुयोगिताविशिष्टत्वमेव स्वनिरूपितत्वस्वाश्रयनिरूपितत्वोभयसम्बन्धेन प्रतियोगितायां निवेश्यम्, तावतैवोक्तदोषवारणादिति वाच्यम् । घटाभावत्वघटाभावोभयाभाववान् पटत्वादित्यत्राव्याप्त्यापत्तेः । तत्र हेत्वधिकरणवृत्तितावच्छेदकघटाभावत्वरूपानुयोगिताविशिष्टत्वस्य साध्यनिष्ठप्रतियोगितायां सत्त्वात् । न च स्वाश्रयनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपित प्रतियोगितायां निखिलप्रमेयनिरूपितत्वेन स्वनिष्ठानुयोगित्वानिरूपितत्वविरहेण प्रमेयाभावाभावत्वरूपहेत्वधिकरणवृत्तितावच्छेदकानुयोगिताविशिष्टत्वविरहेण घटाभावस्य लक्षणघटकत्वादतोऽनुयोगितावैस्वनिरूपितत्वस्वनिष्ठानुयोगित्वावृत्त्युभयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्वाभाववत्त्वोभयसम्बन्धेन, तथाच प्रमेयाभावाभावत्वत्वेन प्रमेयाभावनिष्ठप्रतियोगितात्वेनैव निरूप्यनिरूपकभावः, न तु प्रमेयाभावाभावत्वनिष्ठतद्व्यक्तित्वेन प्रमेयाभावनिष्ठप्रतियोगितात्वेनेति तत्र साध्याभावस्यापि लक्षणघटकत्वेनोक्तातिव्याप्तिविरहात् । एवं च हेत्वधिकरणवृत्तितावच्छेदकघटाभावत्वरूपानुयोगिताविशिष्टत्वस्य घटीयसंयोगसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगितायां विरहेण कुतोऽप्रसिद्धिरिति चेन्न । समनियताभावयोरैक्यानभ्युपगमाच्चेत्यत्र चकारस्याऽनुक्तसमुच्चयार्थकत्वादेतादृशविशेषणदानेऽपि अव्याप्तिवारणं सम्भवतीति ध्येयम् । समनियताभावयोरैक्यानभ्युपगमादिवदभावाभावस्याऽतिरिक्तत्वमेव, तथाच विशिष्टसत्ताभाववान् गुणत्वादित्यत्राऽव्याप्तिविरहात् । हेतुविशिष्टवैशिष्ट्यावगाहिबुद्धौ विशिष्टप्रतियोगिकसंसर्ग एव भासते, तथाच व्याप्यवृत्तिसाध्यकस्थले हेतुसमानाधिकरणत्वं

प्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन वाच्यम् , विशिष्टसत्ताभाववान् गुणत्वादित्यादौ उक्तविरोधिताघटकः सम्बन्धः विशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकसमवाय एव तेन सम्बन्धेन साध्याभावस्य सत्तारूपस्य हेतुसामानाधिकरण्यान्नाव्याप्तिरिति । वस्तुतस्तु हेत्वधिकरणवृत्तित्वं यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नं तद्धर्मावच्छिन्नप्रतियोगितात्वावच्छिन्नाभाववद्वृत्तित्वं निवेश्यम् , तथाच विशिष्टसत्ताभाववान् गुणत्वादित्यादौ नाऽव्याप्तिः । न च तथापि घटीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितायां घटत्वावच्छिन्नत्वविरहात्कुतोऽप्रसिद्धिरिति वाच्यम् । घटघटान्यप्रमेयोभयाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितायां घटत्वावच्छिन्नप्रतियोगितात्वसत्वात्तमादायैवाऽप्रसिद्धिरिति । नचोक्तवृत्तित्वं यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नं तद्धर्मेतरधर्मानवच्छिन्नप्रतियोगितासामान्यशून्याऽवृत्तित्वं निवेश्यम्, तथाचाऽप्रसिद्धिविरह इति वाच्यम् । एतल्लक्षणस्याऽभावघटकतया तद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावनिरूपितप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगितासामान्यशून्याऽवृत्तित्वस्यैव फलितार्थत्वात् , तथाच वह्निमान् धूमादित्यादौ धूमाधिकरणवृत्तित्वं घटत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नं भवति तद्धर्मात्मकघटत्वावच्छिन्नप्रतियोगिताकाभावनिरूपितघटीयसंयोगसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावनिरूपितघटीयसंयोगसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्धेरव्याप्तिभिया समनियताभावयोरैक्याभावः स्वीकरणीय इति ।

केचित्तु घटकालीनवह्नित्वावच्छिन्नप्रतियोगिकसंयोगेन वह्निसाध्यकस्थले वह्नित्वावच्छिन्नप्रतियोगिकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोताकयावान्नास्तीत्यभावस्य समनियततया तादृशसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावनिरूपितप्रतियोगित्वाभावाऽप्रसिद्ध्या समनियताभावानामैक्यानभ्युपगमस्याऽऽवश्यकत्वात् । ननु घटकालीनसंयोगेन वह्निसाध्यकधूमहेतुकस्थले तादृशसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्य गुरुसम्बन्धावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध्या साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वयत्किञ्चिद्धेत्वधिकरणतानिरूपितनिरूपकतावच्छेदकावच्छिन्नत्वएतदुभयाभावरूपपारिभाषिकस्याऽऽवश्यकतया तत्र शुद्धसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावमादाय प्रसिद्धिसम्भवात् अनैक्यस्वीकारो निरर्थकः । न च साध्यतावच्छेदकसम्बन्धस्य न्यूनवारकपयाप्त्यनिवेशाद् घटकालीनसंयोगेन वह्निसाध्यकस्थले शुद्धसंयोगेन घटाभावमादायैवाऽव्याप्तिवारणं सम्भवतीति वाच्यम् । संयोगसमबायान्यतरसंबन्धेन वह्निसाध्यकस्थले समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावमादायाऽव्याप्तिवारणाय तन्निवेशस्याऽऽवश्यकत्वात् । न चैवं यत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्याऽऽवश्यकतया महानसानुयोगिकसंयोगेन धूमसाध्यकवह्निहेतुकस्थले साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्य यत्किञ्चिद्धेत्वधिकरणीभूतायोगोलकादिनिष्ठाधिकरणतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकत्वाऽप्रसिद्ध्या महानसादिरूपयत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपितानिरूपकतावच्छेदकधर्मावच्छिन्नत्वस्य च द्वयोः सत्त्वादति-

एकधर्मावच्छिन्नार्थकं त्रैकपदमव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्त्यभिप्रायेण। तथाविधा या एकधर्मावच्छिन्ना प्रतियोगिता तत्सामान्यशून्याऽवृत्तित्वमिति योजनया यत्प्रतियोगितायाः अवच्छेदकीभूतधर्मावच्छिन्नानाधिकरणत्वं हेतुमतस्तत्प्रतियोगिताया अवच्छेदकीभूतधर्मावच्छिन्नप्रतियोगितासामान्यत्वं तत्रार्थ इति वस्तुगतिः। एकपदं शृङ्गग्राहिकतया तत्तदभावव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वविषयतानिरूपितविषयता तादृशनिरूपकतावच्छेदकावच्छिन्नत्वविषयतानिरूपितविषयता एतदुभयस्य प्रमीयविषयताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाभावस्य केवलान्वयितया साध्याभावीयतादृशसम्बन्धावच्छिन्नप्रतियोगितायां निराबाधादिति चेन्न। वह्निमान् धूमादित्यादौ संयोगेन घटाभावस्यापि संयोगेन घटाघटान्यप्रमेयोभयाभावसमानियततया तदीयप्रतियोगित्वाभावाऽप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात्। नच तादृशाभावस्य घटाभावे एव पर्यवसानं सम्भवतीति वाच्यम्। न्यूनवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वास्वीकारात्। न च तादृशाभावीयप्रतियोगिता घट एव स्वीक्रियत इति न तादृशाभावीयप्रतियोगित्वाऽप्रसिद्धिरिति वाच्यम्। तथासति घटीयसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावीयप्रतियोगिताया घटे एव सत्त्वेन प्रतियोगित्वाभावस्य प्रसिद्धिसम्भवेनाऽनैक्यस्वीकारोऽसंगतः स्यादतस्तादृशाभावप्रतियोगिता निखिलप्रमेये इति मतेऽपि वा प्रसिद्धिदानमिति जगदीशतात्पर्यवर्णनस्याऽऽवश्यकतया घटघटान्यप्रमेयोभयाभावीयप्रतियोगितामादायाऽप्रसिद्धिसम्भवादित्याहुः।

**वस्तुगतिरिति**। अन्यथा समनियताभावैक्यमते घटाभावस्य घटीयसंयोगेन प्रमेयाभावस्यैक्यात् घटाद्यभावस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वविरहात्प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाऽप्रसिद्ध्याऽसंभवः स्यादिति भावः। अनुगमस्तु हेत्वधिकरणवृत्तिप्रतियोगिताविशिष्टत्वम्। हेत्वधिकरणवृत्तित्वं च प्रतियोगित्वे स्वावच्छेदकावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। वै० स्वावच्छेदकावच्छिन्नप्रतियोगितात्वसमानाधिकरणोभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवदवृत्तित्वसम्बन्धेन, अन्यथाऽत्र यत्तदर्थयोरननुगमाद् घटाभावीयप्रतियोगिताव्यक्तीः यत्पदेनोपादाय तत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगित्वाभावाधिकरणनिरूपितवृत्तित्वाभाववद्धर्मभेदस्य धूमत्वादौ सत्त्वेनाऽतिव्याप्तिः स्यात्, तथाच हेत्वधिकरणवृत्तिभेदीयप्रतियोगितानिरूपितपरं(१)पराऽवच्छेदकतावद्व्यक्ति(२)निरूपित, (परम्परा) अवच्छेदकतावद्धर्मावच्छिन्नप्रतियोगित्वं नास्तीति प्रथमाभावनिवेशात् (तथाच तादृशाभाववदवृत्तित्वम्) (प्रतियोगितानिरूपितपरम्पराऽवच्छेदकता च—अधिकरणत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकता ग्राह्या) हेत्वधिकरणवृत्तिभेदश्च तत्प्रतियोगितानिरूपितावच्छेदकतावद्धर्मनिष्ठावच्छेदकतानिरूपितनिरूपकतानिरूपिताधिकरणतावान्नेति प्रतीतिसाक्षिकः।

एवं च हेत्वधिकरणवृत्तिभेदीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावद्व्यक्तिनिरूपिता-

---

(१) निरूपितत्वसम्बन्धावच्छिन्ना। (२) प्रतियोगिता।

प्रवेशार्थमिति तु रिक्तं वचः, तन्निवेशे हेतुसामानाधिकरण्यप्रवेशस्य वैयर्थ्यात्। ( यत्किंचित्पदेनैव तल्लाभात् ) इति ध्येयम्।

वच्छेदकतावद्धर्मावच्छिन्नप्रतियोगित्वन्नास्तीति सामान्याभावस्य धूमादौ विरहेण धूमवान् वह्नेरित्यादावतिव्याप्तिविरहात्। अथात्र वह्निमान् धूमादित्यादौ यत्प्रतियोगितापदेन महानसीयवह्न्यभावीयप्रतियोगिताया अपि धर्तुं शक्यत्वेन महानसीयवह्न्यभावीयप्रतियोगितारूपतद्व्यक्तिनिरूपितावच्छेदकतावद्धर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतावान्नेति भेदस्य हेत्वधिकरणवृत्तितया तदीयाप्रतियोगितानिरूपितपरम्परावच्छेदकतावद्व्यक्तिनिरूपितावच्छेदकतावद्वह्नित्वरूपधर्मावच्छिन्नप्रतियोगित्वन्नास्तीत्यभावस्य वन्ह्यादौ विरहेणाऽव्याप्तिरतो यत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वविशिष्टप्रतियोगिताकभेदवत्त्वं निवेशनीयम्। वै० स्वनिष्ठावच्छेदकतानिरूपितत्वस्वाभिन्ननिष्ठावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन, एवमपि वह्न्यभावीयप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्य हेत्वधिकरणेऽसत्वादुक्ताऽव्याप्तितादवस्थ्यमिति चेद्। यत्प्रतियोगितावच्छेदकताविशिष्टनिरूपकताकाधिकरणविशिष्टप्रतियोगिताकभेदवत्त्वं निवेशनीयम्, निरूपकतायामवच्छेदकतावै० स्वनिरूपितत्व–स्वभिन्नावच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन। न चैवमपि दण्डिमान् द्रव्यत्वादित्यादौ साध्याभावीयप्रतियोगितावच्छेदकत्वस्याऽनेकतया दण्डावच्छिन्ननिरूपकतायामेकदण्डनिष्ठावच्छेदकतानिरूपितत्वाऽपरदण्डनिष्ठावच्छेदकतानिरूपितत्वयोः सत्वादनुयोगिताविशिष्टत्वमेव निरूपकतायां विवक्षणीयम् स्वावच्छेदकेतरधर्मानवच्छिन्नत्वसम्बन्धेन। यद्यपि अधिकरणभेदेन अधिकरणताया भेदाद् वह्नित्वावच्छिन्ननिरूपकतानिरूपिततदधिकरणत्वावच्छिन्नप्रतियोगिताकभेदमादाय धूमेऽव्याप्तिः, तथापि यत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्ननिरूपकताकाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वनिवेशेनैव वारणमिति।

केचित्तु हेत्वधिकरणवृत्तिभेदीयपरम्परावद्व्यक्तिनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतानिरूपिततत्प्रतियोगित्वं नास्तीति निवेशात् महानसीयवन्ह्यभावीयप्रतियोगितारूपताद्दशभेदप्रतियोगितानिरूपितपरम्परावच्छेदकतावच्छेदकतावद्व्यक्तिनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमहानसीयत्ववह्नित्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकमहानसीयवन्ह्यभावीयप्रतियोगित्वाभावस्य पर्वतीयवह्न्यादौ सत्वेन तद्वृत्तित्वस्य वह्नित्वादौ सत्वात्। न च घटाभावीयप्रतियोगितारूपतद्व्यक्तिनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकघटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकवह्निघटोभयाभावीयप्रतियोगितानिरूपिततदवच्छेदकताकवह्निघटोभयाभावीयप्रतियोगित्वाभावस्य वह्नौ विरहेणाऽव्याप्तिरिति वाच्यम्। ताद्दशानुयोगितावच्छेदकीभूतरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगित्वन्नास्तीत्यभावनिवेशात् वह्निघटोभयाभावीयप्रतियोगितायां घटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वविरहात्। नन्वेवमपि ताद्दशरूपावच्छिन्नानुयोगि-

ताकपर्याप्तिनिष्ठप्रमेयत्वावच्छिन्नप्रतियोगितावत्त्वस्य निखिलावच्छेदकतायां सत्त्वेन तादृशा-
वच्छेदकताभिन्नावच्छेदकत्वाऽप्रसिद्ध्याऽसंभवः एकधर्मावच्छिन्नप्रतियोगिताया ऐक्यात्
इति चेद् । पर्याप्तिप्रतियोगितां तत्प्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्ना विवक्षणी-
या, उभयावृत्तिधर्मावच्छिन्ना वा विवक्षणीया अतो न कोपि दोषः । उभयसाध्यके व्य-
भिचारिणि तादृशद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिनिष्ठउभयावृत्तिधर्मावच्छिन्नतत्तदवच्छे-
दकतानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वस्य उभ-
याभावीयप्रतियोगितायां सत्त्वात् तत्रोभयाभावीयप्रतियोगितामादायातिव्याप्तिवारणम् ।
न च वह्निघटोभयाभावीयप्रतियोगितारूपतादृशभेदीयपरम्परावच्छेदकतात्वव्यक्तिमादाय
तद्दोषतादवस्थ्यमिति वाच्यम् । एतद्दोषेणैवैतत्कल्पस्य ग्रन्थकारेण दूषितत्वादिति प्राहुः ।
अथ हेत्वधिकरणवृत्तितादृशाधिकरणतावान्नेति भेदनिवेशे तद्रूपवान् रसादित्या-
दौ व्यभिचारिणि तद्रूपाभावीयप्रतियोगितारूपतद्व्यक्तिनिरूपितावच्छेदकतावद्धर्माव-
वच्छिन्ननिरूपकतानिरूपिताधिकरणतावान्नेति भेदस्य तादृशाधिकरणताश्रयीभूततद्व्यक्तिर्नेति
भेदे पर्यवसानसम्भवात् तद्रूपाभावीयप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वापेक्षया ला-
घवात्तद्घटनिष्ठतद्व्यक्तित्वे एवाऽवच्छेदकत्वमिति तादृशभेदस्य गुरुधर्मावच्छिन्नप्रतियोगिता-
कतयाऽप्रसिद्ध्या व्यक्त्यन्तरमादायाऽतिव्याप्तिरिति चेन्न । हेत्वधिकरणवृत्तितावच्छेदकीभूतं
यत्तादृशाधिकरणतासमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगि-
ताकपर्याप्तिककूटत्वं तादृशकूटत्वप्रतियोगिकपर्याप्त्यनुयोगितानिरूपितपरम्पराव्यक्तित्वनिष्ठा-
वच्छेदकतासमानाधिकरणावच्छेदकतानिरूपितपरम्पराप्रतियोगितात्वनिष्ठावच्छेदकताकप्रति-
योगिकाभावविवक्षणान्न कोपि दोषः । न च तद्रूपवान् रसादित्यादौ तादृशकूटाऽप्रसिद्ध्याऽ-
तिव्याप्तिः, घटत्वनिष्ठावच्छेदकताभिन्नघटत्वनिष्ठावच्छेदकताभिन्नतद्व्यक्तित्वनिष्ठावच्छेदक-
ताभिन्नावच्छेदकत्वानिरूपिततद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदनिवेशे कूट-
स्य प्रसिद्धावपि यत्र घटादिरेवहेत्वधिकरणं तत्र घटभेदस्यापि कूटान्तर्गततया हेत्वधिकरण-
तायां कूटत्वमनिवेश्य पूर्ववदत्रापि निवेशात् । अथवा समवायत्वावच्छिन्नसंसर्गताभिन्नसं-
योगत्वावच्छिन्नसंसर्गताभिन्नतादात्म्यत्वावच्छिन्नसंसर्गताभिन्नसंसर्गतानिरूपिततादात्म्यत्वा
वच्छिन्नसंसर्गतानिरूपितप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिनिवेशान्न कोपि
दोषः ।

केचित्तु तद्रूपवान् रसादित्यादावतिव्याप्तिवारणाय तादृशाधिकरणत्वावच्छिन्नप्रतियोगि-
तावच्छेदकधर्मावच्छिन्नाधिकरणतावद्वृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्ना-
नुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वं हेत्वधिकरणे निवेश्यम् । न चैवं तादृशकूटाऽप्रसि-
द्ध्याऽतिव्याप्तिरिति वाच्यम् । तद्रूपावच्छिन्नप्रतियोगिताकभेदतद्व्यक्तित्वावच्छिन्नप्रतियोगि-
ताकभेदतद्व्यक्त्यवच्छिन्नप्रतियोगिताकभेदतत्संख्यावच्छिन्नप्रतियोगिताकभेदकूटस्यैव प्रसि-
द्धत्वात् । एतेनाऽव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तित्वमते कपिसंयो-
गाधिकरणतावद्भेदस्याऽव्याप्यवृत्तितया कपिसंयोग एतद्वृक्षत्वादित्यत्राऽव्याप्तिरित्यपि निर-
स्तम् । तादृशभेदान्तर्गततद्वृक्षत्वावच्छिन्नभेदस्य प्राप्ततया तादृशभेदकूटत्वेनाऽव्याप्यवृत्ति-

त्वविरहात् । एतत्कल्पस्य निवेशस्तु हेत्वधिकरणवृत्तितावच्छेदककूटत्वप्रतियोगिकपर्याप्त्य-नुयोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगितासामान्यशून्याऽवृत्तित्वमिति फलितार्थः । कूटत्वं च यत्प्रतियोगितावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वमित्याहुः ।

अपरे तु उक्तातिव्याप्तिवारणाय यत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्ननिरूपकताकाधिकरणतावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकताभिन्ना घटपटोभयत्वनिष्ठावच्छेदकताभिन्ना पटमठोभयत्वनिष्ठावच्छेदकताभिन्ना सती तादात्म्यत्वावच्छिन्नावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वं हेत्वधिकरणे निवेश्यम्, तथाचोक्तव्यभिचारिणि उक्ताधिकरणतानिष्ठतद्व्यक्तित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदपटघटोभयत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदपटमठोभयत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदकूटमादाय नातिव्याप्तिः । न च व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयित्वमते घटभिन्नं पटत्वादित्यादावव्याप्तिः, भेदकूटान्तर्गतः घटपटोभयत्वावच्छिन्नप्रतियोगिताकभेदोऽपि भवति तस्य हेत्वधिकरणेऽसत्त्वादिति वाच्यम् । उक्ताधिकरणतावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकताभिन्नतादात्म्यत्वावच्छिन्नावच्छेदकताभिन्नसमवायत्वावच्छिन्नावच्छेदकताभिन्नसंयोगत्वावच्छिन्नावच्छेदकताभिन्नस्वरूपत्वावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नप्रतियोगिताकपटत्वाभावस्यापि कूटान्तर्गतत्वेनोक्ताव्याप्तितादवस्थ्यामिति वाच्यम् । पटत्वत्वनिष्ठावच्छेदकतायास्तदवच्छेदकताभिन्नत्वान्नाव्याप्तिः । तद्रूपवान् रसादित्यत्र तद्रूपत्वावच्छिन्नाधिकरणताव्यक्तिनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य तत्तद्व्यक्तिमन्निष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावकूटस्य हेत्वधिकरणे सत्त्वान्नाव्याप्तिः । अथ यत्र स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेनाभावस्य साध्यताऽभावभेदवाच्यत्वान्यतरत्वस्य हेतुता तत्रातिव्याप्तिः । न च स्वरूपत्वावच्छिन्नावच्छेदकताभिन्नत्वमनुपादेयमेवेति वाच्यम् । यत्र पर्वतत्वावच्छिन्नानुयोगिताकसंयोगसम्बन्धेन वह्नेः साध्यता पर्वतपर्वतावयवान्यतरत्वस्य हेतुता तत्रातिव्याप्तिस्तत्र वह्न्यभावप्रतियोगितावच्छेदकाधिकरणतावतः पर्वतस्य पर्वतावयवे समवायेन सत्त्वात् । एवं वह्नेर्यत्र तादात्म्येन साध्यता तत्र वह्निपर्वतान्यतरत्वहेतावतिव्याप्तिः, वह्निभेदप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतावतो वह्नेः संयोगेन पर्वते सत्त्वादिति चेन्न । उक्ताधिकरणतावृत्त्युभयावृत्तिधर्मावच्छिन्नावच्छेदकताभिन्नतादात्म्यत्वावच्छिन्नावच्छेदकताभिन्नस्वरूपसमवायोभयत्वावच्छिन्नावच्छेदकताभिन्नस्वरूपसंयोगोभयत्वावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नत्वं निवेश्यम् । तथाचोक्तरसहेतुकव्यभिचारिणि तद्रूपत्वावच्छिन्नाधिकरणताव्यक्तिमद्भेद–उक्तव्यक्तिमन्निष्ठस्वरूपसमवायोभयसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्वरूपसंयोगोभयसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावकूटमादाय नातिव्याप्तिः ।

तादात्म्यत्वावच्छिन्नावच्छेदकताभिन्नत्वानिवेशे उक्ताधिकरणताव्यक्तिमन्निष्ठतादात्म्यसम्बन्धावच्छिन्नप्रतियोगितायांमुक्ततादात्म्यत्वावच्छिन्नावच्छेदकतानिरूपकत्वात्तादृशतादात्म्यत्वावच्छिन्नावच्छेदकत्वात्तादृशतादात्म्यत्वावच्छिन्नावच्छेदकतायां तदवच्छेदकताभिन्नत्वाच्चासम्भवोऽतस्तदुक्तमित्याहुः ।

अथ यत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नानधिकरणत्वं हेतुमत इत्याद्यभिधाने वह्निमान् धूमादित्यादावव्याप्तिः, तथाहि—महानसीयवह्नित्वावच्छिन्नप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वात्तत्प्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न । तत्प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य प्रतियोगितायां निवेश्यत्वात् । रूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । अत्र न्यूनवारकमात्रनिवेशे महानसीयत्ववह्नित्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताका या प्रतियोगिता सा महानसीयवह्निमहानसीयवह्निभिन्नप्रमेयोभयाभावीया प्रतियोगितापि भवति तदभावाऽप्रसिद्ध्याऽव्याप्तिः । अथवा महानसीयवह्न्यभावमादायाऽव्याप्तिवारणाय हेत्वधिकरणवृत्तिभेदीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगितासामान्यशून्याऽवृत्तित्वं निवेश्यम्, तेन नाऽव्याप्तिः । नचात्र विशिष्टसत्ताभावमादाय सत्तावान् जातेरित्यत्राऽव्याप्तिः, इष्टत्वात् अतएव सत्तावान् जातेरित्यादिनोक्तं दीधितिकारेण । अथवा हेत्वधिकरणवृत्तिभेदीयप्रतियोगितानिरूपितपरम्पराऽवच्छेदकतावत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगितायामवच्छेदकताविशिष्टान्यत्वं निवेशनीयम् । वै० स्वनिरूपितत्वस्वभिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन ।

नन्वत्र यत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वं निवेश्यम्, न तु तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वम्, गौरवात् इति चेन्न । धूमवान् वह्नेरित्यत्राऽतिव्याप्तिः, प्रतियोगिभेदेन प्रतियोगिताभेदात्तत्प्रतियोगितामध्ये तद्धूमात्मकप्रतियोगितापि भवति "यत्पदेन यस्या प्रतियोगिताया उपादानं तच्छून्यत्वस्याऽपरधूमे सुलभत्वेन" तत्प्रतियोगितात्वावच्छिन्नाभाववति अपरधूमे धूमत्वस्य वृत्तित्वादतस्तदुक्तम् । एवं तत्प्रतियोगितानिरूपकाभावीयप्रतियोगित्वं नास्तीत्यभावनिवेशे समनियताभावानामैक्याद् घटाभावस्य घटीयसंयोगसम्बन्धावच्छिन्नप्रमेयाभावस्यैक्यतया घटाभावीयप्रतियोगितानिरूपकाभावीयप्रतियोगित्वस्य सर्वत्र सत्त्वेनाऽभावाऽप्रसिद्ध्याऽसम्भवापत्तिरिति । न च समनियताभावानामैक्यानभ्युपगमादिति स्वयमेव ग्रन्थकृता पूर्वमभिहितमिति वाच्यम् । समनियताभावानामैक्यानभ्युपगमादित्यभिधानं ग्रन्थकर्तुर्यत्किंचित्पदघटितव्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेण । एतल्लक्षणस्योभयमते एव निर्दोषत्वादिति । किंच तत्प्रतियोगितानिरूपितावच्छेदकतावान्नेति भेदे एव तात्पर्यवर्णनेन गौरवानवकाशादिति ।

[illegible] तत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगि-

स्वं नास्तीत्यभावस्य प्रतियोगितारूपतद्व्यक्तिर्नास्तीत्यभावे पर्यवसानात् तादृशप्रतियोगित्वं नास्तीत्यभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध्याऽभावान्तरमादायाऽतिव्याप्तिरिति चेन्न । तादृशप्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठानिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवद्वृत्तित्वं नास्तीति द्वितीयाभावनिवेशे तत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगित्वं नास्तीत्यभावस्याऽप्रसिद्धावपि प्रतियोगितारूपतद्व्यक्तिर्नास्तीत्यभावमादायाऽतिव्याप्तेर्व्युदासादिति । न च प्रतियोग्यात्मकप्रतियोगिताव्यक्त्यनधिकरणेऽपि अभावात्मकप्रतियोगिताव्यक्तिसत्त्वात्तादृशप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणाऽप्रसिद्धिः, प्रतियोगिताव्यक्त्यभावस्य अभावव्यक्त्यभावस्य च कूटान्तर्गतत्वात्प्रतियोगितायाः प्रतियोगितदभावोभयस्वरूपत्वादिति वाच्यम् । प्रतियोग्यात्मकप्रतियोगिताव्यक्तेरेव निवेशात्, तथाच प्रतियोगिताविशिष्टान्योभयावृत्तियों धर्मस्तदवच्छिन्नप्रतियोगिताकाभावकूटनिवेशात् । वै० स्ववृत्तित्वस्वनिरूपकाभाववृत्तित्वोभयसम्बन्धेन, एवं चाऽभावनिष्ठतद्व्यक्तित्वे अभावात्मकप्रतियोगितावृत्तित्वस्वनिरूपकस्वरूपाभाववृत्तित्वसत्त्वेन प्रतियोगिताविशिष्टान्यत्वविरहात् । प्रतियोगिनिष्ठव्यक्तित्वे प्रतियोग्यात्मकप्रतियोगितावृत्तित्वसत्त्वेऽपि स्वनिरूपकाभाववृत्तित्वविरहेण प्रतियोगिताविशिष्टान्यत्वसत्त्वादिति ।

यदि च स्वसमनियतव्यासज्यवृत्तिधर्म्म एव व्यासज्यवृत्तिधर्म्मप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदक इति मते तादृशाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिककूटत्वनिवेशासम्भव इति विभाव्यते, तदा तादृशाभाववृत्त्यभावीयपरम्परावच्छेदकतावत्कूटत्वावच्छिन्नवृत्तित्वन्नास्तीति द्वितीयाभावनिवेश इति । न च शुद्धाभावत्वे तत्कूटत्वाभावाधिकरणनिरूपितत्वसत्त्वे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावत्वेपि सत्त्वात् न तादृशनिवेशः सम्भवतीति वाच्यम् । तथासति तादृशाभावत्वावच्छिन्ननिरूपकतायाः शुद्धाभावत्वावच्छिन्ननिरूपकतातो भिन्नतया तादृशविशिष्टाभावत्वावच्छिन्ननिरूपकतावृत्त्यभावप्रतियोगितावच्छेदकत्वस्य कूटत्वे निवेशात् । तादृशनिरूपकताया ऐक्ये तु तादृशाभावत्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपे तत्कूटत्वाभाववन्निष्ठानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानवच्छेदकत्वानिवेशान्न कोपि दोषः ।

एवं तत्प्रतियोगितावच्छेदकीभूतधर्म्मावच्छिन्नानधिकरणहेत्वधिकरणमित्यत्रापि तादृशसमानाधिकरणउभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकाभावत्वे हेत्वधिकरणवृत्तितावच्छेदकीभूतकूटत्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वास्वीकारेपि हेत्वधिकरणवृत्तितावच्छेदकीभूततत्कूटत्वाभावाधिकरणनिरूपितवृत्तित्वाभावस्य तत्प्रतियोगितावच्छेदकीभूतधर्म्मावच्छिन्नाधिकरणत्वसमानाधिकरणाभाववृत्तिधर्म्मावच्छिन्नप्रमेयत्वावच्छिन्ननिरूपकताया विवक्षणात्, तथाच हेत्वधिकरणवृत्तितावच्छेदकीभूततत्कूटत्वाधिकरणनिरूपितवृत्तित्वाभावात् इतरवारकपर्य्याप्तिमात्रनिवेशिततादृशनिरूपकता तन्निरूपितपरम्परावच्छेदकतासमानाधिकरणावच्छेदकतेति निरूपकताया वैलक्षण्ये तादृशनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपे हेत्वधिकरणवृत्तित्वावच्छेदकतत्कूटत्वाभाववन्निष्ठनिरूपकतावच्छेदकतावच्छेदक-

यद्यपि प्रमेयवान् वाच्यत्वादित्यादौ समवायेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः, प्रमेयत्वावच्छिन्नाभावप्रतियोगितासामान्यशून्यत्वाऽप्रसिद्धेः, तादृशाभावस्य निरुक्तप्रतियोगितानवच्छेदकतायाः प्रमेयत्वे सत्त्वात् । तथापि तादृशयत्किंचिदेकाभावप्रतियोगितात्वं यद्धर्मव्यापक(१)तावच्छे-

तावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितानवच्छेदकत्वानिवेशात्, तथाच तादृशानुयोगितावच्छेदकत्वाभाववत्तादृशरूपावच्छिन्नानुयोगितानिरूपितपरम्परावच्छेदकतासमानाधिकरणावच्छेदकतानिरूपितपरम्पराऽभावत्वानिरूपकतावच्छेदकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तितत्कूटत्वाभाववन्निष्ठनिरूपकतावृत्तिउभयावृत्तिधर्म्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितअवच्छेदकतात्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वाभावीयपरम्परावच्छेदकतावद्धर्म्मावच्छिन्नाधिकरणवृत्तित्वन्नास्तीत्यभावनिवेशात् । समुदायत्वस्य धीविशेषविषयतारूपत्वे तु तादृशानुयोगितानिरूपितधीनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितानिरवच्छिन्नावच्छेदकत्वाभावस्य तादृशानुयोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नधीनिष्ठावच्छेदकतानिरूपितनिरवच्छिन्नावच्छेदकतावद्व्यक्तित्वे निवेशात्, तथाच हेत्वधिकरणवृत्तितावच्छेदकीभूततत्कूटत्वाभाववन्निष्ठनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नधीनिष्ठावच्छेदकतानिरूपितनिरवच्छिन्नावच्छेदकत्वाभाववत्प्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितपरम्पराऽधिकरणतावृत्तिउभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिता तन्निरूपकपर्य्याप्त्यनुयोगितानिरूपितधीनिष्ठावच्छेदकतनिरूपितानिरवच्छिन्नावच्छेदकतावद्धर्म्मनिष्ठावच्छेदकतानिरूपितधीनिष्ठावच्छेदकतानिरूपितविषयतात्वनिष्ठावच्छेदकतानिरूपितानुयोगिताकपर्य्याप्तिप्रतियोगितानिरूपितपरम्परानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितनिरवच्छिन्नावच्छेदकतासमानाधिकरणावच्छेदकतानिरूपितपरम्पराप्रतियोगितावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकाभावत्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिता तन्निरूपकपर्याप्त्यनुयोगितानिरूपितधीनिष्ठावच्छेदकतानिरूपितनिरवच्छिन्नावच्छेदकत्ववद्वृत्तितत्कूटत्वाभाववन्निष्ठनिरूपकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानिरूपितधीनिष्ठावच्छेदकतानिरूपितनिरवच्छिन्नत्वाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावद्कूटत्वावच्छिन्नाधिकरणानिरूपितवृत्तित्वं नास्तीति द्वितीयाभावनिवेश इति संक्षेपः ।

यद्धर्मव्यापकतावच्छेदकमिति । हेतुसमानाधिकरणतदभावनिरूपितप्रतियोगिदकं तत्त्वं विवक्षितम् । अस्ति च प्रमेयत्वव्यापकत्वं प्रमेयसामान्याभावप्र-

(१) नचैवं तद्घटाभावप्रतियोगित्वाभावप्रतियोगितावद्घटाभावप्रतियोगितात्वापेक्षया लाघवात्तादृशप्रतियोगितानिष्ठतद्व्यक्तित्वस्यैव कल्पनात्तादृशाभावप्रतियोगितावत्त्वं वह्नित्वादिव्यापकतावच्छेदकमतोऽसम्भव इति वाच्यम् । स्वनिरूपितप्रतियोगित्वसम्बन्धेन यत्किञ्चिदभावो यद्धर्मव्यापक इत्यस्यैव विवक्षितत्वादिति भावः ।

तात्ववृत्त्यभावीयपरंपरया निष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्म एव पारिभाषिकावच्छेदक इत्यर्थः। तादृशप्रतियोगितात्ववृत्त्यभावश्च तद्धर्मवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वं नास्तीति। ननु घटत्ववद्वृत्तिपटाभावनिरूपितप्रतियोगित्वाभावप्रतियोगितावच्छेदकत्वस्य प्रतियोगितात्वे सत्त्वेन घटाभावनिरूपितप्रतियोगितात्वेऽपि सत्त्वात्, विशिष्टशुद्धानतिरेकात् घटत्वादिकमपि न पारिभाषिकाऽवच्छेदकमिति पारिभाषिकावच्छेदकाऽप्रसिद्ध्याऽव्याप्तिः। न च तदभावनिरूपितत्ववैशिष्ट्यावच्छेदके तादृशाऽवच्छेदकत्वाभावसत्त्वान्न घटत्वव्यापकत्वाऽप्रसिद्धिरिति वाच्यम्। वैशिष्ट्यावच्छिन्नानुयोगिताकएकदेशवृत्त्यभावस्याऽस्वीकारादिति चेन्न। तदभावनिरूपितप्रतियोगित्वं नास्तीत्यभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे तद्धर्मवद्वृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं नास्तीत्यभावनिवेशात्। एवं च घटाभावनिरूपितप्रतियोगितात्वगतसमुदायत्वे घटत्ववद्वृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावसत्त्वेन घटत्वे पारिभाषिकावच्छेदकत्वसम्भवात्। केचित्तु नन्वत्र कल्पे यत्र पूर्वक्षणवृत्तित्वविशिष्टधूमाभावस्य योऽभावस्तस्य साध्यताऽयोगोलकीयवह्नेर्हेतुता तत्र हेतुसमानाधिकरणयत्किञ्चिदभावान्तर्गतधूमाभावप्रतियोगितात्वस्य पूर्वक्षणवृत्तित्वविशिष्टधूमाभावाभावनिष्ठप्रतियोगितायामपि सत्त्वाद्विशिष्टानतिरिक्तत्वात्तत्र साध्यतावच्छेदकव्यापकत्वसत्त्वात्। न चात्राऽव्याप्तिवारणाय हेतुसमानाधिकरणाभावव्यक्तिविशिष्टप्रतियोगितात्वे यद्धर्मव्यापकतावच्छेदकत्वं विवक्षणीयम्, प्रतियोगितायां वै० स्वनिरूपितत्वस्वानवच्छिन्नत्वोभयसम्बन्धेन, तथा च साध्यनिष्ठप्रतियोगितायां प्रतियोगित्वसम्बन्धावच्छिन्नधूमाभावनिष्ठावच्छेदकतानिरूपितत्वान्नाव्याप्तिरिति वाच्यम्। धूमाभावप्रतियोगितात्वे साध्यतावच्छेदकव्यापकत्वात्। तथाहि—साध्यवृत्तिर्योऽत्यन्ताभावः स धूमाभावनिरूपितप्रतियोगितात्वावच्छिन्नाभावो न प्राप्तः, विशिष्टस्याऽनतिरिक्ततया धूमाभावनिरूपितत्वस्य साध्यनिष्ठप्रतियोगितायामपि सत्त्वादिति चेन्न। व्यापकताघटकाभावपदेन अभावत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्नेत्यादि अवच्छेदकत्वानिरूपिका अभावविशिष्टप्रतियोगितानिष्ठा या प्रतियोगिता तन्निरूपकाभावो वाच्यः। प्रतियोगितायामभाववै० उक्तोभयसम्बन्धेन। तथाचाऽभावनिष्ठप्रतियोगितायामभावाविशिष्टत्वाभावान्नाव्याप्तिरित्याहुः।

अथात्र वह्निमान् धूमादित्यत्राव्याप्तिः, तथाहि—हेतुसमानाधिकरणो यो यत्किञ्चिदभावः तद्घटाभावस्तन्निरूपितप्रतियोगितात्वे वह्नित्वव्यापकतावच्छेदकत्वसत्त्वाद् "वह्नित्ववति तादृशप्रतियोगित्वाभावसत्त्वेऽपि" वह्नित्वसमानाधिकरणोऽभावः स तद्घटाभावीयप्रतियोगितात्वावच्छिन्नाभावो न प्राप्तस्तद्घटाभावीयप्रतियोगितानिष्ठतद्व्यक्तित्वापेक्षया तादृशप्रतियोगितात्वस्य गुरुतया तदवच्छिन्नाभावाऽप्रसिद्धेः। न च तद्घटाभावप्रतियोगितात्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं न तद्व्यक्तित्वे कल्पयितुं शक्यते तद्घटवति देशे तत्प्रतियोगिता नास्तीति प्रत्ययानुपपत्तेः। यदि चोक्तप्रतियोगितात्वावच्छिन्नाधिकरणतया सार्धं विरोधित्वं कल्प्यते तदा नाऽव्याप्तिरिति वाच्यम्, यत्किञ्चिदभावान्तर्गतसंयोगसम्बन्धाव-

च्छिन्नप्रतियोगिताकाभावाभावस्तत्प्रतियोगितात्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं लाघवाद् भावभेदत्वे कल्पनीयम्, एवं च पूर्वोक्तयुक्त्याऽतिव्याप्तिरेवेति चेन्न। हेतुसमानाधिकरणाभावे प्रतियोगितासम्बन्धेन यद्धर्मव्यापकत्वविवक्षणान्नोक्तदोषः।

तथाच तादृशाभाववृत्तितद्धर्मवद्वृत्तिहेतुसमानाधिकरणाभावत्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितव्यक्तिनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वानिरूपितप्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावीयप्रतियोगितानिरूपितपरम्परानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वं नास्तीत्यभावीयप्रतियोगितानिरूपितपरम्पराऽवच्छेदकतावद्धर्म एव परिभाषिकावच्छेदकः साध्यतावच्छेदके तद्भेदनिवेशात्। एवं च घटाभावे घटत्वसमानाधिकरणतादृशाभावीयप्रतियोगितानिरूपितपरम्पराऽवच्छेदकत्वाभावसत्त्वेन घटाभाववृत्तितादृशाभावीयप्रतियोगितानिरूपितपरम्परानिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्य सत्त्वात् तद्भेदस्य वह्नित्वे सत्त्वेनाव्याप्तिविरहात्॥

नचैवमपि महानसीयवह्न्यभावे महानसीयवह्नित्ववद्वृत्तितादृशाभावीयप्रतियोगितानिरूपितपरम्परानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वसत्त्वात् महानसीयवह्न्यभाववृत्त्यभावीयपरम्परानिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्य वह्नित्वादावपि सत्त्वेन वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम्। तथासति तादृशाभावीयप्रतियोगितानिरूपितपरम्परानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वानिवेशात्। अथैवं तद्व्यक्त्यभावरूपे तदभावे वह्नित्ववद्वृत्तितदभावनिरूपितप्रतियोगित्वन्नास्तीत्यभावीयपरम्परानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावसत्त्वात् तद्व्यक्त्यभावरूपतदभावनिरूपितप्रतियोगित्वन्नास्तीत्यभावस्य तदभावनिरूपितप्रतियोगितारूपतद्व्यक्तिर्नास्तीत्यभावे पर्यवसानसम्भवेन तादृशतदभावनिरूपितप्रतियोगित्वन्नास्तीत्यभावस्य गुरुधर्म्मावच्छिन्नप्रतियोगिताकतया तद्धर्म्मवृत्तितादृशाभावाप्रसिद्धेरिति चेन्न। तादृशाभाववृत्तितद्धर्म्मवद्वृत्त्यभावप्रतियोगित्वन्नास्तीत्यभावीयप्रतियोगितानिरूपितपरम्परानिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्म्मो नेति भेदस्यैव साध्यतावच्छेदके निवेशात्। तद्धर्म्मवद्वृत्त्यभावश्च प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतद्व्यक्तिर्नास्तीत्याकारकः, तथाच घटत्ववति प्रतियोगितासम्बन्धेन घटाभावरूपव्यक्तिसत्त्वेन तदभावस्य वृत्तेः घटत्ववद्वृत्त्यन्योन्याभावप्रतियोगित्वाभावस्य घटाभावे सत्त्वेन घटत्वे पारिभाषिकावच्छेदकत्वसौलभ्यात्॥

यदि च प्रतियोगिताया वृत्त्यनियामकतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्याऽसम्भव इत्युच्यते, तदा स्वनिरूपितप्रतियोगितासम्बन्धावच्छिन्नतद्व्यक्तिनिष्ठावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वाभावस्यैव विवक्षणान्न कोपि दोषः। न च तत्र तादृशभेदव्यक्तेः स्वनिरूपितप्रतियोगितासम्बन्धेन तदभावाश्रयीभूतव्यक्तिर्नेति भेद एव पर्य्यवसानसम्भवेन व्यक्तित्वे भेदप्रतियोगितावच्छेदकत्वकल्पने गौरवमिति वाच्यम्। तद्व्यक्तेः स्वरूपतो मानाद् इति॥

अथ महानसीयवह्न्यभावे महानसीयवह्नित्ववद्वृत्त्यभावप्रतियोगितावच्छेदकत्वाभावसत्त्वात् तदभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकत्वाभावस्य वन्हित्वादावपि सत्त्वेना-

व्याप्तिः । तादृशाभाववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परानिरूपितत्वसम्बन्धावच्छिन्नाव-च्छेदकतायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशादेव तद्वारणमिति तु न शंक्यम्। प्रमेयधूमवान्वह्नेरित्यादौ प्रमेयधूमवत्त्ववद्वृत्तिभेदप्रतियोगितावच्छेदकत्वनास्तीत्यभावस्य गुरु-धर्म्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध्यातिव्याप्तिभयेन यद्धर्म्मवद्वृत्तिभेदप्रतियोगितावच्छे-दकतात्वसमानाधिकरणोभयावृत्तिधर्म्मनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नानु-योगिताकपर्य्याप्तिककूटत्वे तादृशाभाववृत्तितावच्छेदकत्वनिवेशस्यावश्यकत्वादिति चेन्न । तादृ-शाभाववृत्तितावच्छेदकीभूतकूटत्वप्रतियोगिकपर्याप्त्यनुयोगितानिरूपितनिरूपितत्वसम्बन्धाव-न्धावच्छिन्नावच्छेदकतायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशान्न कोऽपि दोषः । अथवा तादृशाभाववृत्त्युभयाभावीयप्रतियोगितानिरूपितपरंपरानिरूपितत्वसम्बन्धा-वच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकरूपाभिन्नत्वस्य साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपे निवेशात् वा किञ्चिद्रूपवृत्तिनिरूपकतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्यैव हेतुसमानाधिकरणाभावे निवेशात्, तथाच तादृशाभाववृत्त्यभावीयपरम्परावच्छेदकतावद्रूपाभिन्नत्वमेव साध्यतावच्छे-दकगतरूपे निवेशनीयमिति न दोष इति ॥

नन्वेवं महानसीयवह्नित्वगतरूपवृत्तिनिरूपकतावत्त्वे सति वह्नित्वगतवृत्तिनिरूपकताव-द्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य हेतुसमानाधिकरणभावे सत्त्वात् तदभाववृत्तितादृ-शाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्त्वस्य वह्नित्वगतैकत्वेपि सत्त्वात् तद्भे-दस्य साध्यतावच्छेदकगतरूपे विरहेणाव्याप्तितादवस्थ्यम्, एवं वह्निवृत्तिमन्महानसीयवह्निवृ-त्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य महानसीयद्वयभावे सत्त्वात् तदभाववृत्त्यभावीयपरम्प-रासाध्यतावच्छेदकतदितरोभयानवच्छिन्ननिरूपितत्वसम्बन्धावच्छेदकतानिरूपितावच्छेदक-तावत्त्वस्य वह्नित्वे सत्त्वात् तादृशावच्छेदकतावद्धर्म्मो नेति भेदविरहेणाव्याप्तिरिति । न च किञ्चिद्रूपनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वा-निरूपितनिरूपकत्वनिष्ठावच्छेदकतेत्यादि सकलपदानामितरवारकपर्य्याप्तिनिवेशः। वह्नित्वगत एकत्वस्य किञ्चिद्रूपपदेनोपादाने तद्वृत्तिनिरूपकतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य हेतुसमानाधिकरणाभावे विरहात्। महानसीयवह्नित्वगतरूपस्योपादाने च तद्वृत्तिनिरूपकतावद्वृ-त्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य हेतुसमानाधिकरणाभावे सत्त्वेपि तद्वृत्त्यभावीयप्रतियो-गितानिरूपितपरम्परावच्छेदकतावत्त्वस्य तादृशरूपे एव तद्भेदस्य साध्यतावच्छेदगतएकत्वे सत्त्वात् तादृशद्वित्ववृत्तिनिरूपकतावत्त्वे सति तादृशएकत्ववृत्तिनिरूपकतावद्वृत्तिभेदप्रतियोगि-तावच्छेदकत्वाभावीयअधिकरणानिष्ठावच्छेदकतायां किञ्चिद्रूपनिष्ठावच्छेदकताभिन्नावच्छेदक-त्वानिरूपितवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपकत्वानिष्ठावच्छेदताभिन्नअ-पररूपवृत्तिनिरूपकतानिष्ठावच्छेदकतानिरूपितत्वसत्त्वेन तादृशनिवेशाक्रान्तत्वविरहान्न तद-भावमादायाव्याप्तिः । एवं यद्धर्म्मवद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्यापि किञ्चिद्धर्म्म-निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितेत्यादिक्रमेण निवेशे वह्निवृत्तिमन्महानसीयवह्निवृ-त्तिभेदप्रतियोगिताकाभावीयपरम्परया निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतायां किञ्चिद्ध-

र्म्मनिष्ठावच्छेदकताभिन्नाऽपरधर्म्मनिष्ठावच्छेदकतानिरूपितत्वसत्त्वेन तादृशनिवेशाक्रान्तत्व-विरहान्न तदभावमादायाव्याप्तिरिति वाच्यम् । किञ्चित्वस्यानुगततया रूपत्वसमानाधिकरणोभयावृत्तिधर्म्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितेत्याद्यनुगतरूपेण, एवं धर्म्मत्वसमानाधिकरणधर्म्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपित इत्यादिक्रमेणैव निवेश्यम्, तथाच वह्नित्वगतएकत्वगतव्यक्तित्वमिव महानसीयवह्नित्वगतद्वित्वगतव्यक्तित्वस्यापि रूपत्वसमानाधिकरणतया, एवं वह्नित्वगतव्यक्तित्वमिव महानसीयत्वगतव्यक्तित्वस्यापि धर्म्मत्वसमानाधिकरणतया तत्तन्निष्ठावच्छेदकतायां सामान्यतो धर्म्मत्वसमानाधिकरणधर्म्मनिष्ठावच्छेदकताभिन्नत्वस्य एवं रूपत्वसमानाधिकरणोभयावृत्तिधर्म्मनिष्ठावच्छेदकताभिन्नत्वस्याभावात् न तादृशाभाववारणमिति चेत् । न । महानसीयत्वनिष्ठावच्छेदकताभिन्ना सती वह्नित्वनिष्ठावच्छेदकताभिन्नावच्छेदकतापि तादृशतादृशावच्छेदकताकप्रतियोगिताकवह्निवृत्तिः, महानसीयवह्निवृत्तिभेदप्रतियोगित्वाभावधर्म्मनिष्ठावच्छेदकताकइतरवारकरूपाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतानिष्ठावच्छेदकतायां भेदद्वयनिष्ठावच्छेदकताद्वयानिरूपितत्वमस्ति, लक्षणे चास्माकं धर्म्मनिष्ठावच्छेदकताया इतरवारकरूपधर्म्मनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वं नास्तीत्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतायां भेदद्वयनिष्ठावच्छेदकताद्वयानिरूपितत्वस्य विवक्षणात् । महानसीयरूपधर्म्मनिष्ठावच्छेदकताभिन्नवह्नित्वरूपधर्म्मनिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वाभावरूपइतरवारकाभावतादृशनिवेशानाक्रान्ततया तादृशइतरवारकसहिताभावस्य धारणासम्भवात्, एवं रूपवृत्तिनिरूपकताकइतरवारकाभावीयप्रतियोगितनिरूपितावच्छेदकतानिष्ठावच्छेदकतायामपि भेदद्वयनिष्ठावच्छेदकत्वानिरूपितत्वनिवेशात् द्वित्ववृत्तिनिरूपकतानिष्ठावच्छेदकताभिन्नवह्नित्वगतएकत्ववृत्तिनिरूपकतानिष्ठावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वाभावरूपे इतरवारकाभावस्य निवेशाक्रान्ततया तादृशइतरवारकघटितनिरूपकतावत् तादृशनिरूपकतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य धारणात् । अथवा तदभावनिरूपितप्रतियोगित्वाभावः यद्धर्म्मवद्वृत्तित्वाभाव एव निवेश्यः, तथाच तद्व्यक्त्यभावरूपे तदभावनिरूपितप्रतियोगित्वन्नास्तीत्यभावस्य गुरुधर्म्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्धावपि न क्षतिः । घटाभावनिरूपितप्रतियोगित्वाभावे घटत्ववद्वृत्तित्वाभावसत्त्वाल्लक्षणसमन्वयः । ननु तद्रूपवान् रसादित्यादौ व्यभिचारिणि तद्रूपाभावनिरूपितप्रतियोगित्वन्नास्तीत्यभावस्य तादृशप्रतियोगितारूपे तद्व्यक्तिर्नास्तीत्यभावे सम्भवेन तस्य गुरुधर्म्मावच्छिन्नप्रतियोगिताकतया प्रसिद्ध्याऽभावान्तरमादायातिव्याप्तिः । एवं यत्र तद्धर्म्मवन्निरूपिता एकैव वृत्तिता तत्र तद्धर्म्मवन्निरूपितवृत्तित्वन्नास्तीत्यभावस्य गुरुधर्म्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्ध्या धर्म्मान्तरमादायातिव्याप्तिः । तादृशवृत्तितावृत्तिउभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्य्याप्तिककूटत्वे तादृशप्रतियोगितावृत्तिधर्म्मावच्छिन्नप्रतियोगिकाभावत्वावच्छिन्नानुयोगितापर्य्याप्तिककूटत्वावच्छिन्नवद्वृत्तितावच्छेदकत्वानिवेशे तद्वारणसम्भवेऽपि व्यासज्यवृत्तिधर्म्मप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकव्यासज्यवृत्तिधर्म्मे एवेति मते तादृशनिवेशासम्भव इति चेन्न । तादृशाभावत्वावच्छिन्नानिरूपकतायां तत्कूटत्वव्या-

प्यत्वस्य निवेशात्, तथाच तादृशाभावत्वावच्छिन्ननिरूपकतावृत्तितत्कूटव्याप्यरूपाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्कूटत्वावच्छिन्नवृत्तितावच्छेदकीभूततत्कूटत्वाभाववन्निरूपितत्वाभावत्वतादृशवृत्तितावृत्तिउभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकतातादृशानिरूपितपरम्परावच्छेदकतावद्धर्म्मं एव पारिभाषिकावच्छेदक इति निवेशात् । न च वह्निमान् धूमादित्यादौ घटाभावीयप्रतियोगित्वाभावघटाभावीयप्रतियोगित्वाभावगतकूटत्वव्याप्यत्वस्य तादृशभावत्वावच्छिन्ननिरूपकतायां सत्त्वात्तादृशकूटत्वस्यापि तादृशानिरूपकतावृत्त्यभावप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्त्वात् तादृशकूटत्वावच्छिन्नवद्वृत्तितावच्छेदकीभूततादृशकूटत्वाभाववन्निरूपितवृत्तित्वाभाववह्नित्ववन्निरूपितवृत्तिवृत्तितावृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकता तन्निरूपितपरम्परावच्छेदकतावत्त्वस्य वह्नित्वे सत्त्वादव्याप्तिः।तादृशनिरूपकतायां कूटत्वव्याप्यत्वव्यापकत्वनिवेशेऽव्याप्तिवारणं सम्भवतीति न शंक्यम्।प्रकारमुद्रया द्वयोर्निवेशाऽसम्भवात् । कूटत्वमात्रनिवेशे तद्वारणमित्यपि न सत् । वह्निमान् धूमादित्यादौ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणतद्व्यक्त्यभावनिरूपितप्रतियोगितावृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकतावान्नेति भेदस्य तद्व्यक्तिमान्नेति भेदे पर्यवसानसम्भवेन तस्य गुरुधर्मावच्छिन्नप्रतियोगितयाऽप्रसिद्ध्या तादृशनिरूपकतायां वह्न्यभावीयप्रतियोगित्वाभावगतकूटत्वव्यापकत्वसत्त्वात् अव्याप्तितादवस्थ्यम् । कूटत्वे तादृशाभावत्वव्याप्यत्वस्य तादृशनिरूपकताव्याप्यत्वस्य वा निवेशे नाऽव्याप्तिरिति तु न शंक्यम् । तादात्म्येनाऽभावसाध्यकस्थले तादृशाभावत्वाभावस्य तादृशनिरूपकत्वाभावस्य वा गुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽतिव्याप्तिः । किञ्चाभावत्वव्याप्यत्वस्य अभावत्वाभाववद्वृत्तित्वाभावरूपतया यत्र तादृशाभाववन्निरूपिता एकैव वृत्तिताव्यक्तिस्तत्र तादृशवृत्तित्वस्यैतद्व्यक्तिर्नास्तीत्यभावे पर्यवसानसम्भवात् तादृशवृत्तित्वाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतया तादृशवृत्तितावृत्तिउभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्याप्यकूटत्वनिवेशस्याऽऽवश्यकतया तत्रापि व्याप्यत्वस्य वृत्तित्वाभावरूपतया तस्यापि गुरुधर्मावच्छिन्नप्रतियोगिताकतया पुनरपि अभावव्याप्यत्वनिवेशे अनवस्थापत्तिरिति न तादृशनिवेशो विचारसह इत्याहुः ।

अपरे तु यदि वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वं तदा हेतुसमानाधिकरणयत्किञ्चिदभावे यद्धर्मसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वं निवेशनीयम्, भेदश्च प्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकः । न च पूर्वक्षणवृत्तित्वविशिष्टधूमाभावे प्रतियोगित्वसम्बन्धेन धूमाभावस्य सत्त्वात्पूर्वोक्ताऽव्याप्तिस्तदवस्थेति वाच्यम् । स्वविशिष्टप्रतियोगित्वमेव भेदप्रतियोगितावच्छेदकताघटकः सम्बन्धः । वै० स्वनिरूपितत्वस्वानवच्छिन्नत्वोभयसम्बन्धेन । न च पूर्वक्षणवृत्तित्वविशिष्टधूमाभावस्य यः संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तस्य यत्र स्वरूपेण साध्यता अयोगोलकीयवह्नेर्हेतुता तत्राऽव्याप्तिस्तत्र हेतुसमानाधिकरणो यो यत्किञ्चिदभावः सोऽभावाभावस्तस्मिन्नेवाभावे साध्यतावच्छेदकव्यापकत्वसत्त्वात्, तथाहि—प्रतियोगितासम्बन्धावच्छिन्ना याऽभावनिष्ठावच्छेदकता तादृशावच्छेदकताकप्रतियोगिताकभेदप्रतियोगिवच्छेदकता तादृश·

अत एवाऽतिरिक्तसामान्याभावस्याऽभावे धूमत्वादेरप्यनवच्छेदकत्वा-
तियोगितायामित्यदोषः । तत्-अवच्छेदकत्वम् ।

अत एवेति । यत्किञ्चिदेकाभावव्यक्तेः प्रवेशादेवेत्यर्थः । यदि सामान्या-
भावो नास्ति तदा वह्निमन्निष्ठतत्तद्धूमाभावप्रतियोगितासामान्यशून्ये धूमा-
न्तरे वर्त्तमानतया धूमत्वस्य निरुक्ताऽवच्छेदकत्वं न स्यादिति व्याप्तिल-
क्षणातिव्याप्तिनिरासार्थमेव सामान्याभावः साधयिष्यते इति । तथाच
धूमसामान्याभावस्यैव हेतुसमानाधिकरणस्य प्रतियोगितासामान्यशून्ये

वच्छेदकताकप्रतियोगित्वमभावप्रतियोगित्वविशिष्टाभावत्वापेक्षया लाघवाद् भावभेदत्वस्यैव
कल्पनीयमिति वाच्यम् । अभावव्यक्तेः स्वरूपतो भानस्वीकारात् । वस्तुतस्तु यद्धर्मा-
धिकरणवृत्तितावच्छेदकं यत्कूटत्वं तत्प्रतियोगिकपर्याप्त्यनुयोगितानिरूपितपरम्परावच्छेदकं
यत्कूटत्वं तत्प्रतियोगिकपर्याप्त्यनुयोगितानिरूपितपरम्पराऽवच्छेदकत्वाभाववत्त्वं हेतुसमा-
नाधिकरणयत्किञ्चिदभावे वर्तते स धर्मः पारिभाषिकाऽवच्छेदकः । कूटत्वं च हेतुसमाना-
धिकरणाभावव्यक्तिनिरूपितप्रतियोगितावच्छेदकसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रति-
योगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वम् । परम्पराऽवच्छेदकता च भेदत्व-
निष्ठावच्छेदकतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताव-
च्छिन्नत्वसम्बन्धावच्छिन्नोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितसामानाधिकरण्यसम्बन्धाव-
च्छिन्नावच्छेदकतानिरूपितवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्ना-
न्नावच्छेदकता बोध्या । वन्हिमान् धूमादित्यादौ हेतुसमानाधिकरणवृत्तिता-
वच्छेदककूटत्वप्रतियोगितानिरूपितपरम्परावच्छेदकत्वाभावसत्वात् यद्धर्मपदेन भेदः स
घटत्वस्यैव धर्तुं शक्यत्वान्न वन्हित्वस्य, तथाहि घटाभावप्रतियोगिताको यो तद्घ-
टस्तादृशभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वस्य वन्हित्वाधिकरणवृत्तितावच्छेदकत्वा-
त्तत्प्रतियोगितानिरूपितपरम्परावच्छेदकत्वस्यैव घटाभावे सत्वात् । अनुगम-
स्तु—हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानिरूपितपरम्पराऽवच्छेदकतावद्भिन्नत्वं साध्यता-
वच्छेदके निवेश्यम् । अभावश्च यद्धर्माधिकरणनिरूपितवृत्तितावच्छेदकीभूतकूटत्वप्रतियो-
गिकपर्याप्त्यनुयोगितानिरूपितभेदत्वनिष्ठावच्छेदकतानिरूपिता सती प्रतियोगित्वनिष्ठाव-
च्छेदकतानिरूपितोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपिता सती प्रतियोगित्वनिष्ठावच्छेदक-
तानिरूपितावच्छेदकत्वाभावात्मक इति प्राहुः ।

दीधितौ अभावे—असत्त्वे इत्यर्थः । तथाच सामान्याभावस्य विशेषाभावकूटाऽनतिरि-
क्तत्वोपगमे इति यावत् । तत्साधनमिति । अतिरिक्तसामान्याभावसाधनम् । सङ्कुच्छ-
त इति । अभावे यत्किञ्चिदेकत्वाऽप्रवेशे विशेषाभावकूटप्रतियोगितानतिरिक्तवृत्तित्वेनैवाऽ-
तिप्रसङ्गवारणसम्भवेऽतिरिक्तसामान्याभावसाधनं व्यर्थमेव स्यात् । अत्रेयमाशङ्का । सामा-
न्याभावः प्रसिद्धश्चेन्निराकरणाऽसङ्गतिः, अप्रसिद्धश्चेदलीकप्रतियोगिकतया सामान्याभावो
नास्तीत्यभावरूपाऽऽपादकाऽप्रसिद्ध्या धूमत्वादौ अनवच्छेदकत्वापत्तिदानमसङ्गतमिति । अ-

पातादग्रे तत्साधनमपि साधु सङ्गच्छत इति वाच्यम् । वह्निघटवृत्तिद्वित्वतार्णातार्णदहनवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितानातिरिक्तवृत्तिवह्नित्वादावतिप्रसङ्गात् ।

घटादाववृत्त्या धूमत्वस्याऽवच्छेदकत्वमिति भावः। ननु तादृशप्रतियोगिताऽन्यूनाऽनतिरिक्तवृत्तित्वं वाच्यम्, वह्नित्वं तु घटवृत्तितादृशप्रतियोगितान्यूनवृत्ति अत आह तार्णातार्णेति । अतिप्रसङ्गादिति । तथाच व्याप्तिलक्षणा(१)ऽसम्भव इति भावः।

त्रोत्तरम्। यत्किञ्चिदभावत्वावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वंनास्तीत्यर्थकत्वादिति। अवच्छेदकता चाऽत्र स्वरूपसम्बन्धरूपा ग्राह्या। न च सामान्याभावसत्त्वेऽपि विशेषाभावत्वरूपयत्किञ्चिदभावत्वावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाभावसाधनसम्भवेन सामान्याभावो नास्तीत्याकारकानुमितिः स्यादिति वाच्यम् । तथासति तत्तद्विशेषाभावकूटत्वातिरिक्ताभावत्वावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं नास्तीत्यर्थकत्वात् । सामान्याभावो नास्तीत्यस्य सामान्याभावसत्वे तत्तद्विशेषाभावकूटत्वातिरिक्तसामान्याभावत्वावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वसम्भवेन तदभावसाधनाऽसम्भवादिति ।

अथ तादृशप्रतियोगिकत्वाभावमापादकीकृत्य धूमत्वादौ अनवच्छेदकत्वापत्तिर्न सम्भवति विभिन्नधर्मिकत्वादिति चेन्न । धूमत्वादिरूपसामान्यधर्मे तत्तद्विशेषाभावकूटत्वातिरिक्ताभावत्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगितानवच्छेदकत्वमेव साध्यते इति तादृशप्रतियोगितानवच्छेदकत्वमापादकीकृत्य धूमत्वादौ अनवच्छेदकत्वापत्तिसम्भवान्न कोपि दोषः । आपत्तिश्च धूमत्वं यदि तत्तद्विशेषाभावकूटत्वातिरिक्ताभावत्वावच्छिन्ननिरूपकताकप्रतियोगितावच्छेदकं स्यात् तदा वह्निमन्निष्ठतद्धूमाभावनिरूपितप्रतियोगित्वाभाववद्वृत्तित्वाभाववद्धर्मभिन्नं स्यादिति । नन्वापत्तिअनुपपत्तिवारणार्थमेव पदार्थस्य सिद्धिर्न त्वतिप्रसङ्गवारणार्थमिति, अतएवेत्यादिना धूमत्वादेरनवच्छेदकत्वापातादिति व्याख्यानमसंगतमिति चेन्न । सामान्याभावसिद्धेरुपन्यासस्याऽतिव्याप्तिवारणमेव प्रयोजनमित्य भिधानादिति ।

**वह्निघटवृत्तीति** शिरोमणिः । नन्वत्र कल्पे वह्निघटोभयाभावमादाय वह्निमान् धूमादित्यत्र विशिष्टसत्ताभावमादाय सत्तावान् जातेरित्यत्र चाऽव्याप्तिवारणाय हेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वमवश्यं निवेशनीयम्, तथाच वह्निघटवृत्तिद्वित्वावच्छिन्नाभावस्य लक्षणाऽघटकत्वात् , तथाहि—तदभावप्रतियोगितावच्छेदकत्वं आधेयतासम्बन्धेन वह्नेर्घटस्य वह्नित्वस्य घटत्वस्य द्वित्वद्वित्वत्वयोश्च न मन्यते, तेषां गुरुत्वेन तदपेक्षया लाघवाद् वह्नित्वघटत्वउभयत्वत्रितयधर्मस्यैवेत्युक्तत्वाद् द्वित्वावच्छिन्नाभावस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकत्वविरहादलं कल्पान्तरेणेति चेन्न । तेजो-

(१) ननु तादात्म्येन गन्धवतः साध्यतायां लक्षणगमनात् कथमसम्भवस्तादात्म्येनोभयाभावस्य प्रतियोगिव्यधिकरणत्वाप्रसिध्या धर्तुमशक्यत्वादिति चेन्न । विशेषणत्वाव्याप्यवृत्तित्वेपि भेदस्य व्याप्यवृत्तितामते तादृशस्थलस्य व्याप्यवृत्तितया प्रतियोगिवैयधिकरण्यप्रवेशेनोभयाभावस्य धर्तुं शक्यत्वादिति ध्येयम् ।

घटोभयाभावमादायाऽव्याप्तेर्दुर्दत्वात् ।

न च धर्मविशिष्टान्यत्वं प्रतियोगितायां निवेश्यम्, वै० स्वावच्छिन्नत्वस्वेतरधर्मानवच्छिन्नत्वोभयसम्बन्धेन, तथाच नोक्तोभयाभावमादायाऽव्याप्तिरिति वाच्यम् । वह्निघटद्वित्तियावत्वात्मकतद्व्यक्त्यवच्छिन्नाभावमादायाऽव्याप्तेः । न च व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायां निवेश्यमिति वाच्यम् । वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तेः । न चाऽयोगोलकान्यत्वविशिष्टाभावमादाय नातिव्याप्तिरिति वाच्यम् । तादृशप्रतियोगित्वाभाववति अयोगोलकीयवह्नौ साध्यतावच्छेदकस्य सत्त्वात् । न च पर्याप्तिसम्बन्धेन तत्र साध्यतावच्छेदकस्य न वृत्तित्वम्, यदि च पर्याप्तिसम्बन्धेन तादृशोभयत्वस्य प्रत्येकवृत्तित्वं तदवृत्तित्वं धूमत्वसाध्यतावच्छेदके वर्तते तेन च तद्भिन्नत्वस्य वह्नित्वरूपसाध्यतावच्छेदके सत्त्वादिति वाच्यम् । वह्नित्वरूपेण व्यापकत्वस्येष्टत्वात् । एवं च घटनिष्ठतद्व्यक्तित्वतदन्यगगनभिन्नप्रमेयोभयसाध्यकव्यभिचारिण्यतिव्याप्तिः, तत्र साध्याभावस्य लक्षणाऽघटकत्वात् । न च गगनभिन्नानुयोगिकस्वरूपसम्बन्धेन पटभेदाधिकरणनिरूपिततादात्म्यसंयोगान्यतरसम्बन्धावच्छिन्नसम्बन्धितावशिष्टाभावस्य लक्षणघटकतया तन्निरूपितप्रतियोगित्वाभाववति गगने उक्तसाध्यतावच्छेदकस्याऽसत्त्वान्नातिव्याप्तिरिति वाच्यम् । तादृशसम्बन्धेन पटभेदाधिकरणनिरूपितोक्तान्यतरसम्बन्धावच्छिन्नसम्बन्धित्वस्यापि गगने सत्त्वात्तादृशप्रतियोगित्वाभावस्य गगनेऽप्यसत्त्वेनाऽतिव्याप्तितादवस्थ्यात् । न च गगनभिन्नानुयोगिकस्वरूपेण गुणभेदाधिकरणनिरूपिततादात्म्यसमवायान्यतरसम्बन्धावच्छिन्नवृत्तिताविशिष्टाभावमादाय नातिव्याप्तिरिति वाच्यम् । वन्हिमान् धूमादित्यादौ पर्वतान्यत्वविशिष्टाभावमादायाऽव्याप्तिवारणाय प्रतियोगितायां साध्यतावच्छेदकातिरिक्ताऽभावानवच्छिन्नत्वं निवेश्यम्, तेनैवोक्ताभाववारणम् ।

यद्यपि प्रतियोगितायां धर्मविशिष्टान्यत्वमपहाय साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मावच्छिन्नत्वं निवेशनीयम्, तथाचोभयसाध्यकव्यभिचारिणि साध्याभावमादाय नातिव्याप्तिः । एवं चोक्तोभयाभावमादाय नाव्याप्तिः, तस्मिन् साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वाभावादिति । तथापि तद्व्यक्तित्वतद्व्यक्तित्वान्यगगनभिन्नप्रमेयोभयगतधीविशेषविषयत्वात्मकद्वित्वविशिष्टसाध्यकव्यभिचारिणि अतिव्याप्त्यापत्तेः । तत्र साध्याभावीयप्रतियोगितावच्छेदकत्वस्य धीविशेषविषयत्वात्मकोभयत्वापेक्षया संख्यात्मकद्वित्वे एव लघौ कल्पनीयत्वात्संख्यात्मकद्वित्वावच्छिन्नाभावस्य साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकत्वविरहात् व्यभिचारिस्थलान्यत्वविशिष्टाभावस्य च साध्यतावच्छेदकातिरिक्ताभावानवच्छिन्नप्रतियोगिताकत्वाभावेन घटाभावस्य लक्षणघटकत्वात् ।

ननु साध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदको यः साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मस्तदनवच्छिन्नत्वमेव प्रतियोगितायां निवेश्यम्, तथाच धीविशेषविषयत्वात्मकोभयत्वविशिष्टसाध्यकव्यभिचारिणि संख्यात्मकद्वित्वावच्छिन्नाभावमादाय नातिव्याप्तिः । संख्यात्मकद्वित्वस्य धीविशेषविषयत्वात्मकसाध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदको यः साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मस्तदनवच्छिन्नत्वमेव प्रतियोगितायां निवेश्यम्, तथाच धीविशेषविषयत्वात्मकोभयत्वविशिष्टसाध्यकव्यभिचा-

एतेनाऽन्यूनवृत्तित्वविशेषितमपि परास्तम् । अतएव नानाप्रतियोगिवृत्तिएकप्रतियोगिताङ्गीकारेऽपि न निस्तारः । लघुरूपसमनियतगुरुरूपेण साध्यतायां सद्धेताव्याप्तिः, तादृशतदवच्छिन्नत्वाऽप्रसिद्धेरिति चेन्न ।

[एतेनेति काचित्कं, तत्र एतेन] तार्णातार्णोभयाभावमादाय दत्तदोषेण, सामान्याभावप्रतियोगित्वमेकमेव समस्तप्रतियोगिवृत्ति इति तदनतिरिक्तवृत्त्येव धूमत्वमतो नोक्ताऽतिव्याप्तिरिति प्रगल्भोक्तं दूषयति अतएवेति । उक्तरीत्या वह्नित्वादेरवच्छेदकत्वप्रसंगादेवेत्यर्थः । ननु प्रतियोगिताऽनवच्छेदकामित्यत्राऽवच्छेदकत्वं स्वरूपसम्बन्ध एव वाच्यम्, स्वाव(१)च्छेद्यप्रतियोगिता(२)कत्वेन साध्यतावच्छेदकं पुनर्विशेषणीयमतो गुरुधर्मेण साध्यतायां नातिव्याप्तिरत आह लघुरूपेति । ननु घटवान् महाकालत्वादित्यादावव्याप्तिभियेव गुरुरूपेण साध्यतायामतिव्याप्तिभियापि प्रतियोगिताधर्मिकोभयाभावघटितं लक्षणं वाच्यम्, अतस्तदपि दूषयति लघुरूपेत्यादिनेत्यपि कश्चित् । वह्नित्वादिलघुरूपसमानियतं यत्प्रमेयवह्नित्वादिकं ताद्रूप्येण साध्यतायां धूमादावव्याप्तिरित्यर्थः ।

रिणि संख्यात्मकद्वित्वावच्छिन्नाभावमादाय नातिव्याप्तिः, संख्यात्मकद्वित्वस्य धीविशेषविषयत्वात्मकसाध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वविरहादिति चेन्न । स्वकालीनद्रव्यत्वपृथिवीत्वोभयत्वप्रतियोगिकपर्याप्तिमत्तासम्बन्धेन द्रव्यत्वनिष्ठत्वव्यक्तित्वपृथिवीत्वनिष्ठत्वव्यक्तित्वोभयगतोभयत्वविशिष्टस्य समवायेन साध्यतायां व्यभिचारिण्यतिव्याप्तेः, तत्र परम्परासम्बन्धेन साध्यतावच्छेदकमपेक्ष्य द्रव्यत्वपृथिवीत्वोभयत्वस्यैव समवायेनाऽभावप्रतियोगितावच्छेदकत्वं कल्पनीयम् । द्रव्यत्वपृथिवीत्वोभयत्वस्य च साध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तित्वस्य च सत्वेन तदनवच्छिन्नप्रतियोगिताकस्य घटाभावस्य तन्निरूपितप्रतियोगित्वाभाववति उक्तसाध्यतावच्छेदकत्वस्य वृत्तित्वेन पारिभाषिकावच्छेदकत्वानुपपत्तिरिति तद्वारणाय साध्यवद्वृत्त्यभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकसाध्यतावच्छेदकभिन्नो यो व्यासज्यवृत्तिधर्मस्तदनवच्छिन्नत्वस्य प्रतियोगितायां निवेशे द्रव्यत्वपृथिवीत्वोभयत्वस्य साध्यवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वविरहेण भवति यादृशव्यासज्यवृत्तिधर्मान्तरमेव तदनवच्छिन्नत्वस्य द्रव्यत्वपृथिवीत्वोभयत्वावच्छिन्नप्रतियोगितायां सत्वात्तमादायैवोक्तव्यभिचारिणि नातिव्याप्तिस्तदा स्वसमानवृत्तिकत्वं कथं न रोचयेत् । अथ वह्निघटवृत्तिद्वित्वतार्णातार्णद्हनवृत्तिद्वित्वावच्छिन्नाभावमादायाव्याप्तिवारणाय प्रतियोगितावच्छेदकान-

(१) तादृशधर्मावच्छेद्यत्वाप्रसिद्धेरिति दीधितिसङ्गमनायैव यत्किंचित्प्रतियोगितामपहाय स्वावच्छेद्यप्रतियोगिताकत्वमुक्तम् ।

(२) अत्र प्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा विषयतासम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य प्रमेयधूमत्वे सत्वादतिव्याप्तिः स्यादिति भावः ।

प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वस्य विवक्षितत्वात् ।

[तादृशेति । स्वावच्छेद्यप्रतियोगिताकसाध्यतावच्छेदकाप्रसिद्धेरित्यर्थः ]

प्रतियोगितावच्छेदकेति । हेतुसामानाधिकरणाभावप्रतियोगिताया यदव-
च्छेदकं तदभाववदवृत्तित्वस्य मूलस्थप्रतियोगितावच्छेदकान्तेन विवक्षि-
तत्वादित्यर्थः ।

तिरिक्तत्वस्वरूपलक्षणं कृत्वा स्वसमानवृत्तिकत्वेन वारणं सन्दर्भविरुद्धमेतत्कल्पेऽपि स्वसमा-
नवृत्तिकधर्मावच्छिन्नं यद्धेतुमन्निष्ठाभावप्रतियोगित्वं तदभाववद्वृत्ति यत्स्वं तद्भिन्नसाध्यता-
वच्छेदकमित्यनेनैव वारणसम्भवात्, द्वित्वावच्छिन्नाभावप्रतियोगित्वं न वह्नित्वसमानवृ-
त्तिकधर्मावच्छिन्नमिति चेन्न । समवायेन द्रव्याभावप्रतियोगित्वस्य समवेतद्रव्ये एव स्वी-
कारेण समवायेन द्रव्यसाध्यकव्यभिचारिण्यतिव्याप्तिः, समवायेन द्रव्याभावीयप्रतियोगित्वा-
भाववति गगने द्रव्यत्वस्य वृत्त्या पारिभाषिकावच्छेदकानुपपत्त्या गगनस्यैव पारिभाषिका-
वच्छेदकत्वमिति । उत्तरकल्पे च प्रतियोगितावच्छेदकद्रव्यत्वस्य पारिभाषिकावच्छेदकत्वा-
न्नातिव्याप्तिः, तथाच पूर्वकल्पस्य सर्वमतसाधारण्याभावात्कल्पान्तरानुसरणमिति चिन्त्यम् ।

नन्वत्र वन्हिमान् प्रमेयधूमादित्यत्र प्रमेयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं
नास्तीत्यभावप्रतियोगितावच्छेदकत्वं लाघवाद् धूमसमानाधिकरणाभावप्रतियोगितावच्छेद-
कत्वे स्वीकरणीयमिति चेन्न । नीलधूमत्वादेरिव प्रमेयधूमत्वस्य व्यर्थविशेषणघटितत्वेन व्या-
प्यत्वासिद्धत्वम् । अधिकमनौपाधिकत्वकल्पे नीलधूमत्वादेर्वारणीयत्वे तु स्वसमानाधिक-
रणतादृशविशिष्टान्तराऽघटितत्वेन विशेषणीयत्वादिति पंक्तिव्याख्यानावसरे जगदीशेनाऽ-
लक्ष्यतैवोक्ता ।

अथवा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं नास्तीति प्रतीतिसिद्धहेतुसमानाधिकर-
णाभावत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्ननिरूपितप्रतियोगितावच्छेदकाभावस्यैव निवे-
शात्, तथाच हेतुसमानाधिकरणतद्व्यक्तिनिरूपितप्रतियोगितावच्छेदकाऽभावस्य वह्न्यादा-
वेवसत्त्वेनाऽव्याप्त्यभावात् । न च हेतुसमानाधिकरणमहानसीयवह्न्यभावीयप्रतियोगितावच्छेद-
कवह्नित्वावच्छिन्नाभाववति वह्नित्वस्याऽवृत्त्या वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् ।
तद्व्यक्तिनिरूपितप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य निवेशनीयत्वा-
त् । यद्यपि महानसीयतेजोभावप्रतियोगितावच्छेदकतेजस्त्वाभाववति वह्नित्वस्याऽवृत्त्या उ-
क्तस्थलेऽव्याप्तिः, तथापि प्रतियोगितावच्छेदकव्यापकत्वं विवक्षणीयम्, महानसीयतेजस्त्व-
वति तेजसि वह्नित्वाभावसत्त्वेन व्यापकत्वविरहेण पारिभाषिकाऽवच्छेदकत्वविरहात् ।
न च महानसीयधूमजनकतेजस्त्वावच्छिन्नाभावमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम् ।
हेतुमन्निष्ठाभावप्रतियोगितायां धर्मविशिष्टान्यत्वनिवेशादेव तद्वारणात् । वै० स्वावच्छिन्नत्व-
स्वेतरधर्मावच्छिन्नत्वोभयसम्बन्धेन । तथाच महानसीयतेजस्त्वावच्छिन्नाभावीयप्रतियोगिता-
यामुक्तसम्बन्धेन धर्मविशिष्टान्यत्वविरहान्नाऽव्याप्तिः । न च महानसीयवह्निमान् धूमा-
दित्यत्राऽतिव्याप्तिः, तत्र साध्याभावीयप्रतियोगितायामुक्तसम्बन्धेन धर्मविशिष्टान्यत्वविर-

अत्र च येन सम्ब(१)न्धेन प्रतियोगितावच्छेदकत्वं तेनैव तदभावो

ह्यादभावान्तरस्यैव लक्षणघटकत्वादिति वाच्यम्। महानसीयाऽभावस्यैव लक्षणघटकतया तत्प्रतियोगितावच्छेदकाभाववति पर्वतीयवह्नौ महानसीयत्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वान्नातिव्याप्तिः। न च तद्भिन्नत्वस्य वह्नित्वादौ सत्त्वादतिव्याप्तिरिति वाच्यम्। धूमहेतुकस्थले वह्नित्वेन व्यापकत्वस्येष्टत्वात्। ननु महानसीयवह्निभिन्नवह्निमान् धूमादित्यादावतिव्याप्त्यापत्तिः, तत्र साध्याभावीयप्रतियोगितायां धर्मविशिष्टान्यत्वविरहात् महानसीयवह्निभिन्नाभावस्य च लक्षणाऽघटकत्वात। न च महानसीयवह्निप्रतियोगिकसंयोगसम्बन्धेन महानसनिरूपितवृत्तित्वाभावावच्छिन्नाभावमादाय नातिव्याप्तिरिति वाच्यम्। प्रोक्तसाध्यतावच्छेदकातिरिक्ताभावानवच्छिन्नत्वविशेषणादेव वारणादिति चेन्न। साध्यतावच्छेदकताविशिष्टान्या याऽवच्छेदकता तद्विशिष्टान्यत्वमवच्छेदकतायां निवेशनीयम् वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन। स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन। द्वितीयवै० स्वनिरूपितत्वस्वभिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेन।

वस्तुतस्तु लिखितपुस्तके प्रतियोगितावच्छेदकं च विशिष्योपादेयमिति पाठः। तथाच प्रतियोगितावच्छेदकं यद्यत्तदभाववदवृत्तिभिन्नत्वमर्थः। तादृशप्रतियोगितावच्छेदकानेष्ठतत्तद्व्यक्तित्वावच्छिन्नाभाववदवृत्तित्वमिति पर्यवसितार्थः। अन्यथा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यत्र प्रतियोगितावच्छेदकप्रतियोगिकाऽभावमात्रनिवेशे सर्वस्यैव वृत्तिमतो वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकाभाववद्वृत्तित्वेनाऽवृत्तिगगनादेरेव प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तितया व्यभिचारिमात्रेऽतिप्रसङ्गः। तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नाभावनिवेशेऽप्यसम्भवः, तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नस्य केवलान्वयित्वादिति। न च वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकाभावो निवेश्य इति वाच्यम्। तथासति निखिलतत्तद्वह्नित्वानामन्यतमत्वाद्यवच्छिन्नाभावमादाय वह्नित्वस्याऽवच्छेदकत्वापत्तिः। उपदर्शितविवक्षायां च वह्नित्वं प्रत्येकतत्तद्वह्नित्वानामतिरिक्तवृत्त्येवेति नोक्तापत्तिः। एवं च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्योपलक्षणतया प्रमेयधूमहेतुकस्थले नाव्याप्तिरिति। न च दण्डिमान् द्रव्यत्वादित्यादौ साध्यतावच्छेदकस्य सर्वस्यैव दण्डस्य चालनीन्यायेन तादृशप्रतियोगितावच्छेदकदण्डान्तराऽतिरिक्तवृत्तित्वादतिव्याप्तिरिति वाच्यम्। तत्तद्दण्डस्य तत्तद्दण्डानतिरिक्तवृत्तित्वेन सर्वत्रैव साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वेनाऽतिव्याप्तेरभावात्। न चैवं दण्डिमान् दण्डिसंयोगादित्यादावव्याप्तिरिति वाच्यम्। दण्ड्यादौ साध्ये परम्परासम्बन्धेन दण्डत्वादेरेव साध्यतावच्छेदकतायाः पूर्वमेवोक्तत्वादिति।

तेनैव—प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेनैव। वन्हित्वादेरिति। आदिना-

(१) नन्वेतादृशानवेशे वह्निमान्धूमादित्यादौ पर्वतान्यत्वविशिष्टाभावमादायाव्याप्तिः, प्रतियोगितावच्छेदकतावच्छेदकताघटकसामानाधिकरण्यसम्बन्धेन पर्वतान्यत्वविशिष्टे वह्नित्वस्यावृत्तेरिति चेन्न। साध्यतावच्छेदकातिरिक्तभेदानवच्छिन्नत्वेन प्रतियोगिताया विशेषणीयत्वादिति भावः।

**प्राह्यः, तेन धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटत्वादेः कालिकसम्बन्धेनाऽभाववति आत्मादौ वह्नित्वादेः समवायेनाऽवृत्तावपि नोक्तवच्छेदकत्वम्, न वा धूमत्वादेः संयोगादिसम्बन्धेन स्वाभाववति समवेतत्वेऽप्यवच्छेदकत्वहानिः।**

---

महानसीयवह्नित्वस्य परिग्रहः। तेन घटत्वस्य वह्नित्वाऽसमानवृत्तिकत्वेऽपि नासंगतिः। नोक्तावच्छेदकत्वम्, न वह्निमान् धूमादित्यादावव्याप्तिरिति भावः। प्रतियोगितावच्छेदकनिष्ठप्रतियोगितायां प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वानुपादाने सम्बन्धसामान्यावच्छिन्नत्वं यत्किञ्चित्सम्बन्धावच्छिन्नत्वं वा वक्तव्यम्। तत्र प्रथमाभिप्रायेणाव्याप्तिदानम्। सम्बन्धसामान्यावच्छिन्नत्वं च वृत्त्यनियामकान्यसम्बन्धत्वव्यापकत्वं प्रतियोगितावच्छेदकाभावीयप्रतियोगितायां निवेश्यम्। व्यापकता च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन। तथा चाऽन्यतमसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायाऽव्याप्तिः, सर्वेषामेव सम्बन्धानामन्यतमत्वेन संसर्गता यत्किञ्चित्सम्बन्धावच्छिन्नत्वनिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिः, यत्किञ्चित्सम्बन्धावच्छिन्नत्वं च सम्बन्धत्वव्याप्ययत्किञ्चिद्धर्मावच्छिन्नसंसर्गताकत्वं तादृशप्रतियोगितायां निवेश्यम्, तथाच वह्निमान् धूमादित्यादावव्याप्तिवारणसम्भवेऽपि धूमवान् वह्नेरित्यत्राऽतिव्याप्तिरिति भावः। अपरे तु यत्किञ्चित्सम्बन्धावच्छिन्नत्वनिवेशाभिप्रायेणाऽतिव्याप्तिरुक्ता! निवेशस्तु तादृशाभावप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मपर्याप्तावच्छेदकतानिष्ठावच्छेदकतानिरूपिता सती संसर्गत्वसमानाधिकरणाऽवच्छेदकतानिष्ठावच्छेदकतानिरूपिता या प्रतियोगितानिष्ठावच्छेदकता तन्निरूपिताभावनिष्ठावच्छेदकताधिकरणनिष्ठावच्छेदकताकवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववत्त्वम्, तद्व्यक्तित्वावच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं नास्तीति प्रतीतिसिद्धोऽभाव इति। ननु तादात्म्येन साध्यतावच्छेदकस्थले हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूतघटत्वादेः संयोगेनाऽभाववति तादात्म्येन वृत्तित्वाऽप्रसिद्ध्याऽव्याप्तिसंभवेऽतिव्याप्त्यभिधानमयुक्तमिति चेन्न। साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धेनाऽवृत्तित्वस्य विवक्षितत्वादिति धूमवान् वह्नेरित्यादौ तादृशधूमत्वाभाववति घटादौ तादृशसम्बन्धेन वृत्तित्वाऽप्रसिद्धावपि साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तित्वीयस्वरूपसम्बन्धेन तादृशवृत्तित्वाभावस्य विवक्षितत्वान्नातिव्याप्तिरित्याहुः।

अन्ये तु हेतुतावच्छेदकनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपित-अधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकताकाभावनिष्ठावच्छेदकतानिरूपित-प्रतियोगित्वनिष्ठावच्छेदकताकाऽवच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसामानाधिकरण्यनिष्ठावच्छेदकतानिरूपिताऽऽधेयत्वसम्बन्धावच्छिन्नोभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता सती संसर्गतावच्छेदकसमानाधिकरणाऽऽधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितसंसर्गनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिता या प्रतियोगितानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिनाऽभावनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितवृत्तिता-

त्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितंप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताऽभावनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितउभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपिता सती अभावत्वावच्छिन्ना याऽनुयोगिता तन्निरूपकपर्याप्तिकूटत्वावच्छिन्नत्वस्य साध्यतावच्छेदके विवक्षणीयत्वात्, तथाच यत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकीभूत धर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तिभिन्नत्वस्य सत्त्वान्नाव्याप्तिरिति प्राहुः। केचित्तु आद्यस्याऽयमनुगमः—प्रतियोगितावच्छेदकविशिष्टत्वं पारिभाषिकावच्छेदकत्वम्। वै० सम्बन्धत्वसमानाधिकरणधर्मावच्छिन्नसंसर्गताकस्वनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वाभावकूटवत्त्वसम्बन्धेन। द्वितीयकल्पे च स एवाऽनुगमः। वैशिष्टयन्तु सम्बन्धत्वसमानाधिकरणधर्मावच्छिन्नसंसर्गताकस्वनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धेनेत्याहुः। तच्चिन्त्यम्।

नन्वत्र नित्यज्ञानानुयोगिकविषयितासम्बन्धेन घटत्वविशिष्टस्य समवायेन साध्यतायामीश्वरत्वादिहेतावव्याप्तिः, तत्र साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य हेतुसामानाधिकरण्यविरहाद् समवायेन घटत्वविशिष्टस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तथात्वेऽपि तन्निरूपितप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन प्रतियोगितावच्छेदकाभाववति नित्यज्ञाने साध्यतावच्छेदकताघटकसम्बन्धेन वस्तुमात्रस्यैव वृत्तित्वेन वृत्तित्वाभाव। प्रसिद्धेः। न च समवेतगगनोभयाभावमादाय व्याप्तिरिति वाच्यम्। तादृशाभावप्रतियोगितावच्छेदकाभाववति अभावपरमाण्वादौ साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्धेः। न च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाऽऽधेयताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवृत्तित्वाभावो निवेश्य इति वाच्यम्। तादृशाभावस्य केवलान्वयित्वेन घटत्वस्यापि पारिभाषिकाऽवच्छेदकत्वापत्तेरिति चेन्न। अत्र स्वसमानवृत्तिकत्वस्यापि निवेश्यतया घटत्वसमानवृत्तिकत्वं नोभयत्वे किन्तूभयत्वसमानवृत्तिकत्वमेवेति नाव्याप्तिः। केचित्तु उक्तसम्बन्धेन घटत्वविशिष्टस्य समवायेन साध्यतायामीश्वरत्वादिहेतावव्याप्तिवारणाय हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मव्यापकमित्युक्तौ न दोषः। व्यापकता च प्रतियोगितावच्छेदकताघटकसम्बन्धेन, व्याप्यता च साध्यतावच्छेदकताघटकसम्बन्धेन, तथाच विषयितया तदुभयत्वाधिकरणे स्वरूपेणोभयाभावसत्त्वात्। न चैतादृशरीत्या साध्यतावच्छेदकस्याप्यवच्छेदकत्वप्रसक्तिरिति वाच्यम्। तादृशोभयत्वे स्वसमानवृत्तिकत्वविरहात्। निरुक्तसम्बन्धेन व्याप्यत्वाऽनिवेशे वह्निमान् धूमादित्यादावव्याप्तिः, तादृशावच्छेदकस्य घटत्वादेः कालिकेन वह्नित्वव्यापकत्वादित्याहुः।

यद्यपि प्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यावच्छेदकताविशिष्टान्यत्वं निवेशितम्, तथाच समवेतगगनोभयाभावस्यापि न लक्षणघटकत्वम्, तथापि नित्यज्ञानगगनगतद्वित्वात्मकतद्व्यक्त्यवच्छिन्नाभावमादायाऽव्याप्तिवारणात्। न च यत्र सविषयकानुयोगिकविषयितासम्बन्धेन घटत्वविशिष्टस्य समवायेन साध्यता ईश्वरत्वस्य हेतुता तत्राऽव्याप्तिः, तत्र नित्यज्ञानगगनगतद्वित्वात्मकतद्व्यक्त्यवच्छिन्नाभावप्रतियोगितावच्छेदकाभाववन्निरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तित्वाभावाऽप्रसिद्धेरिति वाच्यम्। साध्य-

यत्तु साध्यतावच्छेदकताघटकसम्बन्धेन तदभावो ग्राह्य इति । तत्तुच्छम्, धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तेः । लघुतया हेतुमन्निष्ठताद्दशप्रमाविशेष्याभावप्रतियोगितावच्छेदकीभूतस्य धूमत्वादेः स्वरूपसम्बन्धेनाऽभाववर्ति धूमे एव ताद्दशप्रमाविशेष्यत्वस्य वृत्तेः ।

---

तावच्छेदकताघटकसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठवृत्तिताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकवृत्तित्वाभावस्य विवक्षितत्वादिति । तथाचोक्तद्वित्वादौ पारिभाषिकाऽवच्छेदकत्वप्रसिद्धिरिति नाव्याप्तिः । न चैवमपि यत्र सविषयकानुयोगिकविषयितासम्बन्धेन प्रमेयविशिष्टस्य समवायेन साध्यता ईश्वरत्वं हेतुस्तत्राऽप्रसिद्धिरिति वाच्यम् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाभाववति यद्यत्सम्बन्धेनाऽवृत्तयो ये ये धर्मास्तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यतावच्छेदकत्वं साध्यतावच्छेदके निवेश्यम्, तथाच प्रमेयविशिष्टसाध्यकस्थले हेतुसमानाधिकरणघटपटोभयाभावप्रतियोगितावच्छेदकाभाववति सविषयके साध्यतावच्छेदकताघटकसम्बन्धेनोभयत्वस्य वृत्तित्वेऽपि समवायेनाऽवृत्तितया ताद्दशसम्बन्धावच्छिन्नघटपटोभयत्वनिष्ठावच्छेदकताकविशेष्यताभिन्नसविषयकानुयोगिकविषयितासम्बन्धावच्छिन्नविशेष्यतावच्छेदकत्वस्य प्रमेयत्वावच्छिन्नावच्छेदके सत्त्वान्नाव्याप्तिरिति । न च समवायेन घटत्वस्यापि निरुक्तोभयाभाववति सविषयकेऽवृत्तितया तत्समानवृत्तिकत्वस्य घटपटोभयत्वे विरहादिति वाच्यम् । अवृत्तयो ये ये धर्मास्तत्तद्धर्मान्तर्गतयत्किञ्चिद्धर्मसमानवृत्तिकत्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके निवेश्यम्, तथाच यत्किञ्चिद्धर्मान्तर्गतोभयत्वसमानवृत्तिकत्वस्य सत्त्वान्नाव्याप्तिरिति । नन्वेवंसति वन्हिमान् धूमादित्यादावव्याप्तिः, तार्णतार्णोभयाभावप्रतियोगितावच्छेदकाभाववति अवृत्तयो ये ये धर्मास्तत्तद्धर्मान्तर्गतोभयत्वसमानवृत्तिकत्वस्य तार्णतार्णोभयत्वे सत्त्वेन ताद्दशयद्धर्मान्तर्गतवन्हित्वस्याऽपि प्राप्ततया तदवच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य वन्हित्वे विरहादिति चेन्न । उक्तरीत्या ताद्दशावच्छेदकताविशिष्टान्यत्वनिवेशेनैव तद्वारणादिति ।

अतिव्याप्तेरिति । इदमत्रावधेयम् । प्रतियोगिवैयधिकरण्यघटकं प्रतियोगितावच्छेदकवैशिष्ट्यमपि प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेनैव वाच्यम्, न तु साध्यतावच्छेदकतावच्छेदकसम्बन्धेन, तथासति उक्ताऽतिव्याप्तेर्दुर्वारत्वापातात् । एतेनाऽत्र प्रतियोगिताऽनतिरिक्तवृत्तित्वमेव सम्यक् । प्रतियोगितावच्छेदकतानुधावनं स्वसमानवृत्तिकत्वादिविशेषणं च न देयमेव, प्रतियोगिवैयधिकरण्ये साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यनिवेशादेव तार्णतार्णोभयाभावस्य लक्षणाऽघटकतया तमादाय वह्नित्वादेरवच्छेदकत्वाऽप्रसक्त्यभावात् । न चोभयत्वावच्छिन्नसाध्यकाऽतिव्याप्तिवारणाय उभयाभावसाधारणं याद्दशविशेषरूपं तद्विवक्षणीयम्, तद्वत्तया उभयाभावोपि लक्षणघटक एवेति वाच्यम् । उभयत्वावच्छिन्नसाध्यतायां तथाविवक्षणेऽपि वह्नित्वादिना साध्यतायां ताद्दशविशेषस्य लक्षणाऽघटकत्वात्साध्यसाधनभेदादित्यपि कस्यचित्प्रलपनमप्यपास्तम् । उक्तस्थलेऽतिव्याप्तिवारणाय प्रतियोगितावच्छेदकतानियामकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्य-

तद्वदवृत्तित्वं च स्वरूपसम्बन्ध(१)न्धेन तद्वति साध्यतावच्छेदकताघटकसम्बन्धेनाऽवर्त्तमानत्वम्, नातो धूमत्वाभावस्यैव कालिकसम्बन्धेनाऽऽश्रये धूमे समवायेन, स्वरूपसम्बन्धेन च तदाश्रये स्पन्दादौ कालिकविशेषणतया धूमत्वस्य वर्त्तमानत्वादवच्छेदकत्वहानिः ।

---

स्यैव प्रतियोगिवैयधिकरण्यघटकत्वात् । न च सम्बन्धान्तरेण लघुधर्मसमानियतगुरुरूपेण साध्यतायां तस्य तद्घटकत्वेऽपि वह्नित्वादिना साध्यतायां न तन्निवेश इति वाच्यम् । तथापि वह्नित्वप्रकारकप्रमाविशेष्यवान् धूमादित्यादौ लघुरूपसमनियतगुरुरूपेण साध्यतायां तार्णतार्णोभयाद्यभावमादाय वह्नित्वप्रकारकप्रमाविशेष्यत्वादेरवच्छेदकत्वापत्तिवारणाय प्रतियोगितावच्छेदकानुधावनस्य स्वसमानवृत्तिकत्वादेश्च विशेषणस्याऽऽवश्यकत्वदिति सूक्ष्मदृशावधातव्यम् ।

ननु रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्ववज्ज्ञानाभावप्रतियोगितावच्छेदकरूपत्वस्य साध्यतावच्छेदकताघटकीभूतसमवायेनाभाववद्ज्ञानाद्यवृत्तित्वाद् रूपत्वस्येत्यव्याप्तिसम्भवेऽतिव्याप्तिदानं सन्दर्भविरुद्धमिति चेन्न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशादेव तादृशाभावस्य लक्षणाऽघटकत्वादव्याप्तिविरहेणाऽतिव्याप्तिरुक्ता । न च प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशे किं लाघवमिति वाच्यम् । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य सकृदेव निवेशात् । तन्निवेशश्च प्रतियोगितावच्छेकताविशिष्टप्रतियोगिताकाभाववदवृत्तित्वमर्थः । वै० स्वावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन ।

अथवा महानसीयवह्न्यनुयोगिकसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य पर्याप्तिर्निवेश्या, तथाच वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमादिहेतौ साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वाऽप्रसिद्ध्याऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववती याऽवच्छेदकता तन्निरूपकत्वं प्रतियोगितायां निवेश्यम्, तथाचोक्तस्थले घटाभावमादाय लक्षणसमन्वयः । नचैवमपि विषयितासम्बन्धावच्छिन्नगुणत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादाय रूपवान् पृथिवीत्वादित्यत्राऽव्याप्तिसम्भवेऽतिव्याप्तिदानं सन्दर्भविरुद्धमिति वाच्यम् । साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकसमानाधिकरणनिष्ठत्वोभयाभाववत्त्वमवच्छेदकतायां निवेश्यम्, तथाच गुणत्वनिष्ठावच्छेदकतायां रूपत्वसमानाधिकरणनिष्ठत्वाभावान्नाव्याप्तिः । अत्र साध्यतावच्छेदकसमानाधिकरणघटकाधिकरणघटकाधिकरणत्वं वृत्तित्वं च साध्यतावच्छेदकताघटकसम्बन्धेन । अन्य-

---

(१) वस्तुतः प्रतियोगिव्यधिकरणप्रतियोगितावच्छेदकाभावस्याधिकरणत्वं प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकवत्ताबुद्धिविरोधिताघटकसम्बन्धेन बोध्यम्, तेन न संयोगविशिष्टस्य साध्यतायां व्यभिचारिण्यातिव्याप्तिः, न वाऽयोगोलकभेदस्य तादात्म्येन साध्यतायां प्रमेयत्वादिहेतौ तद्भेदाभावस्य स्वरूपसम्बन्धेनाधिकरणत्वाप्रसिद्धावपि नातिव्याप्तिरिति ।

वह्नित्वविशिष्टसाध्य-
था येन केनापि सम्बन्धेन यदुच्यते, तदा वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्य-
तास्थलेऽव्याप्तिः । यदि प्रतियोगितावच्छेदकताघटकसम्बन्धेनाऽधिकरणत्वं साध्यतावच्छे-
दकताघटकसम्बन्धेन वृत्तित्वं, तदा गुण इति ज्ञानीयविषयितासम्बन्धेन गुणत्वनिष्ठावच्छेद-
कताकप्रतियोगिताकाभावमादायाऽव्याप्तिः, तादृशाभावप्रतियोगितावच्छेदकताघटकसम्बन्धेन
साध्यतावच्छेदकसामानाधिकरण्याभावादतः साध्यतावच्छेदकताघटकसम्बन्धेनैव तद्वा-
च्यम् । अत्र साध्यतावच्छेदकघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वं च साध्यतावच्छेद-
कताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वम्
रूपवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताव-
च्छेदकत्वसम्बन्धेन, नातो महानसीयवह्न्यनुयोगिकसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठाव-
च्छेदकताकप्रतियोगिताकाभावमादाय वह्निमान् धूमादित्यत्राऽव्याप्तिः । न च यत्र कालि-
केन वह्नित्वविशिष्टस्य संयोगेन साध्यता धूमस्य हेतुता तत्राव्याप्तिः, तत्र कालिकसम्बन्धा-
वच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य प्रतियोगिवैयधिकरण्यविरहात्, समवायेन
घटत्वविशिष्टाभावनिरूपितप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धाति-
रिक्तसम्बन्धावच्छिन्नत्व–साध्यतावच्छेदकताघटककालिकसम्बन्धेन साध्यतावच्छेदकसमाना-
धिकरणनिष्ठत्वोभयसत्त्वेनोभयाभावविरहादिति वाच्यम् । तत्र तत्पर्वतसंयुक्तविभुभिन्नाऽप्र-
मानकालीनतद्व्यक्त्यवच्छिन्नाभावस्यैव कालिकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य
लक्षणघटकत्वात्, तन्निरूपितप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धाति-
रिक्तसम्बन्धावच्छिन्नत्वविरहेणोभयाभावसत्त्वात् तदभावनिरूपितप्रतियोगितावच्छेदका-
भाववति तत्पर्वतसंयुक्तवह्नौ वह्नित्वस्य वृत्त्या पारिभाषिकावच्छेदकत्वानुपपत्त्या नाव्याप्तिरिति ।
यद्यपि कालिकसंयोगसमवायस्वरूपान्यतमसम्बन्धेन प्रमेयविशिष्टस्य संयोगेन साध्य-
तायां सद्धेतौ तादृशोभयाभाववदवच्छेदकताकप्रतियोगिताकस्य प्रतियोगिव्यधिकरण-
हेतुसमानाधिकरणाभावस्याऽप्रसिद्ध्याऽव्याप्त्यापत्तिः, तथापि साध्यतावच्छेदकताघटकसम्ब-
न्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकनिष्ठत्वोभयाभावस्याऽवच्छेदकतायां
निवेश्यत्वात्, तथाच तत्पर्वतसंयुक्ताऽसमानकालीनतद्व्यक्तिनिष्ठकालिकसम्बन्धावच्छिन्नाव-
च्छेदकतायां साध्यतावच्छेदकसमानाधिकरणनिष्ठत्वेऽपि साध्यतावच्छेदकव्यापकनिष्ठत्वाविरहे-
णोभयाभावसत्त्वात्तादृशतद्व्यक्त्यवच्छिन्नप्रतियोगिताकाभावमादायैवोक्तस्थलेऽव्याप्तिवारणस-
म्भवात् । एवं च रूपत्ववद्ज्ञानाभावमादाय न रूपवान् पृथिवीत्वादित्यादावव्याप्तिरेतदभिप्रा-
येणैवाऽतिव्याप्त्युपादानादिति निपुणा वदन्ति ।

वाचालास्तु साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना याऽवच्छेदकता तदवच्छिन्ननिरू-
पकताकाधिकरणत्वीयस्वरूपसम्बन्धेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्न "प्र-
तियोगितावच्छेदकताघटकसम्बन्धावच्छिन्न" निरूपकताकाधिकरणत्वाभाववति अवृत्तिर्यो
धर्मः स पारिभाषिकोऽवच्छेदकः, तथाच समवायसम्बन्धावच्छिन्नावच्छेदकत्वावच्छिन्ननि-
रूपकताकाधिकरणत्वीयस्वरूपसम्बन्धेन विषयितासम्बन्धावच्छिन्नावच्छेदकत्वावच्छिन्ननि-
रूपकताकाधिकरणत्वाभावस्य केवलान्वयितया नाऽव्याप्तिः, किन्त्वतिव्याप्तिरेवेति । वस्तु-

तस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति साध्यतावच्छेदकताघटकसम्बन्धेनाऽवृत्तयो ये धर्मास्तद्धर्मनिष्ठा या प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपकविशेष्यताभिन्ना साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यता तदवच्छेदकत्वं साध्यतावच्छेदके निवेश्यम्। तथाच विषयितासम्बन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावप्रतियोगितावच्छेदकाभाववदवृत्तिरूपत्वनिष्ठा या प्रतियोगितावच्छेदकताघटकीभूतविषयित्वसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यता समवायसम्बन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकताकविशेष्यता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाल्लक्षणसमन्वयः।

ननु धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्र अयोगोलकाऽवृत्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदको योऽयोगोलकवृत्तित्वाभावस्तदभाववति वह्नौ धूमत्वप्रकारकप्रमाविशेष्यत्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वेनाऽतिव्याप्त्यसम्भवात्कथमतिव्याप्तिरिति चेन्न। वह्नित्वप्रकारकप्रमाविशेष्यवान् धूमादित्यादौ पर्वतान्यत्ववैशिष्ट्यावच्छिन्नाभावमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकातिरिक्ताऽभावानवच्छिन्नत्वं प्रतियोगितायां निवेश्यम्, तथाचाऽयोगोलकावृत्त्यभावस्य लक्षणाऽघटकत्वादिति केचित्। तदसत्। सद्धेताव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वावच्छिन्ननिरूपकताकाधिकरणत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकावच्छेदकत्वावच्छिन्ननिरूपकताकाधिकरणत्वाभावः तद्वन्निरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वरूपस्य पारिभाषिकावच्छेदकत्वस्याऽवश्यं निवेशनीयतया स्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वावच्छिन्ननिरूपकताकाधिकरणत्वीयस्वरूपसम्बन्धेन सामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकत्वावच्छिन्ननिरूपकताकाधिकरणत्वाभावस्य केवलान्वयितया नाऽव्याप्तिः। नच तत्पर्वतान्यत्वाधिकरणनिरूपितवृत्तित्वनिष्ठा या स्वरूपसम्बन्धावच्छिन्नाऽवच्छेदकता तादृशावच्छेदकताकप्रतियोगिताकाभावस्य तत्पर्वते हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकाभाववति वह्निभिन्ने वह्नित्वस्याऽवृत्त्या पारिभाषिकावच्छेदकत्वप्रसङ्ग इति वाच्यम्। तत्पर्वतान्यत्वाधिकरणनिरूपितवृत्तित्वस्य वह्निभेदेन भिन्नत्वात्, तथाच तत्पर्वतनिरूपितवृत्तित्वाभावापेक्षयातत्पर्वतान्यत्वाधिकरणनिरूपितवृत्तित्वस्याऽनेकस्यावच्छेदकत्वे तस्य गुरुधर्मावच्छिन्नप्रतियोगिताकत्वेनाऽप्रसिद्धत्वात् साध्यतावच्छेदकातिरिक्ताभावाऽनवच्छिन्नप्रतियोगिताकत्वानिवेशनं व्यर्थमितिचेन्न। तादात्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां द्रव्यत्वादिहेतावतिव्याप्तिः, तत्र तादात्म्यसम्बन्धावच्छिन्नधूमनिष्ठावच्छेदकतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वस्याऽनेकधूमव्यक्तौ कल्पनापेक्षया समवायेन धूमत्वस्यैवाऽवच्छेदकत्वे लाघवात्, तथाच घटाभावमादायाऽतिव्याप्तिः। न चाऽयोगोलकाऽवृत्त्यवच्छिन्नाभावमादाय नातिव्याप्तिरिति वाच्यम्। तस्य गुरुधर्मावच्छिन्नप्रतियोगिताकत्वेन लक्षणाऽघटकत्वात्, उक्ताभावप्रतियोगितावच्छेदकत्वस्याऽयोगोलकावृत्तौ

कल्पनेऽयोगोलकाऽवृत्तित्वस्याप्यवच्छेदकतावच्छेदकत्वं कल्पनीयम्, तदपेक्षया लाघवादुक्ताभावप्रतियोगितावच्छेदकत्वमयोगोलकवृत्तित्वाभावस्यैव कल्पनीयमित्यतिव्याप्तिः । अथ संयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्नावच्छेदकताकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय नातिव्याप्तिः, उक्ताभावप्रतियोगितावच्छेदकत्वं न समवायेन धूमत्वे कल्पयितुं शक्यते धूमवत्पर्वतवह्देशे धूमो नास्तीति प्रत्ययादतिप्रसंगाद्यनावारकत्वविरहात् । न चात्र विषयितया रूपत्ववज्ज्ञानं नास्तीति प्रतीतिसाक्षिकाभावमादायाऽव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वविशेषणसत्त्वान्नोक्ताभावस्य लक्षणघटकत्वमिति वाच्यम् । तत्राऽव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं न निवेश्यम् किन्तु प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतायामेव तद्विशेषणम्, इत्युक्ताभावमादायाऽतिव्याप्तिवारणसम्भवादिति चेत् । वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य साध्यतायामव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावस्य निवेश्यतया कालिकसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकत्वेऽप्युक्तोभयाभावरूपसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वसत्त्वात्तन्निरूपकनिरूपकताकाधिकरणत्वस्य हेत्वधिकरणे सत्त्वाद्वन्हिमान् धूमादित्यादावव्याप्तिः । न च साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववदवच्छेदकताविशिष्टप्रतियोगिताविशिष्टवृत्तित्वाभाववान्नेतिप्रतीतिसाक्षिकभेदस्साध्यतावच्छेदके निवेश्यः । प्रथमवै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वनिरूपकनिरूपकताकाधिकरणतावाच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वावच्छिन्नत्वस्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन । द्वितीयवै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वनिरूपकाभाववन्निरूपितत्वोभयसम्बन्धेन । तथाच वह्नित्वप्रतियोगिकसमवायस्य साध्यतावच्छेदकतावच्छेदकसंसर्गतास्थले घटत्वनिष्ठसमवायसम्बन्धावच्छिन्नावच्छेदकता तद्विशिष्टा या प्रतियोगिता घटत्वनिष्ठसमवायसम्बन्धावच्छिन्ना प्रतियोगिता तादृशप्रतियोगिताविशिष्टवृत्तित्वाभाववाच्छिन्नत्वस्य साध्यतावच्छेदके सत्त्वाल्लक्षणसमन्वयः । वह्निमान् धूमादित्यादौ साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववदवच्छेदकत्वान्तर्गतकालिकसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकता न धर्तुं शक्यते तद्विशिष्टप्रतियोगित्वाप्रसिद्धेः, तन्निरूपकनिरूपकताकाधिकरणतावाच्छिन्नत्वस्य हेत्वधिकरणेऽसत्त्वान्नाऽव्याप्तिः। अत्र वैशिष्ट्यघटकस्वसामानाधिकरण्यानुक्तौ समवायसम्बन्धावच्छिन्ना या घटत्वनिष्ठावच्छेदकता तद्विशिष्टप्रतियोगिता वह्नित्वनिष्ठसमवायसम्बन्धावच्छिन्ना प्रतियोगिता, तथाहि स्वनिरूपकनिरूपकताकाधिकरणतावाच्छिन्नहेत्वधिकरणवृत्तिर्यो वह्न्यभावस्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नत्वात्तादृशप्रतियोगिताविशिष्टवृत्तित्वाभाववाच्छिन्नत्वस्य सत्त्वादव्याप्तिरतस्तदुक्तमिति वाच्यम् । घटानुयोगिककालिकसम्बन्धेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां भूतलत्वादिहेतावव्याप्तिः, तत्र साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभाववती याऽवच्छेदकता सा वह्न्यनुयोगिककालिकसम्बन्धावच्छिन्ना घटत्वनिष्ठावच्छेदकता तद्विशिष्टा या प्रतियोगिता सा वह्न्यनुयो-

गिंककालिकसम्बन्धावच्छिन्ना घटत्वनिष्ठप्रतियोगिता तद्विशिष्टवृत्तित्वाभावस्य साध्यतावच्छेदके सत्त्वात्, तथाहि—तद्वदनुयोगिककालिकसम्बन्धावच्छिन्नघटत्वनिष्ठप्रतियोगिताकाभाववति तेन सम्बन्धेन साध्यतावच्छेदकस्याऽसत्त्वादतः प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतायां प्रतियोगितावच्छेदकाभावीयप्रतियोगितायां अवृत्तित्वघटकवृत्तित्वे च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमेव निवेशनीयम् । वह्नित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टसाध्यकस्थलेऽव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यघटकनिरूपकतावच्छेदकतायां परिभाषिकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमवश्यं निवेशनीयम् , तथाच कालिकसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतामादाय पूर्वोक्तदोषतादवस्थ्यमिति चेन्न। तत्पर्वतसंयुक्तासमानकालीनघटव्यक्त्यवच्छिन्नाभावमादाय नाऽव्याप्तिः । न च शब्दवान् गगनत्वादित्यत्राऽव्याप्तिः, घटाभावमादाय लक्षणसमन्वयाऽभावादिति वाच्यम् । महाप्रलयपूर्वोत्पन्नक्रियावच्छिन्नाभावमादाय लक्षणसमन्वयात्, तथाहि—गगने तादृशक्रियावच्छिन्नस्य कस्याप्यसत्त्वात्,तथाच नित्यज्ञानानुयोगिकविषयितासम्बन्धेन घटत्वविशिष्टस्य समवायेन साध्यतायां ईश्वरत्वादिहेतौ साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्ना या साध्यतावच्छेदकघटत्वादिनिष्ठा नित्यज्ञानानुयोगिकविषयितासम्बन्धावच्छिन्नावच्छेदकता तन्निरूपितनिरूपकताकाधिकरणत्वस्य हेत्वधिकरणे सत्त्वाद् अभावमात्रस्य लक्षणाघटकत्वादव्याप्तिः । न च भवतामप्यव्याप्तितादवस्थ्यम्, तथाहि हेतुसामानाधिकरणाभावप्रतियोगितावच्छेदकीभूतघटत्वादेः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति नित्यज्ञानभिन्ने साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकस्यावृत्तित्वादिति वाच्यम् । उक्तप्रतियोगितावच्छेदकाभाववति साध्यतावच्छेदकताघटकसम्बन्धेनाऽवृत्तिर्यो धर्मस्तद्धर्मनिष्ठा या प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपकविशेष्यताभिन्ना या साध्यतावेच्छदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यता तदवच्छेदकत्वं साध्यतावच्छेदके निवेश्यमिति नाऽव्याप्तिः । संयोगेन धूमवान्नास्तीत्यभावप्रतियोगितावच्छेदकाभाववद्वृत्तिधर्मनिष्ठा या प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकता सा संयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्नावच्छेदकता तन्निरूपकविशेष्यताभिन्नत्वस्य साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यतायां सत्त्वादतिव्याप्तिः संगतेत्याहुः ।

केचित्तु तादात्म्येन घटभेदविशिष्टस्य स्वरूपेण साध्यतायां द्रव्यत्वादिहेतावतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं घटभेदापेक्षया लघोर्घटभेदनिष्ठतद्व्यक्तित्वस्यैव स्वीकरणीयम्, तदभावस्य च गुरुधर्मावच्छिन्नप्रतियोगिताकत्वेन लक्षणाघटकत्वाद्, भवति च घटभेदाभावस्तत्प्रतियोगितावच्छेदकीभूतघटभेदत्वादेः तादात्म्येनाऽभाववति घटभेदे साध्यतावच्छेदकस्यसत्वात् ।घटभेदनिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकताकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याऽप्रसिद्धत्वात् स्वरूपेण घटभेदविशिष्टवाच्यत्वादेः स्वरूपेण सर्वत्र सत्त्वात् । घटभेदानुयोगिकस्वरूपेण घटभेदविशिष्टाभावप्रतियोगितावच्छेदकत्वं पूर्ववल्लाघवाद् घटाभेदस्यैवेत्याहुः ।

परे तु धूमत्वप्रकारकप्रमाविशेष्यत्वप्रतियोगिकस्वरूपेण यत्र धूमत्वप्रकारकप्रमाविशे-

न च तथापि समवायेन प्रमेयस्य साध्यतायां भावत्वादिहेतावतिव्याप्तिः, प्रमेयत्वरूपस्याऽवच्छेदकस्याऽभावाऽप्रसिद्ध्या प्रमेयाभावस्य लक्षणाऽघटकत्वादिति वाच्यम्। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्माऽन्यूनवृत्ति तत्त्वस्यैव विवक्षितत्वात्। अत एव समवायेन सत्ताश्रयस्य साध्यत्वेऽपि तादृशावच्छेदकीभूतस्य सत्त्वस्याभाववति सामान्यादौ साध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धेन वृत्तेरप्रसिद्धावपि भावत्वादिहेतौ नातिव्याप्तिः ।

---

ध्यत्वविशिष्टस्य संयोगेन साध्यता तत्राऽयोगोलकाऽवृत्तित्वावच्छिन्नाभावप्रतियोगिनावच्छेदकस्य साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात् । नचैवमपि विशिष्टशुद्धयोरैक्येन शुद्धस्वरूपेणाऽयोगोलकाऽवृत्तित्वावच्छिन्नाभावमादायैवाऽतिव्याप्तिः शक्यते वारयितुमिति वाच्यम् । द्रव्यनुयोगिककालिकेन वन्हित्वविशिष्टस्य साध्यतायां धूमहेतावव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बन्धस्य न्यूनवारकपर्याप्तिनिवेशस्याऽवश्यकत्वादित्याहुः ।

अन्ये तु भावाभावीयविशेषणतासाधारणविशेषणतात्वं नास्तीति भावीयविशेषणतासंबन्धेन [illegible]ध्यत्वविशिष्टस्य साध्यतास्थलेऽतिव्याप्तौ तात्पर्यमित्याहुः ।

यद्धर्माऽन्यूनवृत्तीति : यद्धर्मव्यापकमित्यर्थः । अत्र व्याप्यत्वं साध्यतावच्छेदकताघटकसम्बन्धेन, अन्यथा धूमवान् वह्नेरित्यादावतिव्याप्तिः । व्यापकता च प्रतियोगितावच्छेदकताघटकसम्बन्धेन, अन्यथा वह्निमान् धूमादित्यादावव्याप्तिः । अथात्र वन्हिप्रतियोगिकसमवायेन वन्हित्वस्य साध्यतावच्छेदकतास्थलेऽव्याप्तिः, तादृशावच्छेदकीभूतघटत्वादेः कस्याप्यव्यापकत्वात् । व्याप्यतावच्छेदकवह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टाभावप्रतियोगित्वाद् घटत्वस्य यत्पदेन वह्नित्वस्योपादातुमशक्यत्वात् घटत्वादेस्तत्सम्बन्धेनाऽधिकरणाऽप्रसिद्ध्या तस्यापि यत्पदेनोपादातुमशक्यत्वादिति चेदत्र केचिद् । व्याप्यतापि प्रतियोगितावच्छेदकताघटकसम्बन्धेन वाच्या, तथाच समवायेन घटत्वव्यापकत्वं स्वस्मिन्नेव सुलभमिति नाऽव्याप्तिः । न च तादात्म्येन धूमविशिष्टवान् वह्नेरित्यत्राऽतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकं लाघवाद् धूमत्वं तस्य समवायेन धूमाऽव्यापकत्वात् समवायेन धूमवतिपरमाणौ समवायेन धूमत्वस्याऽसत्त्वात् , द्रव्यत्वव्याप्यव्याप्यजातेः परमाण्ववृत्तित्वनियमादिति वाच्यम् । तादात्म्येन तत्तद्धूमविशिष्टाभावप्रतियोगितावच्छेदिका तत्तद्धूमव्यक्तिरेव, तथाच तादात्म्येन तत्तद्धूमस्य तत्तद्धूमव्यापकत्वात् । न चैवरीत्या तादात्म्येन वह्निविशिष्टस्य साध्यतायामव्याप्तिः, तत्र वन्हित्वस्यैव साध्यतावच्छेदकत्वादित्याहुः । तच्चिन्त्यम् । तद्व्यक्त्यनुयोगिकस्वरूपसम्बन्धेन प्रमेयत्वविशिष्टस्य साध्यतायामतिव्याप्तिः, तेन सम्बन्धेन प्रमेयत्वविशिष्टाभावप्रतियोगितावच्छेदकत्वं लाघवेन स्वरूपेण तद्व्यक्तित्वस्यैवेति । तथाच स्वरूपसम्बन्धेन तद्व्यक्तित्वस्य प्रमेयत्वाऽव्यापकत्वात् । न च प्रतियोगितावच्छेदकताघटकसाध्यतावच्छेदकताघटकान्यतरसम्बन्धेन व्याप्यता वाच्या, तथाच तद्व्यक्त्यनुयोगिकस्वरूपसम्बन्धेन तत्तद्व्यक्तित्वस्य प्रमेयत्वव्यापकत्वान्नोक्ताऽव्याप्ति-

इदन्तु चिन्त्यते । तादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तिभिन्नत्वापेक्षया नञर्थद्वयाऽप्रवेशेन लाघवात्तादृशावच्छेदकं यद्यत्तत्तत्प्रत्येकातिरिक्तवृत्तित्वं साध्यतावच्छेदकस्य विशेषणं वक्तुमुचितमिति ।

रिति वाच्यम् । रूपवान् पृथिवीत्वादित्यादौ नित्यज्ञानानुयोगिकविषयितया पटत्वविशिष्टाभावमादायाऽव्याप्तेः, प्रतियोगितावच्छेदकताघटकतज्ज्ञानानुयोगिकविषयितया प्रतियोगितावच्छेदकस्य साध्यतावच्छेदकव्यापकत्वादिति । वस्तुतो यद्यत्सम्बन्धेन यद्धर्मव्यापकं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मावच्छिन्नविशेष्यताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नविशेष्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य व्याप्तित्वात्, तथा चोक्तस्थले नाऽव्याप्तिरिति ध्येयम् ।

अथात्र संयोगेनाऽभाववतः साध्यतायामतिव्याप्तिः, तथाहि संयोगेन तादृशसाध्याभावप्रतियोगितावच्छेदकं लाघवाद् द्रव्यत्वमेव, तथाच प्रतियोगितावच्छेदकस्य द्रव्यत्वस्य साध्यतावच्छेदकीभूताऽभावाऽव्यापकत्वादिति पारिभाषिकावच्छेदकीभूतद्रव्यत्वप्रकारकप्रमाविशेष्यत्वादिभिन्नत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न । भावाऽभावसाधारणाऽभावत्वमखण्डोपाधिः, तस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वात्तस्य च साध्यतावच्छेदकीभूताऽभावव्यापकत्वात् । अथवा न्यूनवृत्तिधर्मे प्रतियोगितावच्छेदकत्वास्वीकारादिति ध्येयम् ।

ननु प्रतियोगितार्धार्मकोभयाभावघटितकल्पे एवंचेत्यादिना निष्कर्षस्य वक्ष्यमाणतयाऽनवच्छेदकत्वघटितलक्षणे एवेदानीं पारिभाषिकावच्छेदकनिर्वचनमिति प्रतियोगितावच्छेदकातिरिक्तवृत्ति यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्येव कुतो नोक्तमित्याह इदन्तु चिन्त्यते इति । अत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतं घटत्वातिरिक्तवृत्तित्वस्य धूमत्वे सत्त्वादतिव्याप्तिरत उक्तम् यद्यदिति । नन्वत्र प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं नास्तीतिप्रतीतिसाक्षिको यः प्रतियोगिव्यधिकरण्यनिष्ठावच्छेदकताभिन्नहेतुसामानाधिकरण्यनिष्ठावच्छेदकताभिन्नाऽभावत्वनिष्ठावच्छेदकताभिन्नाऽवच्छेदकत्वानिरूपिका याऽभावनिष्ठा निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता तादृशावच्छेदकताभिन्ना प्रतियोगितात्वनिष्ठावच्छेदकताभिन्नाऽवच्छेदकत्वाऽनिरूपिका या प्रतियोगितानिष्ठनिरूपितत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तादृशावच्छेदकताभिन्नाऽवच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिका याऽवच्छेदकत्वनिष्ठप्रतियोगिता तादृशप्रतियोगिताकाभाववद्वृत्तित्वं साध्यतावच्छेदके निवेश्यम् अलं यद्यदिति निवेशेनेति चेन्न । स्ववृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन यत्र पटस्य साध्यता घटत्वस्य हेतुता तत्र घटाभावस्यैव लक्षणघट(१)कत्वात्, तथा च तादृशप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वापेक्षया लाघवाद् घटत्वनिष्ठतद्व्यक्तित्वस्यैव प्रतियोगितावच्छेदकत्वामत्युक्ताभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतया लक्षणाऽघटकत्वादव्याप्तिरतः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रति-

(१) अत्र साध्यतावच्छेदकसम्बन्धाऽवच्छिन्नाधिकरणतानतियोगिकस्वरूपसम्बन्धेन प्रतियोगिव्यधिकरणत्वाभाववद्वृत्त्यधिकरणवृत्तित्वं घटाभावप्रतियोगिव्यधिकरणम्

योगितावच्छेदकत्वसमानाधिकरणभेयावृत्तिधर्मपर्याप्तावच्छेदकताकप्रतियोगिताकाभावकूटवद्-वृत्तित्वमेव साध्यतावच्छेदके निवेश्यम् । एतल्लाभार्थमेव यद्यदिति–कुत्रचिद्यावदिति वा पाठः।

अत्रेयमाशङ्का । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टान्यत्वं साध्यतावच्छेदकं विवक्षणीयम् । वै० स्वनिष्ठोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धेन, वृत्तित्वं च स्वाश्रयभेदवत्त्वसम्बन्धेन । वैशिष्ट्यमेव वा तादृशप्रतियोगिताकाभाववद्वृत्तित्वसंबन्धेन । एवं तादृशावच्छेदकं यद्धर्मव्यापकमिति कल्पस्यापि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकवृत्तिभिन्नत्वं साध्यतावच्छेदके वाच्यम् । वृत्तित्वं व्यापकतासम्बन्धेन। तथाच नञ्द्वयकल्पेएव लाघवम्, नञ्घटितकल्पे कूटवत्त्वघटितत्वेन गौरवमिति चेन्न । वह्निमान् प्रमेयधूमादित्यादौ तादृशभेदाऽप्रसिद्ध्याऽव्याप्त्यापत्तेः, अतो हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्य, एवं व्यापकताघटकसम्बन्धेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकवृत्तित्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकताकप्रतियोगिताकभेदकूटवत्त्वस्याऽवश्यं विवक्षणीयतया लाघवासम्भवादिति ध्येयम् ।

अथात्र समवायेन प्रमेयसाध्यकभावत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतप्रमेयत्वस्याऽभावाऽप्रसिद्ध्या गृहीतुमशक्यत्वाद् घटत्वादेश्च तादृशस्याऽभाववति प्रमेयत्वस्य सत्त्वादतिव्याप्तिरिति चेन्न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्व्यापकं तत्वस्यैव साध्यतावच्छेदके वक्तव्यत्वात् ।

केचित्तु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वव्यापकत्वं साध्यतावच्छेदके निवेश्यम्, व्यापकता च स्वाश्रयवृत्त्यभावप्रतियोगित्वसम्बन्धेन, तेन प्रमेयवान् वाच्यत्वादित्यादौ तादात्म्येन साध्यतायां चालनीन्यायेन सर्वेषां प्रमेयाणामेव भेदो हेतुसमानाधिकरणस्तत्प्रतियोगितावच्छेदकत्वसमानाधिकरणभेयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वस्याऽप्रसिद्धावपि नाव्याप्तिः, तत्प्रमेये व्यापकत्वसत्त्वाल्लक्षणसमन्वयः । न च धूमवान् वह्नेरित्यादौ धूमाभावप्रतियोगितावच्छेदकधूमत्वे धूमत्वाश्रयवृत्तियों धूमत्वघटोभयाभावस्तत्प्रतियोगित्वसत्त्वादतिव्याप्तिरिति वाच्यम् । स्वाश्रयवृत्त्यभावे वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वं निवेशनीयम्, तथाच नोक्तदोषः। नन्वेवमपि सत्तावान् जातेरित्यादौ हेतुसमानाधिकरणो यो विशिष्टसत्तानिष्ठतादात्म्यसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्तादृशाभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्त्वादेः सत्त्वाश्रयवृत्तियों वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावस्तत्प्रतियोगित्वविरहादव्याप्तिरिति वाच्यम् । वैशिष्ट्यानवच्छिन्नप्रतियोगिताकसत्ताभावमादाय नाव्याप्तिः । अथवा प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नविशिष्टसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । वै० स्वावच्छिन्नप्रतियोगिताकाभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वसम्बन्धेन, स्वावच्छिन्नप्रतियोगिता च स्वप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, निरूपकता च स्वप्रतियोगिकपर्याप्त्य-

नुयोगितावच्छेदकत्वसम्बन्धेन, तथाच प्रमेयवान् वाच्यत्वादित्यादौ हेतुमन्निष्ठतत्प्रमेयभेदप्रतियोगितावच्छेदकत्वावच्छिन्नानुयोगिताकपर्याप्तिकक्रूटत्वावच्छिन्नाविशिष्टत्वस्य प्रमेयत्वे सत्त्वाल्लक्षणसमन्वयः, तथाहि—स्वावच्छिन्नप्रतियोगिताकाभाववति तत्तत्प्रमेये या प्रमेयत्वावच्छिन्नाधिकरणता तन्निरूपितनिरूपकतावच्छेदकत्वसत्त्वात् । अथ नञ्द्वयप्रवेशे कथमत्राऽव्याप्तिवारणमिति चेन्न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टो यो धर्मः स एव पारिभाषिकावच्छेदकः । वै० स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरंपरीयावच्छेदकतावत्त्वसम्बन्धेन । अभावश्च यद्धर्मसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धः, तथाच हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्याऽनेकस्य प्रत्येकधर्मविशिष्टत्वविरहेण न प्रमेयत्वादौ पारिभाषिकावच्छेदकत्वमिति नाव्याप्तिरित्याहुः ।

ननु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत्तार्णतार्णोभयत्वं प्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन तदभाववति घटादौ वह्नित्वस्याऽवृत्तेर्वह्निमान् धूमादित्यादावव्याप्तिरिति चेन्न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके स्वसमानवृत्तिकत्वं निवेश्यम् । एवं साध्यतावच्छेदकम् । उभयत्वादिकन्तु न वन्हित्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकमिति वन्हिमान् धूमादित्यादौ नाव्याप्तिः, तत्तद्व्यक्त्यभावमादाय लक्षणसमन्वयः । ननु तद्रूपवान् तद्रसादित्यादावव्याप्तिः, तद्रूपाभावस्य लक्षणाऽघटकत्वाद् घटाभावप्रतियोगितावच्छेदकघटत्वादेस्तद्रूपत्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वविरहात् । नच पूर्वक्षणवृत्तित्वविशिष्टतद्रूपत्वमेव तादृशावच्छेदकत्वेन प्रसिद्धमिति वाच्यम् । तदवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याभावात्, कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तिश्च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वस्य कम्बुग्रीवादिमत्त्वपर्याप्त्यवच्छेदकतत्तत्कपालत्वावच्छिन्नपर्याप्तिप्रतियोगिताकत्वविरहात्, भवति च कपालाद्यभाव एव, तत्प्रतियोगितावच्छेदकस्य कंबुग्रीवादिमत्त्वसमानवृत्तिकस्य कपालत्वस्याऽभाववति घटे कंबुग्रीवादिमत्त्वस्य वृत्तित्वादिति वाच्यम् । स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतो यो धर्मस्तदवच्छिन्नावच्छेदकताकानुयोगिताकपर्याप्तिप्रतियोगित्वमेव स्वसमानवृत्तिकत्वम्, तथा च वह्निमान् धूमादित्यादौ घटाभावप्रतियोगितावच्छेदकस्य घटत्वस्य वह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतावच्छेदकं यदेकत्वत्वं तदवच्छिन्नघटत्वनिष्ठैकत्वनिष्ठावच्छेदकताकानुयोगिताकपर्याप्तिप्रतियोगित्वसत्त्वान्नाव्याप्तिः । एवं तद्रूपवान् तद्रसाद् कंबुग्रीवादिमद्वान् द्रव्यत्वादित्यादौ नाव्याप्त्यतिव्याप्तीति । अथैवमपि वह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वाभाववति घटत्वादिनिष्ठतत्तदेकत्वे एकत्वत्वस्य वृत्तितया न तदवच्छेदकतावच्छेदकत्वमेकत्वत्वस्याऽतिप्रसक्तत्वात्, तथाच वह्निमान् धूमादित्यादावव्याप्तिरिति चेन्न । स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकवृत्तिसंख्याविभाजकधर्मवत्संख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वमेव स्वसमानवृत्तिकत्वम्, तथाच वह्नित्वसमानवृत्तिकत्वस्य पटत्वादावपि सत्त्वेनाऽव्याप्तिर्न सम्भवति । तत्तद्वह्निद्वयवान् धूमादित्यादौ वह्निघटोभयाभावमादायाऽव्याप्तेः, तादृशप्रतियोगितावच्छेदकवह्निघटोभयत्वे साध्यतावच्छेदकसमानवृत्तिकत्वसत्त्वादिति वाच्यम् । अत्रायं सिद्धान्तः । नञ्द्वयघटित[illegible] समवायसम्बन्धावच्छिन्नाधिकरणत्वसम्बन्धेन सत्ताद्रव्यत्वो-

भयत्वविशिष्टस्य समवायेन साध्यतायां पृथिवीत्वादावतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकं लाघवाद् द्रव्यत्वमेव तस्य च साध्यतावच्छेदकपर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नाऽपर्याप्तिकत्वात्, अन्यस्यापि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकतापर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकत्वाभावादतस्तद्वारणाय स्वपर्याप्त्यनुयोगितानवच्छेदकीभूतो यो धर्मः तदनवच्छिन्नपर्याप्तिकत्वं स्वसमानवृत्तित्वम्। तथाच द्रव्यत्वपृथिवीत्वोभयत्वे साध्यवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वविरहेण स्वसमानवृत्तिकत्वसत्त्वात्साध्याभावमादायैवोक्तव्यभिचारिण्यतिव्याप्तिवारणप्रम्भवात्।

अथैवं धूमवह्न्युभयानुयोगिकसमवायेन वह्निधूमघटगतत्रित्वविशिष्टस्य साध्यतायां वह्निहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं लाघवतो वह्निधूमोभयत्वं तच्च न तादृशत्रित्वसमानवृत्तिकं किन्तु त्रित्वमित्यतिव्याप्तिः। न चाऽयोगोलकाऽवृत्तित्वस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकसमानवृत्तिकस्य सौलभ्यान्नातिव्याप्तिरिति वाच्यम्। एवमप्ययोगोलकाऽवृत्तित्वाभाववति वह्नौ साध्यतावच्छेदकस्य पर्याप्तिसम्बन्धेन सत्त्वादेवाऽतिव्याप्तितादवस्थ्यादिति चेन्न। समवायेन प्रमेयसाध्यकभावत्वहेतावतिव्याप्तिवारणाय हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदव्यापकं तत्त्वमेव साध्यतावच्छेदके विवक्षणीयम्। तच्च व्यापकत्वं स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वाच्यम्, तथाचोक्तस्थले तादृशायोगोलकावृत्तित्वस्य निरुक्तसम्बन्धेन साध्यतावच्छेदकव्यापकत्वान्नातिव्याप्तिः। तादृशत्रित्वाधिकरणे वह्नावपि त्रित्वावच्छेदेनाऽयोगोलकाऽवृत्तित्वस्यैव सत्त्वादिति ध्येयम्।

केचित्तु स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिकाभिन्नत्वस्वसामानाधिकरण्योभयाभाववत्त्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके स्वसमानवृत्तिकत्वम्, स्वं साध्यतावच्छेदकम्, स्वसामानाधिकरण्यघटकाऽधिकरणत्वं वृत्तित्वं च पर्याप्तिसम्बन्धेन बोध्यम्, तथाच तार्णातार्णोभयत्वे उभयाभावात्मकवह्नित्वसमानवृत्तिकत्वविरहेणोक्तोभयाभावमादाय न वह्निमान् धूमादित्यावव्याप्तिरिति प्राहुः।

वाचालास्तु स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नपर्याप्तिप्रतियोगित्वस्वसामानाधिकरण्योभयाभाववत्त्वं स्वसमानवृत्तिकत्वम्, स्वं साध्यतावच्छेदकम्, तथाच वह्निमान् धूमादित्यादौ तार्णातार्णोभयाभावमादाय नाऽव्याप्तिः। अथ स्वसामानाधिकरण्यघटकाधिकरणत्वं साध्यतावच्छेदकताघटकसम्बन्धेन, वृत्तित्वं प्रतियोगितावच्छेदकताघटकसम्बन्धेन यद्युच्यते, तदा कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकीभूतस्य घटत्वादेरुक्तसम्बन्धेन साध्यतावच्छेदकसमानाधिकरणत्वकम्बुग्रीवादिमत्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वोभयस्यैव सत्त्वेनोभयाभाववत्त्वाभावादभावान्तरस्यैव लक्षणघटकत्वात्। प्रतियोगितावच्छेदकताघटकसम्बन्धेनाऽधिकरणत्वस्य साध्यतावच्छेदकताघटकसम्बन्धेन वृत्तित्वस्योक्तौ चोक्तस्थले वारणेऽपि धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तिः स्यात्, तत्र साध्याभावप्रतियोगितावच्छेदकधूमत्वे साध्यतावच्छेदकसमानवृत्तिकत्वविरहात् प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन साध्यतावच्छेदकाधिकरणाऽप्रसिद्धेः, तद्वक्त्यभावमादायैवाऽति-

व्याप्तिर्बोध्या । साध्यतावच्छेदकताघटकसम्बन्धेन स्वाधिकरणे तेनैव सम्बन्धेन वृत्तित्वोक्तौ उक्तव्यभिचरिण्यतिव्याप्तिवारणसम्भवेऽपि वह्नित्वप्रकारकप्रमाविशेष्यवान् धूमादित्यादावव्याप्त्यापत्तेः । तत्र तार्णातार्णगतद्वित्वावच्छिन्नाभावप्रतियोगितावच्छेदकद्वित्वे साध्यतावच्छेदकताघटकस्वरूपसम्बन्धेन साध्यतावच्छेदकसामानाधिकरण्यविरहेण तत्प्रयुक्तोभयाभावसत्त्वात् तादृशाभावस्यैव लक्षणघटकत्वादिति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके तादृशस्वसमानवृत्तिकत्वं न निवेश्यमिति चेन्न । प्रतियोगितावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकाधिकरणे तेनैव सम्बन्धेन वृत्तित्वम्, तथाच तार्णातार्णोभयाभावप्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन साध्यतावच्छेदकाधिकरणे वह्नौ पर्याप्तिसम्बन्धेन तादृशोभयत्वस्य वृत्तित्वान्नातिव्याप्तिः । न च धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यत्र धूमाभावप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन साध्यतावच्छेदकाधिकरणाऽप्रसिद्धेः अन्याभावमादायाऽतिव्याप्तिरिति वाच्यम् । धूमगताऽन्यतमत्वावच्छिन्नाभावमादायाऽतिव्याप्तिविरहात् । नचैवमपि यत्र स्ववृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन वाच्यत्वस्य साध्यता घटत्वस्य हेतुता तत्र हेतुमन्निष्ठघटाभावस्यैव प्रतियोगिवैयधिकरण्यं तादृशाभावप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन साध्यतावच्छेदकाधिकरणाऽप्रसिद्धेरप्रसिद्धिनिबन्धनाऽव्याप्तिरिति वाच्यम् । तत्र घटनिष्ठान्यतमत्वावच्छिन्नाभावमादायैव लक्षणसमन्वयः ।

अथ तादात्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां द्रव्यत्वहेतावतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं समवायेन धूमत्वस्यैव, समवायसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावप्रतियोगितावच्छेदके धूमत्वे प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन साध्यतावच्छेदकाधिकरणे धूमावयवात्मकधूमे समवायेन वृत्तित्वधूमप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वोभयोः सत्त्वेनाऽन्याभावमादायाऽतिव्याप्तिः । न च संयोगेन धूमविशिष्टस्य संयोगेनाऽभावमादाय नातिव्याप्तिः, तथाहि—तादृशाभावप्रतियोगितावच्छेदकताघटकसंयोगेन साध्यतावच्छेदकसामानाधिकरण्यसत्त्वेऽपि साध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वाभावसत्त्वेनोभयाभावसत्त्वादिति वाच्यम् । तादृशाभावप्रतियोगितावच्छेदकाभाववति धूमाऽसंयुक्तधूमे साध्यतावच्छेदकस्य सत्त्वात् प्रतियोगितावच्छेदकताघटकस्वरूपसम्बन्धेन साध्यतावच्छेदकीभूतधूमाधिकरणाऽप्रसिद्धेरिति चेन्न । साध्यतावच्छेदकाभाववत्त्वमेव स्वसमानवृत्तिकत्वम् हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके निवेश्यम् । अभावश्च स्वसामानाधिकरण्यस्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः, सामानाधिकरण्यघटकाधिकरणत्वं वृत्तित्वं च प्रतियोगितावच्छेदकताघटकसम्बन्धेन, तथाच धूमगतान्यतमत्वावच्छिन्नाभावमादायैव नातिव्याप्तिरित्याहुः ।

केचित्तु प्रतियोगितावच्छेदकाभावः स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकः । तादृशाभाववद्वृत्तित्वं च स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तथा च स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धावच्छिन्न-

प्रतियोगिताकतार्णातार्णोभयत्वाभाववति तद्व्यक्तित्वे स्वप्रतियोगिकपर्याप्त्यनुयोगिताव-च्छेदकत्वसम्बन्धेन वह्नित्वस्य वृत्तित्वाल्लक्षणसमन्वयः । न च कंबुग्रीवादिमत्त्वा-न् द्रव्यत्वादित्यादौ स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वाभाववति-तत्कपालत्वे तादृशसम्बन्धेन साध्यतावच्छेदकस्य सत्त्वादतिव्याप्तिरिति वाच्यम् । कपालाभावमादायाऽतिव्याप्तिविरहादिति । न च कंबुग्रीवादिविशिष्टस्य यत्र तादा-त्म्येन साध्यता कपालत्वस्य हेतुता तत्र कपालभेदस्य हेतुसामानाधिकरण्यविरहात् संयोगसम्बन्धावच्छिन्नप्रतियोगिताककपालाभावस्य साध्यतावच्छेदकसम्बन्धेन प्रति-योगिव्यधिकरणत्वविरहादिति वाच्यम् । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदक-त्वमभ्युपेत्येदमुक्तम्, तथाच प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशेनै-व सामञ्जस्यात् । एवं न्यूनवृत्तिधर्मस्यापि प्रतियोगितानवच्छेदकत्वमभ्युपेत्येदमुक्तम् । प्रस-तेन धूमत्वस्य वह्निधूमोभयाभावप्रतियोगितावच्छेदकत्वेऽपि नोभयसाध्यकव्यभिचारिण्यति-ङ्गः । न च स्वकालीनधूमवह्निघटगतत्रित्वप्रतियोगिकपर्याप्तिमत्तासम्बन्धेन वह्निधूमोभयत्व-विशिष्टसाध्यकस्थलेऽतिव्याप्तिरिति वाच्यम् । परम्परायाः संसर्गत्वे मानाभावादित्याहुः ।

अत्र हेतुसन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नानुयोगितापर्याप्तिककूटत्वावच्छि-न्नविशिष्टसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमिति निवेशस्यावश्यकतया वह्निघटत्र-सिद्धित्ववन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाल्लक्षणस-मन्वयसम्भवे स्वसमानवृत्तिकत्वं व्यर्थमेवेत्यस्वरससूचनाय चिन्त्यते इत्युक्तम् । केचित्तु व्यभिचारज्ञानप्रतिबध्यव्याप्तिज्ञानस्यैवानुमितिकारणत्वम्, तथाच वह्नित्वं धूमवन्निष्ठाभावप्र-तियोगितावच्छेदकमिति व्यभिचारज्ञानाऽप्रतिबध्यस्य धूमवन्निष्ठाभावप्रतियोगितावच्छेदका-भाववद्वृत्तिवह्नित्वमिति ज्ञानस्य नानुमितिकारणत्वम्, अन्यथा तादृशव्यभिचारज्ञानकालेऽ-प्यनुमित्यापत्तेरित्याहुः ।

अपरे तु नञ्द्वयाऽप्रवेशे सत्तावान् जातेरित्यत्राऽव्याप्तिः, साध्यतावच्छेदकसत्तात्वस्य तादृशप्रतियोगितावच्छेदकविशिष्टसत्तात्वाऽतिरिक्तवृत्तित्वाभावादिति वाच्यम् । नञ्द्वयप्रवेशेऽ-पि सत्तात्वस्य तादृशप्रतियोगितावच्छेदकविशिष्टसत्तात्वानतिरिक्तवृत्तितया तद्भिन्नत्वाभा-वेनाऽव्याप्तितादवस्थ्यात् । यदि नञ्द्वयघटनायां तादृशानुपपत्त्यैव वस्तुतस्त्वित्यादिना प्रतियो-गितावच्छेदकानतिरिक्तवृत्तित्वस्य निष्कर्षकरणान्नानुपपत्तिरित्युच्यते, तदा नञ्द्वयाऽप्रवेशेऽ-पि प्रतियोगितावच्छेदकातिरिक्तवृत्तिसाध्यतावच्छेदकेत्यादेः तादृशप्रतियोगितावच्छेदकावच्छि-न्नाभाववदसम्बद्धं यद्विशिष्टसामान्यं, तादृशप्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभाव-प्रतियोगितावच्छेदकं वा तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति निष्कर्षकरणेनाऽनुपपत्त्य-भावादिति परन्तु नञ्द्वयप्रवेशे इव तदप्रवेशेऽपि वह्निमान् धूमादित्यादौ वह्नित्वादेस्तादृशप्र-तियोगितावच्छेदकतार्णातार्णोभयत्वाद्यतिरिक्तवृत्तित्वाभावादव्याप्त्या स्वसमानवृत्तिकत्वविशेष-णमावश्यकम् । धूमत्वादेस्तादृशप्रतियोगितावच्छेदकमहानसीयधूमत्वाद्यतिरिक्तवृत्तित्वेनाऽतिप्र-सङ्गवारणाय तादृशप्रतियोगितावच्छेदकं यद्यत्प्रत्येकं तदतिरिक्तवृत्तित्वस्यैव साध्यतावच्छेदके निवेशनीयत्वात् । स्वपदं चात्र साध्यतावच्छेदकपरम्, तथाच साध्यतावच्छेदकसमानवृत्तिक-

ननु धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यद्वह्न्यादिनिष्ठं ता- र्णाऽतार्णदहनोभयत्वं यावत्त्वं च तदनतिरिक्तवृत्त्येव वह्नित्वादिकमिति व्याप्तिलक्षणाऽसंभवीत्यत आह स्वसमानेति ।

---

तादृशप्रतियोगितावच्छेदकं यद्यत्प्रत्येकं तदतिरिक्तवृत्ति यत्साध्यतावच्छेदकं तदवच्छिन्नसामा- नाधिकरण्यं व्याप्तिरिति पर्यवसन्नम् । एवं च वह्निमान् धूमादित्यादौ महानसीयवह्नित्वादे- र्वह्नित्वसमानवृत्तिकतादृशप्रतियोगितावच्छेदकत्वेन तदतिरिक्तवृत्तित्वस्य वह्नित्वादौ सत्त्वेन लक्षणसमन्वयेऽपि एतद्रूपवान् एतद्रसादित्यादौ साध्यतावच्छेदकसमानवृत्तिकतादृशप्रतियोगि- तावच्छेदकाऽप्रसिद्ध्याऽव्याप्तिः । न च पूर्वक्षणवृत्तित्वविशिष्टतद्रूपत्वमेव तादृशं प्रसिद्धमिति- वाच्यम् । तदवच्छिन्नाभावस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्याभावेन लक्षणाऽघटकत्वात् साध्यतावच्छेदकतद्रूपत्वस्य तदतिरिक्तवृत्तित्वाभावेनाऽव्याप्तेरनुद्धा- राच्च । एवं कालो घटवान् महाकालपरिमाणदित्यादावप्यव्याप्तिः, तत्र गगनत्वस्यैव तादृ- शप्रतियोगितावच्छेदकत्वेन तस्य साध्यतावच्छेदकसमानवृत्तिकत्वाभावेन निरुक्ततादृशप्रति- योगितावच्छेदकाऽप्रसिद्धेः । नञ्द्वयप्रवेशे च स्वपदस्य पारिभाषिकावच्छेदकपरतया नो- क्ताव्याप्तिरित्याहुः ।

वस्तुतस्तु नञ्द्वयाऽघटितोक्तलक्षणस्य लघुत्वेऽपि लक्षणान्तरत्वेन मूलकृदुक्ताऽनवच्छे- दकत्वघटितलक्षणस्य नञ्घटितत्वेनाऽवच्छेदकत्वस्याऽनतिरिक्तवृत्तित्वे नञ्द्वयघटनाया आ- वश्यकत्वमेव, यथासन्निवेशे च न वैयर्थ्यमिति सारम् ।

व्याप्तिलक्षणाऽसम्भवीति । अथात्र महानसीयतेजस्त्वावच्छिन्नाभावमादायाऽव्याप्ति- वारणाय धर्मविशिष्टान्यत्वं प्रतियोगितायां निवेश्यम् । वै० स्वनिष्ठावच्छेदकतानिरूपितत्वस्वा- ऽवृत्त्यवच्छेदकतानिरूपितत्वोभयसम्बन्धेन, तथाच वह्निघटवृत्तिद्वित्वावच्छिन्नाभावमादाय नाऽव्याप्तिरिति स्वसमानवृत्तिकत्वं व्यर्थमिति चेन्न । महानसीयवह्निभिन्नवह्निमान् धूमादि- त्यादावतिव्याप्तिवारणायोक्तस्य साध्यतावच्छेदकताविशिष्टान्याऽवच्छेदकत्वानिरूपितत्वरूप- "साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वस्य"वह्निघटवृत्तिद्वित्वात्मकतद्व्यक्त्यवच्छिन्नप्रति- योगितायां सत्त्वात्तन्निरूपकाभावमादायाऽव्याप्तिवारणायैव स्वसमानवृत्तिकत्वं निवेश्यम्, वै- शिष्ट्यं च प्रसिद्धचतुष्टयसम्बन्धेनेति ।

अथात्र रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादायाऽव्याप्तिवा- रणाय साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं प्रतियोगितावच्छेदकतायामवश्यं निवेश- नीयम्, तथाच वह्निमान् धूमादित्यत्र पर्याप्तिसम्बन्धावच्छिन्नतार्णातार्णदहनवृत्तिद्वित्वनिष्ठा- वच्छेदकताकप्रतियोगिताकाभावस्य लक्षणाऽघटकत्वात्कथमव्याप्तिः । न चोक्ताभावप्रतियो- गितावच्छेदकताघटकविषयितासम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकाभाववति रू- पे रूपत्वस्य सत्त्वादव्याप्तिविरहेण साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं न निवेशनी- यमिति वाच्यम् । यत्र स्वरूपेण धीविशेषविषयत्वात्मकतार्णातार्णदहनवृत्तिद्वित्वविशिष्टस्य संयोगेन साध्यता धूमादेर्हेतुता तत्र प्रत्येकवह्न्यधिकरणे प्रतियोगिन्यधिकरणहेतुसमानाधिक- रणस्य तादृशद्वित्वनिष्ठपर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य प्रतियोगि-

तावच्छेदकाभाववति साध्यतावच्छेदकस्याऽसत्त्वादव्याप्तिरतः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं निवेशनीयम्। न च पर्याप्तिस्वरूपान्यतरसम्बन्धेनोक्तधीविशेषविषयत्वात्मकद्वित्वविशिष्टसाध्यकस्थले पर्याप्तिसम्बन्धावच्छिन्नधीविशेषविषयत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम्। साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकाऽवच्छेदकताकत्वं प्रतियोगितायां निवेश्यम्। न चाऽत्राऽभावाऽप्रसिद्धिः, पर्याप्तिस्वरूपान्यतरसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वं लाघवात्पर्याप्तिसंबन्धेन घटत्वस्यैव घटपटगतधीविशेषविषयत्वात्मकद्वित्वनिष्ठपर्याप्तिस्वरूपान्यतरसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वं लाघवात्स्वरूपसम्बन्धेनैव तादृशविषयत्वात्मकद्वित्वस्याऽवच्छेदकत्वमिति वाच्यम्। घटपटगतधीविशेषविषयत्वात्मकद्वित्वमठीयरूपान्यतरनिष्ठा या पर्याप्तिस्वरूपान्यतरसम्बन्धावच्छिन्नावच्छेदकता तदवच्छेदकताकप्रतियोगिताकाभावस्य प्रतियोगिव्यधिकरणत्वात्, नहि तादृशाभावप्रतियोगितावच्छेदकत्वं पर्याप्तिसम्बन्धेन स्वरूपसम्बन्धेन वोक्तान्यतरस्य, घटपटोभयघटकप्रत्येकवद्देशे मठवद्देशे च तादृशाभावप्रत्ययानुदयात्। न च पर्याप्तित्वस्वरूपत्वान्यतरवत्सम्बन्धेन धीविशेषविषयत्वात्मकतार्णतार्णदहनगतद्वित्वविशिष्टस्य संयोगेन साध्यतायां धूमादिहेतौ पर्याप्तिसम्बन्धावच्छिन्नतादृशविषयत्वात्मकद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम्। साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमवच्छेदकतायां निवेशनीयम्। वृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। अत्र न्यूनवारकमात्रनिवेशे यत्र समवायेन वह्नित्वविशिष्टस्य विषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वहेतौ वह्नित्वप्रतियोगिकसमवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तिरत इतरवारकपर्याप्तेरपि निवेशः। न च तथापि समवायेन स्वरूपतो वह्नित्वविशिष्टस्य विषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वहेतौ विषयितासम्बन्धात्मकसाध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभावविशिष्टा या समवायसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविषयितासम्बन्धावच्छिन्ना प्रतियोगिता तादृशप्रतियोगितानिरूपकाभावमादायाऽव्याप्तिः, एवं स्वरूपेण गगनत्वविशिष्टस्य विषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वादिहेतौ गगनात्मकतद्व्यक्त्यभावमादायाऽव्याप्तिश्चेति वाच्यम्। इष्टत्वात्। अत एव सत्तावान् जातेरित्यादावव्याप्तिरुक्ता। न च तथापि वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायामव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावस्य विवक्षितत्वात्। अत्र साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वपदेन साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाऽवृत्तित्वस्य विवक्षितत्वात्। वृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धे-

न । अन्यथा पर्याप्तिस्वरूपान्यतरसम्बन्धेन तार्णातार्णदहनगतधीविशेषविषयत्वात्मकद्वित्ववि- शिष्टसाध्यकस्थले केवलपर्याप्तिसम्बन्धेन तादृशद्वित्वविशिष्टाभावमादायाऽव्याप्तिः ।

अथैतादृशस्थले एव शुद्धपर्याप्तिसम्बन्धावच्छिन्ना या तार्णातार्णदहनगतसंख्यात्मकद्वित्व- निष्ठावच्छेदकता तस्याः साध्यतावच्छेदकनिष्ठत्वविरहेणोभयाभावसत्त्वात्तन्निरूपकप्रतियोगिता- वच्छेदकाभाववति घटे साध्यतावच्छेदकस्याऽसत्त्वादव्याप्तिरिति चेन्न । साध्यतावच्छेदकताघट- कसंबंधातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकसमानाधिकरणनिष्ठत्वोभयाभावस्य निवक्ष- णात्, तथाचाऽत्र संख्यात्मकद्वित्वे धीविशेषविषयत्वात्मकद्वित्वसामानाधिकरण्यसत्त्वेन लक्षण- समन्वयसम्भवात् । अत्र च सामानाधिकरण्यघटकाधिकरणत्वं वृत्तित्वं च यदि साध्यतावच्छे- दकताघटकसम्बन्धेनोच्यते तदोक्तधीविशेषविषयत्वात्मकद्वित्वविशिष्टसाध्यकस्थले संख्या- त्मकद्वित्वावच्छिन्नाभावमादायाऽव्याप्तिः, किन्तु साध्यतावच्छेदकताघटकसम्बन्धेनाधिकरण- त्वं, वृत्तित्वं च प्रतियोगितावच्छेदकताघटकसम्बन्धेन । न च कालिकादियावदन्यतमसम्बन्धेन प्रमेयविशिष्टस्य साध्यतायां सद्धेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छे- दकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकसमानाधिकरणनिष्ठत्वोभयोः सत्त्वादव्याप्तिरिति वाच्यम् । तादृशरूपावृत्तित्वसाध्यतावच्छेदकव्यापकनिष्ठत्वोभयाभावस्य विवक्षितत्वात् । अत्र व्यापकताघटकः सम्बन्धः प्रतियोगितावच्छेदकताघटकः, व्याप्यताघट- कसम्बन्धः साध्यतावच्छेदकताघटकः । नचैवं विषयितासमवायान्यतरसम्बन्धेन यत्र घटत्वविशिष्टस्य समवायेन साध्यता तदात्मकपालान्यतरत्वस्य हेतुता तत्राव्याप्तिः, तथाहि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणो योऽभावो विषयितासम्बन्धावच्छिन्नघटत्वनिष्ठा- वच्छेदकताकप्रतियोगिताकाभावः समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रतियो- गिताकाभावश्च, तयोरभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्ब- न्धेन(१) साध्यतावच्छेदकव्यापकनिष्ठत्वविरहात् तयोरभावप्रतियोगितावच्छेदकाभाववति घ- टादौ साध्यतावच्छेदकस्याऽसत्त्वादिति वाच्यम् । व्याप्यताघटकसम्बन्धोऽपि प्रतियोगिता- वच्छेदकताघटक एवेति ।

ननु यत्र धूमत्वप्रकारकप्रमाविशेष्यत्वप्रतियोगिकस्वरूपसम्बन्धेन तादृशविशेष्यतावि- शिष्टस्य साध्यता तत्र व्यभिचारिणि समवायसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकप्र- तियोगिताकाभावप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन साध्यतावच्छेदकाधिकरणा- ऽप्रसिद्धेरिति धूमगतान्यतमत्वावच्छिन्नाभावप्रतियोगितायामुभयोः सत्त्वेन तदभावस्य च लक्षणाघटकत्वादभावान्तरमादायाऽतिव्याप्तिरिति चेन्न । साध्यतावच्छेदकत्वाभाववत्त्वमेव विवक्षणीयम् । अभावश्च स्वावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वस्वाश्रयव्यापकनि- ष्ठत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः, तथा चोक्तव्यभिचारिणि धूमाभावमादाय नाति- व्याप्तिः, साध्यतावच्छेदकत्वाभावस्य केवलान्वयित्वात् । स्वपदेन धूमत्वप्रकारकप्रमाविशेष्य- त्वनिष्ठावच्छेदकता नोपादेया प्रतियोगितावच्छेदकताघटकसम्बन्धेन तदाश्रयाऽधिकरणाऽप्रसि- द्धेः, उपादेया च धूमत्वनिष्ठा समवायसम्बन्धावच्छिन्नावच्छेदकता तदवच्छेदकसम्बन्धाति-

(१) तृतीयायार्थोऽवच्छिन्नत्वम्, तस्य साध्यतावच्छेदकनिष्ठत्वव्याप्यतायामन्वयः ।

रिक्तसम्बन्धावच्छिन्नत्वस्य प्रतियोगितावच्छेदकताघटकसम्बन्धेन तदाश्रयव्यापकानिष्ठत्वस्य
कालेकेन द्रव्यत्वविशिष्टाभावीयप्रतियोगितानिरूपितकालिकसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छे-
दकतायां प्रसिद्धत्वेन तादृशसम्बन्धस्य साध्यतावच्छेदकताया व्यधिकरणत्वेन व्यधिकरणस-
म्बन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात् । वृत्त्यनियामकसम्बन्धस्याऽभाव-
प्रतियोगिताऽनवच्छेदकत्वे तादृशोभयसम्बन्धस्या भावप्रतियोगितानवच्छेदकत्वे तादृशो-
भयसम्बन्धावच्छिन्नसाध्यतावच्छेदकत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य निवेशः ।
व्यधिकरणसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिकभेदस्याऽस्वीकारे परम्परायाः संसर्ग-
त्वीऽनङ्गीकारे च साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छे-
दकताव्यापकत्वोभयाभाववत्त्वमेवाऽवच्छेदकतायां निवेश्यम् । नचैवमपि घटकालीनपर्या-
प्तिमत्तासम्बन्धेन यत्र द्रव्यत्वपृथिवीत्वगतद्वित्वविशिष्टस्य समवायेन साध्यताद्रव्यत्वा-
देर्हेतुता तत्राऽतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवाच्छुद्धपर्याप्तिसम्ब-
न्धेन तादृशद्वित्वस्यैव, शुद्धपर्याप्तिसम्बन्धावच्छिन्नतादृशद्वित्वनिष्ठावच्छेदकतायां तदु-
भयाभावविरहादिति वाच्यम् । साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छि-
न्नत्वसाध्यतावच्छेदकताव्यापकत्वसाध्यवद्वृत्त्यभावीयप्रतियोगितानिरूपितत्वैतत्रितयाभावव-
त्त्वस्यैवाऽवच्छेदकतायां निवेश्यम्, तथाचोक्तद्वित्वनिष्ठावच्छेदकतायां साध्यवद्वृत्त्यभावी-
यप्रतियोगितानिरूपितत्वविरहादेव व्यभिचारिमात्रे नातिव्याप्तिरिति ।

केचित्तु साध्यवन्निष्ठाधिकरणतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नयत्किञ्चिन्निरू-
पकतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकानिष्ठत्वोभ-
याभावस्य विवक्षितत्वात् । तथाच यत्र धूमत्वप्रकारकप्रमाविशेष्यताप्रतियोगिक-
स्वरूपसम्बन्धेन तादृशविशेष्यताविशिष्टस्य संयोगेन साध्यता तत्र साध्यवन्निष्ठाधिकरण-
तानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकतावच्छेदकताघटकीभूतस्वरूपसम्बन्धा-
तिरिक्तसम्बन्धावच्छिन्नत्वघटितोभयाभावसत्त्वाद्धूमगताऽन्तयमत्वावच्छिन्नाभावमादायवै-
नातिव्याप्तिः । अथ निरूपकतायां यत्किञ्चित्त्वनिवेशनं व्यर्थमिति चेन्न । यत्र कालि-
कसम्बन्धेन वह्नेः साध्यता तत्र साध्यवन्निष्ठाधिकरणतानिरूपितसाध्यतावच्छेदकसम्ब-
न्धावच्छिन्ननिरूपकतावच्छेदकताघटकसंसर्गोऽप्रसिद्धेरतस्तन्निवेशः । तथाचसमवायसम्ब-
न्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतामादाय नाव्याप्तिः । अत्र व्याप्यताव्याप-
कताघटकसम्बन्धस्तु प्रतियोगितावच्छेदकताघटकः ।

यत्किञ्चित्त्वनिवेशेऽनुगमस्तु साध्यतावच्छेदकावच्छिन्नाधिकरणताव्यापकाधिकरणता-
निरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपकतावदन्यत्वसाध्यतावच्छेदकव्यापकनिष्ठत्वो-
भयाभावरूपो विवक्षणीयः । निरूपकतावत्ता च स्वावच्छेदकताघटकसम्बन्धाव-
च्छिन्नत्वसम्बन्धेन, तथाच न कोपि दोष इत्याहुः । तन्न । धीविशेषविषयत्वारम-
कताणांताणदहनगतद्वित्वविशिष्टसाध्यकस्थले पर्याप्तिसम्बन्धावच्छिन्नसंख्यात्मकद्वित्वनि-
ष्ठावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तितादवस्थ्यात् । तथाहि प्रथमकल्पे
तादृशाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताव्यापकत्वविरहेण द्वितीयकल्पे

स्वसमानवृत्तिकं चाऽवच्छेदकं ग्राह्यम्।

स्वमनतिरिक्तवृत्तित्वेनाऽभिमतम्, तथाच स्वसमानवृत्तिकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तदनतिरिक्तवृत्तित्वमर्थः। यावत्त्वस्य वह्नित्वव्यापकत्वेऽपि वह्नित्वसमानवृत्तिकत्वाभावादेव न तस्य तादृशावच्छेदकत्वमिति भावः।

तु साध्यतावच्छेदकावच्छिन्नाधिकरणताव्यापकाधिकरणतानिरूपितवह्नित्वावच्छिन्नरूपकतावदन्यत्वविरहात्। निरूपकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वानिवेशे तु स्वकालीनद्रव्यत्वपृथिवीत्वोभयत्वंप्रतियोगिकपर्याप्तिमत्तासम्बन्धेन द्रव्यत्वनिष्ठतद्व्यक्तित्वपृथिवीत्वनिष्ठतद्व्यक्तित्वगतद्वित्वविशिष्टस्य यत्र साध्यता तत्रोक्तयुक्त्याऽव्याप्तितादवस्थ्यम्।

केचित्तु साध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनिष्ठत्वसाध्यवद्वृत्त्यभावीयप्रतियोगितानिरूपितत्वोभयाभाववत्त्वमेव साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वपदार्थः। साध्यवत्त्वं चात्र साध्यतावच्छेदकसम्बन्धेन। अभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकः। तथाच कुत्रापि न दोष इत्याहुः। तन्न। अग्रे सत्तावान् जातेरित्यत्राऽव्याप्तिदानमसंगतम् विशिष्टसत्तात्वानेछावच्छेदकतायां साध्यवद्वृत्त्यभावीयप्रतियोगितानिरूपितत्वसाध्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनिष्ठत्वोभयोः सत्त्वात्। न च सामानाधिकरण्यसम्बन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य साध्यसामानाधिकरण्यविरहेण तादृशाभावमादायाऽव्याप्तिः संगतेति वाच्यम्। तादृशाभावप्रतियोगितावच्छेदकत्वं लाघवात्समवायेन द्रव्यत्वस्यैवेति तदभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकत्वेन लक्षणाऽघटकत्वात्।

केचित्तु साध्यतावच्छेदकताविशिष्टा याऽवच्छेदकता तादृशावच्छेदकताविशिष्टान्याऽवच्छेदकता सैव साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकतापदेन ग्राह्या। प्रथमवै० स्वानवच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन। द्वितीयवै० स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन। तथाच न कुत्रापि दोष इत्याहुः। तन्न। धीविशेषविषयत्वात्मकतार्णातार्णदहनगतद्वित्वविशिष्टसाध्यकस्थले सङ्ख्यात्मकद्वित्वनिष्ठपर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावमादायाऽव्याप्तितादवस्थ्यात्।

वस्तुतस्तु धीविशेषविषयत्वात्मकद्वित्वविशिष्टस्य साध्यतास्थलेऽव्याप्तिरिष्टैव, सत्तावान् जातेरित्यत्राऽव्याप्तिवदिति।

स्वमनतिरिक्तत्वेनाऽभिमतमिति। नन्वत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमेव स्वपदेन ग्राह्यम्। तदनतिरिक्तवृत्तित्वे सति तत्समानवृत्तिकत्वं पारिभाषिकावच्छेदकत्वम्, तावतैव न तार्णातार्णोभयाभावमादाय नाऽव्याप्तिः। एवं चाऽनुगमे लाघवमपि, तथाहि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टत्वं पारिभाषिकाऽवच्छेदकत्वम्। वै० स्वानति-

तत्त्वं च स्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकत्वम् यावत्त्वादिकन्तु न तथा ।

ननु स्वसमानवृत्तिकत्वं स्वाऽन्यूनाऽनतिरिक्तवृत्तित्वम्, तथाच वह्नि-निष्ठयावत्त्वादेरपि समवायादिना वह्नित्वादिसमानवृत्तित्वमेवाऽत आह तत्त्वं चेति । स्वसमानवृत्तिकत्वं चेत्यर्थः । स्वपर्याप्तीति । न च वह्नित्वपर्याप्त्य-धिकरणं यावत्येव वह्नौ वह्निवृत्तियावत्त्वादेः पर्याप्तत्वाद्वह्नित्वस्याऽवच्छेद-

रिक्तवृत्तित्वस्वसमानवृत्तिकत्वोभयसम्बन्धेन । भवन्मते तु हेतुसमानाधिकरणाभावप्रतियोगि-तावच्छेदकविशिष्टत्वम् । वै० स्वानतिरिक्तवृत्तित्वस्ववृत्तित्वोभयसंबन्धेन, स्ववृत्तित्वं च स्वस-मानवृत्तिकत्वसम्बन्धेन, तथाच वृत्तित्वांशस्याऽधिकस्य निवेशाद्गौरवमिति चेन्न । वह्नि-धूमोभयानुयोगिकसमवायेन त्रित्वविशिष्टस्य साध्यतायां वह्निहेतावतिव्याप्तेः, तथाहि हेतु-मन्निष्ठाभावप्रतियोगितावच्छेदकं लाघवाद् द्वित्वं तत्समानवृत्तिकं च न त्रित्वमिति तस्य पारिभाषिकावच्छेदकत्वाभावात् । अस्मन्मते तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्-योगोलकवृत्तित्वं तच्च स्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्नपर्याप्तिकत्वरूपात्रित्व-समानवृत्तिकत्व इति तदतिरिक्तवृत्तित्वस्यैव साध्यतावच्छेदकीभूतत्रित्वे सत्त्वान्नातिव्याप्तिः ।

यावत्येव वह्नाविति । समुदायस्य प्रत्येकाऽनतिरिक्तत्वेन तत्तद्वह्नेर्वह्नित्वपर्याप्त्यधि-करणत्वे यावद्वह्नीनामेव वह्नित्वपर्याप्त्यधिकरणत्वादिति भावः । उक्तत्वादिति । तथाच स्वसमानवृत्तिकत्वपदेन स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिता-कपर्याप्तिप्रतियोगित्वस्योक्तत्वादिति भावः ।

अथात्र वह्निर्यावान्नास्तीति प्रतीतिसाक्षिकवह्निनिष्ठयावत्त्वावच्छिन्नाभावस्य पर्वते हेतुस-मानाधिकरणस्य प्रतियोगितावच्छेदकस्य वह्निनिष्ठयावत्त्वस्य "यावान्वह्निरिति प्रतीतिबलेन यावत्त्वादेरपि वह्नित्वपर्याप्त्यवच्छेदकत्वेन तदवच्छिन्नपर्याप्तिकत्वस्य यावत्त्वादौ सत्त्वेन" वह्नित्वसमानवृत्तिकस्याऽभाववति वह्निभिन्ने वृत्तित्वस्याऽवृत्तित्वात्, वह्नित्वप्रतियोगिकपर्या-प्त्यनुयोगितावच्छेदकीभूतवह्निनिष्ठान्यतमत्वाऽवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्य वा तादृशयावत्त्वे(१) सत्त्वात् ।

न च स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वव्यापकत्वमेव स्वसमानवृत्तिकत्वं, व्यापकता च स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाच वह्नित्वप्रतियो-गिकपर्याप्त्यनुयोगितावच्छेदकत्वाधिकरणे तत्तद्वह्नित्वे यावत्त्वप्रतियोगिकपर्याप्त्यनुयोगि-तावच्छेदकत्वसम्बन्धेन यावत्त्वाभावसत्त्वेन व्यापकत्वाऽसम्भवान्न वह्नित्वे पारिभाषि-काऽवच्छेदकत्वापत्तिरिति वाच्यम् । कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तेः, घटत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वाभावस्य कम्बुग्रीवा-दिमत्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वाधिकरणे तत्तत्कपालत्वे सत्त्वात् । यद्यपि स्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मानवच्छिन्नानुयोगिताकपर्या-

(१) व्यासज्यवृत्तिधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतायाः व्यासज्यवृत्तिधर्मे समनियताव्या-सज्यवृत्तिधर्मे च स्वीकारादिति भावः ।

प्तिप्रतियोगिताकान्यत्वस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके विवक्षणे उक्तस्थलेऽतिव्याप्तिवारणसम्भवस्तथापि वह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितान(१)वच्छेदकघटपटोभयत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताकान्यत्वस्य वह्निगतयावत्त्वे सत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिस्तदवस्थैवेति चेन्न ।

स्वप्रतियोगिकपर्याप्तिवृत्त्युभयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताकान्यत्वस्य विवक्षणात्, तथाच तत्पर्याप्त्यन्तर्गतवन्हित्वप्रतियोगिकतद्वन्हित्वावच्छिन्नानुयोगिताकपर्याप्तिवृत्तिउभयावृत्तितद्व्यक्तित्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदनुयोगितानवच्छेदकत्वस्य वन्हिगतयावत्त्वे सत्त्वेन तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताकान्यत्वस्य यावत्त्वे विरहान्नाऽव्याप्तिः । न च तत्पर्याप्त्यन्तर्गतघटत्वप्रतियोगिकतद्घटत्वावच्छिन्नानुयोगिताकपर्याप्त्यनुयोगितानवच्छेदकघटगतयावत्त्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताकान्यत्वस्य घटत्वे विरहेण घटाभावोऽपि न लक्षणघटक इति वाच्यम् । तद्घटाभावस्यैव लक्षणघटकत्वात् । न च धूमवान् वन्हेरित्यादावतिव्याप्तिः, धूमत्वप्रतियोगिकतद्धूमत्वावच्छिन्नानुयोगिताकपर्याप्तिवृत्तिउभयावृत्तितद्व्यक्तित्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदनुयोगितानवच्छेदकत्वस्य धूमगतयावत्त्वे सत्त्वेन तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताकान्यत्वस्य धूमत्वे विरहादुक्तयुक्त्या तद्धूमाभावस्यैव लक्षणघटकतया तत्प्रतियोगितावच्छेदकाभाववति धूमान्तरे धूमत्वस्य वृत्त्याऽवृत्तिगगनादेरेव पारिभाषिकावच्छेदकत्वादिति वाच्यम् । स्वप्रतियोगिकपर्याप्तिवृत्तिउभयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिवृत्तिउभयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगितावदन्यत्वस्य विवक्षितत्वात् । उक्तस्थले च धूमत्वप्रतियोगिकयत्किञ्चित्पर्याप्त्यनुयोगितानवच्छेदकधूमगतयावत्त्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताकान्यत्वस्य धूमत्वे सत्त्वेन स्वसमानवृत्तिकत्वसत्त्वान्नातिव्याप्तिरिति परमार्थः । वन्हिगतयावत्त्वावच्छिन्नाभावमादायाऽव्याप्तिवारणन्तु "यावत्त्वादिकन्तु न तथा" इत्यग्रे स्फुटीभविष्यति ।

अथ वह्निधूमोभयवान् वह्नेरित्यादौ साध्यभावप्रतियोगितावच्छेदकं लाघवात् धूमत्वे कल्पनीयम्, तत्र चोभयत्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताकान्यत्वस्य सत्त्वेऽपि प्रतियोगितावच्छेदकधूमत्वानतिरिक्तवृत्तित्वस्य साध्यतावच्छेदके सत्त्वेन (तच्च धूमत्वादावेव) तद्भिन्नत्वस्योभयत्वे सत्त्वादतिव्याप्त्यापत्तेरिति चेन्न। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टं यद्रूपं तद्भिन्नत्वं साध्यतावच्छेदके निवेश्यम् । वै० स्ववृत्तित्वस्वावच्छिन्ननिरूपकतानवच्छेदकत्वोभयसम्बन्धेन, स्ववृत्तित्वं च स्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकान्यत्वसम्बन्धेन, तथाच धूमत्वावच्छिन्ननिरूपकत्वाभावव्याप्यं नोभयत्वादिकं किन्तु वह्नित्वादिक-

(१) अव्यासज्यवृत्तिधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतायाः समनियतव्यासज्यवृत्तिधर्मेऽपि स्वीकाराद्वह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकं न वह्निगतयावत्त्वमपि तु घटपटगतद्वित्वमेवेत्याशयः ।

मेव, तथाच तद्धर्ममात्रावच्छिन्ननिरूपकतानवच्छेदकत्वस्योभयत्वे सत्त्वेन तस्य पारिभाषिकावच्छेदकत्वान्नोक्तस्थलेऽतिव्याप्तिरिति । धूमत्वभिन्नोभयत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्ममात्रावच्छिन्ननिरूपकतानवच्छेदकत्वस्योभयत्वेऽप्यसत्त्वेन तस्य पारिभाषिकावच्छेदकत्वविरहेणोऽक्तस्थलेऽतिव्याप्तिरिति स्वभिन्नधर्ममात्रावच्छिन्ननिरूपकतानवच्छेदकत्वं विहाय स्वावच्छिन्ननिरूपकत्वाभावव्याप्यत्वं धर्मे निवेश्यमतो नातिव्याप्तिः । वह्निमान् धूमादित्यादौ महानसीयवह्निगततद्व्यक्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदकधर्मावच्छिन्ननिरूपकत्वाभावव्याप्यपर्वतीयत्वादितत्तद्धर्मावच्छिन्ननिरूपकतानवच्छेदकत्वसत्त्वेन तस्यापि पारिभाषिकावच्छेदकत्वादव्याप्तिरतः स्वावच्छिन्ननिरूपकत्वाभावव्याप्यधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्ममात्रावच्छिन्ननिरूपकत्वेत्यादिनिवेशः । वह्नित्वादिकं च तादृशपर्वतीयत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमेव तदवच्छिन्ननिरूपकतानवच्छेदकत्वस्य वह्नित्वे विरहान्नाव्याप्तिः । मात्रपदनिवेशाद् वह्निधूमोभयवान् वह्नेरित्यादौ नातिव्याप्तिः, अन्यथा धूमत्वावच्छिन्ननिरूपकत्वाभावव्याप्यवह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकवह्नित्वधूमत्वोभयत्वत्रितयधर्मावच्छिन्ननिरूपकतानवच्छेदकत्वस्योभयत्वे विरहेण पारिभाषिकावच्छेदकत्वविरहादतिव्याप्त्यापत्तेः।

अथ निरूपकत्वाभावव्याप्यत्वं तादृशनिरूपकतावदवृत्तित्वं, तत्रावृत्तित्वं यदि पर्याप्तिसम्बन्धेन तदा स्वकालीनद्रव्यत्वपृथिवीत्वोभयत्वप्रतियोगिकपर्याप्तिमत्तासम्बन्धेन द्रव्यत्वनिष्ठतद्व्यक्तित्वपृथिवीत्वनिष्ठतद्व्यक्तित्वगतद्वित्वविशिष्टस्य समवायेन साध्यतायां द्रव्यत्वादिहेतौ व्यभिचारिण्यतिव्याप्तिः, तत्र समवायसम्बन्धावच्छिन्नद्रव्यत्वपृथिवीत्वोभयत्वनिष्ठावच्छेदकताकाभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतावति साध्यतावच्छेदकतावच्छेदकपर्याप्तिसम्बन्धेनाऽसत्त्वात् । यदि च साध्यतावच्छेदकताघटकसम्बन्धेनोच्यते तदा कंबुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तिः, तथाहि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटत्वविशिष्टत्वस्य साध्यतावच्छेदकेऽसत्त्वात् स्वावच्छिन्ननिरूपकत्वाभावाभाववति अवृत्तिर्यो धर्मः स च कपालगताऽन्यतमत्वं तत्प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदककपालद्वयसंयोगमात्रावच्छिन्ननिरूपकताऽनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वात् ।

केचित्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टो यो धर्मः स पारिभाषिकावच्छेदकः, वै० स्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतावद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वस्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च स्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकान्यत्वसम्बन्धेन, तथाच धूमत्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतावद्वृत्त्यभावप्रतियोगिताऽनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्न वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिः । न चैवं वह्निनिष्ठतद्व्यक्तित्वावच्छिन्नाभावमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम् । साध्यव्याप्यप्रतियोगिकाभावमादायाऽव्याप्तेरिष्टत्वात् । अत एव सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावमादायाऽव्याप्तिः संगतेत्याहुः ।

तन्न । घ्राणग्राह्यगुणवान् पृथिवीत्वादित्यत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकपटात्मकतद्व्यक्तित्वविशिष्टत्वस्य साध्यतावच्छेदके सत्त्वात्, तथाहि स्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतावद्वृत्तिर्योऽभावः स घ्राणग्राह्यगुणत्वावच्छिन्नाभावो न प्राप्तः गुरुधर्मावच्छिन्नप्र-

तियोगिताकत्वाद् ; भवति च घटाद्यभावस्तत्प्रतियोगिताऽनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्त्यापत्तेः ।

केचित्तु वै० स्वावच्छिन्ननिरूपकताकाधिकरणतावान्निष्ठविशेष्यतानिरूपितप्रमीयप्रकारतावच्छेदकत्व–स्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च पूर्वोक्तसम्बन्धेन, तदा नोक्तव्यभिचारिण्यतिव्याप्तिः, प्रमीयप्रकारतावच्छेदकता च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना ग्राह्या, नातो वह्निमान् धूमादित्यादावव्याप्तिरित्याहुः । तन्न । यत्र कालिकसम्बन्धेन वह्नित्वविशिष्टस्य संयोगेन साध्यता धूमादेर्हेतुता तत्राव्याप्तिः, तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणस्य पारिभाषिकसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य समवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकघटत्वाविशिष्टत्वस्य साध्यतावच्छेदके सत्त्वात्, तथाहि स्वावच्छिन्ननिरूपकताकाधिकरणतावद्भूतलनिष्ठविशेष्यतानिरूपितकालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । न च स्ववृत्तित्वाभावाद् वह्नित्वप्रतियोगिपर्याप्त्यनुयोगितानवच्छेदकीभूतव्यासज्यवृत्तिघटगतयावत्त्वात्मकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकत्वसत्त्वादिति वाच्यम् । घटात्मकतद्व्यक्तित्वावच्छिन्नाभावमादायाऽव्याप्तितादवस्थ्यमिति । वह्निधूमोभयवान् वह्नेरित्यत्राऽतिव्याप्तिवारणमग्रे व्यक्तीभविष्यति । नन्वेवं वह्नित्वनिष्ठावच्छेदकतात्मकमहानसीयवह्न्यभावीयप्रतियोगितावच्छेदकताविशिष्टस्य समवायेन साध्यतायां वह्नित्वादिहेतावव्याप्त्यापत्तिः , हेतुसमानाधिकरणस्य महानसीयत्ववह्नित्वोभयाभावस्य प्रतियोगितावच्छेदकोभयत्वविशिष्टत्वस्य साध्यतावच्छेदके सत्त्वात् तदवच्छेदकताया महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वेन व्यासज्यवृत्तितया नत्प्रतियोगिकपर्याप्त्यनुयोगिताऽनवच्छेदकं न महानसीयत्ववह्नित्वगतोभयत्वादिकं भवति च घटपटोभयत्वादिकमेव तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकान्यत्वस्य महानसीयत्ववह्नित्वोभयत्वे सत्त्वात् साध्यतावच्छेदकस्य पारिभाषिकावच्छेदकत्वादिति चेन्न । स्वेतराप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकान्यत्वसम्बन्धेनैव स्ववृत्तित्वं निवेश्यम्, तथाच तदवच्छेदकतामात्रप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य महानसीयत्ववह्नित्वोभयत्वे सत्त्वेनाऽव्याप्त्यसम्भवात् । न च तथापि महानसीयवन्ह्यभावप्रतियोगितावच्छेदकताविशिष्टस्य साध्यतायां द्रव्यत्वादिहेतुकव्यभिचारिण्यतिव्याप्तिः, तथाहि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं न महानसीयवन्ह्यभावप्रतियोगितावच्छेदकत्वं गौरवात्तदपेक्षया लाघवान्महानसीयत्ववह्नित्वगतद्वित्वमेव तद्विशिष्टत्वस्य साध्यतावच्छेदकेऽसत्त्वात् । महानसीयवन्ह्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तौ महानसीयवह्न्यभावप्रतियोगितानिरूपितमहानसीयत्वनिष्ठावच्छेदकत्वेतरवह्नित्वनिष्ठावच्छेदकत्वप्रतियोगिताकत्वादिति वाच्यम् । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टं यद्रूपं तदाश्रयभिन्नत्वं साध्यतावच्छेदके निवेश्यम् , वै० स्ववृत्तित्वस्ववृत्तिनिरूपकत्वाभावव्याप्यधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्ममात्रावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वोभयसम्बन्धेन, स्ववृत्ति-

त्वं च स्वाश्रयेतराप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवृत्तित्वसम्बन्धेन, तथाच तादृशमहानसीयत्ववह्नित्वोभयगतद्वित्वगतैकत्वविशिष्टत्वस्य साध्यतावच्छेदकगतसमुदायत्वे सत्त्वात् स्वाश्रयेतरत्वं नोक्तावच्छेदकत्वद्वये, अपि तु घटत्वादावेव तदप्रतियोगिकमहानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वस्योभयत्वे विरहात्साध्यतावच्छेदकस्यापि पारिभाषिकावच्छेदकत्वान्नातिव्याप्तिरिति । न च स्वकालीनवह्निधूमोभयत्वप्रतियोगिकपर्याप्तिमत्तासम्बन्धेन वह्निधूमघटगतत्रित्वविशिष्टस्य संयोगेन साध्यतायां वह्न्यादिहेतुकव्यभिचारिणि अतिव्याप्तिः, तत्र साध्यतावच्छेदकत्वं लाघवाच्छुद्धपर्याप्तिसम्बन्धेन वह्निधूमोभयत्वे कल्पनीयम्, तथाच तादृशोभयत्वगतैकत्वविशिष्टस्य साध्यतावच्छेदकगतत्रित्वगतैकत्वे विरहात् त्रित्वगतैकत्वाश्रयेतराप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकवह्निधूमोभयत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवृत्तित्वस्य द्वित्वगतैकत्वे विरहात् त्रित्वस्य न पारिभाषिकाऽवच्छेदकत्वम्, अपि तु वह्निधूमोभयत्वादिकस्यैव तद्भिन्नत्वस्य साध्यतावच्छेदके त्रित्वे सत्त्वादिति वाच्यम्। स्वविशिष्टव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवृत्तित्वसम्बन्धेनैव स्ववृत्तित्वं निवेश्यम्। व्यासज्यवृत्तिधर्मे स्ववै० स्वाश्रयेतराप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्व–स्वाभावव्यापकत्वोभयसम्बन्धेन, व्याप्यता व्याप्यता च पर्याप्तिसम्बन्धेन, तथाच त्रित्वगतैकत्वविशिष्टत्वस्य वह्निधूमोभयत्वे विरहात्, स्वाश्रयेतराप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वसत्त्वेऽपि स्वावच्छिन्नाधिकरणे घटे त्रित्वाभावेति भेदस्य सत्त्वाद्व्यापकत्वं न स्यादिति। न च तथापि स्वकालीनवह्निधूमघटगतत्रित्वप्रतियोगिकपर्याप्तिमत्तासम्बन्धेनैव वह्निधूमोभयत्वविशिष्टस्य संयोगेन साध्यतायां व्यभिचारिणि अतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वमुक्तपरम्परासम्बन्धेन द्वित्वादिकमपेक्ष्य शुद्धपर्याप्तिसम्बन्धेन त्रित्वस्यैव कल्पनीयम्, तथाच त्रित्वगतैकत्वविशिष्टत्वस्य द्वित्वगतैकत्वे विरहात् द्वित्वगतैकत्वविशिष्टव्यासज्यवृत्तिधर्मत्रित्वादिकं तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवृत्तित्वघटितस्ववृत्तित्वसम्बन्धेन द्वित्वगतैकत्वे विरहान्न पारिभाषिकावच्छेदकं द्वित्वम्, अपि तु त्रित्वादिकमेव तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम्। व्यासज्यवृत्तिधर्मे स्ववै० स्वाश्रयेतराप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्व–स्वावच्छिन्नसामनैयत्योभयसम्बन्धेन, तथाच त्रित्वे द्वित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसत्त्वेऽपि द्वित्वसामनैयत्यविरहान्नातिव्याप्तिः। न च त्रित्वगतैकत्वविशिष्टव्यासज्यवृत्तिधर्मस्यैवाऽप्रसिद्धिः, त्रित्वे स्वाश्रयप्रतियोगिकपर्याप्त्यनुयोगिताऽनवच्छेदकत्वसत्त्वेऽपि स्वाश्रयसामनैयत्याविरहादुक्तस्थलेऽतिव्याप्तितादवस्थ्यमिति वाच्यम्। स्वविशिष्टव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वसम्बन्धेन स्ववृत्तित्वं निवेश्यम्, वै० उक्तद्वयसम्बन्धेन, तथाच द्वित्वगतैकत्वविशिष्टव्यासज्यवृत्तिधर्माऽप्रसिद्ध्या स्वपदेन तस्योपादातुमशक्यत्वाद् अन्यदेव धर्तुं शक्यते तादृशसम्बन्धावच्छिन्नप्रतियोगिताकद्वित्वगतैकत्वाभावस्य केवलान्वयितया नातिव्याप्तिः। अत्रेदं बोध्यम्। ननु यादृशव्यासज्यवृत्तिधर्मस्य यद्रूपाश्रयसामनैयत्यं तदाश्रयप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वविरहः यस्य तदाश्रयप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वं तस्य तदाश्रयसामनैयत्यविरहात्सद्धेताव्या-

कत्वं दुर्वारमिति वाच्यम्। स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्योक्तत्वात्। वह्नित्वपर्याप्त्यवच्छेदकीभूततत्तद्वह्नित्वावच्छेदेन यावत्त्वादेरपर्याप्तत्वात्। न चैवमनतिरिक्तवृत्तित्ववैयर्थ्यम्, वह्नित्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकतत्तद्वह्न्यन्यतरत्वादिकमादाय वह्नित्वस्यापि पारिभाषिकावच्छेदकत्वापत्तेरिति भावः। यावत्त्वादिकमिति। आदिना तार्णातार्णोभयत्वादिसंग्रहः। न तथेति। न वह्नित्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकमित्यर्थः।

---

प्तिः, किञ्च तादृशसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नाप्रतियोगित्वाऽप्रसिद्ध्या निवेशयितुमशक्यत्वादिति चेन्न। स्वविशिष्टव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववत्त्वसम्बन्धेन स्ववृत्तित्वं निवेश्यम्, विशेष्यत्वाभावश्च प्रमीयविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः, तथाच वह्निमान् धूमादित्यादौ घटत्वगतैकत्वविशिष्टत्वस्य घटत्वगतैकत्वे सत्त्वात् घटत्वगतैकत्वविशिष्टव्यासज्यवृत्तिधर्मघटगतयावत्त्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिवृत्तित्वस्य तत्राऽसत्त्वेन तत्सम्बन्धावच्छिन्नतादृशैकत्वप्रकारतानिरूपितविशेष्यत्वाभावस्य केवलान्वयित्वेन सर्वत्र लक्षणं सङ्गमनीयम्। तादृशसम्बन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितप्रमीयविशेष्यत्वाभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य निवेशे तु उक्तयुक्त्या द्वित्वादिविशिष्टस्य साध्यतायामतिव्याप्त्यापत्तेः, तादृशसम्बन्धावच्छिन्नद्वित्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाऽप्रसिद्धेरतः प्रमीयविशेष्यताप्रतियोगिकस्वरूपेण तादृशवृत्तित्वाभावो निवेश्य इति।

यावत्त्वादिकन्तु न तथेति शिरोमणिः। नन्वत्र स्वप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकान्यत्वरूपस्य स्वसमानवृत्तिकत्वस्योक्तावपि वह्निगतयावत्त्वावच्छिन्नाऽभावमादायाऽव्याप्तितादवस्थ्यमिति चेन्न। प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टो धर्मः पारिभाषिकावच्छेदकः, वै० स्वाभाववद्वृत्तित्व–स्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकूटवदन्यत्वस्वकालीनसाध्यवद्वृत्त्यभावीयप्रतियोगितावच्छेदकत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, कूटवत्ता च प्रतियोगितासम्बन्धेन, तथाच वह्निगतयावत्त्वे वह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूततत्तद्वह्नित्वावच्छिन्नानुयोगिताकपर्याप्तिकूटान्तर्गतवह्नित्वावच्छिन्नानुयोगिताकवह्निगतान्यतमत्वप्रतियोगिकपर्याप्तिमत्त्वस्याऽसत्त्वान्नाव्याप्तिः। नचैवं घटत्वस्यापि घटत्वसमानवृत्तिकत्वं न स्यात्तथाहि घटत्वे घटत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूततत्तद्घटत्वावच्छिन्नानुयोगिताकघटगताऽन्यतमत्वप्रतियोगिकपर्याप्तेरपि तादृशकूटान्तर्गततया तद्वृत्तित्वस्याऽसत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम्। स्वप्रतियोगिकपर्याप्तिवृत्तिउभयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदनुयोगिताकपर्याप्तिकूटवदन्यत्वमुभयसम्बन्धघटकं तद्घटत्वावच्छिन्नानुयोगिताकघटगतान्यतमत्वप्रतियोगिकपर्याप्तौ घटत्वप्रतियोगिकपर्याप्तिवृत्त्यु-

पर्याप्तिश्च अयमेको घटः इमौ द्वौ इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष एव ।

---

ननु पर्याप्तिः समवायः स च तार्णातार्णोभयत्वादावप्यक्षत एवेत्यत आह—पर्याप्तिश्चेति । अयमेको घट इति एकमात्रवृत्तिधर्मावच्छेदेन घटत्वस्य पर्याप्तिं दर्शयितुम्, इमौ द्वौ इति उभयवृत्तिधर्मावच्छेदेन द्वित्वस्य पर्याप्तिं दर्शयितुम्, अन्यथा द्वौ द्वित्ववानिति प्रतीत्योरविशेषप्रसङ्गादिति भावः । न चाऽयमेक इत्यादिप्रतीतेः समवायेनैवोपपत्तौ एकत्ववह्नित्वादेः पर्याप्तिसम्बन्धसत्त्वे मानाभावात्ताद्रूप्येण साध्यतायां व्यभि-

---

भयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदनुयोगिताकत्वविरहान्नाऽव्याप्तिः । न च कूटनिवेशनं व्यर्थमिति वाच्यम् । वह्नित्वप्रतियोगिकयावत्त्वावच्छिन्नानुयोगिताकपर्याप्तियावत्त्वावच्छिन्नानुयोगिताकयावत्त्वप्रतियोगिकपर्याप्त्योरैक्यात् यावत्त्वावच्छिन्नाभावमादायाऽव्याप्तितादवस्थ्यम्, तथाहि वह्नित्वप्रतियोगिकपर्याप्तिन्त्वुभयावृत्तिधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदनुयोगिताकपर्याप्तिमत्त्वस्य सत्त्वादेवोभयसम्बन्धासम्भवादव्याप्तेदुक्तम् । यदि च यावत्त्वावच्छिन्नानुयोगिताकयावत्त्वप्रतियोगिकत्वादनुयोगिताकयावत्त्वप्रतियोगिकपर्याप्त्योर्नैक्यम्, तदा कूटनिवेशो निष्फलः । नन्वेवं तत्तद्व्यक्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदकविशिष्टत्वस्य वह्नित्वे विरहाद्वह्निमान् धूमादित्यादौ व्याप्तिर्न स्यादतोऽनतिरिक्तवृत्तित्वनिवेशनं व्यर्थमिति वाच्यम् । एतल्लक्षणेन तत् । अत एव वह्निधूमोभयवान् वह्नेरित्यादौ नातिव्याप्तिः, प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वविशिष्टत्वस्य साध्यतावच्छेदके सत्त्वात्, धूमत्वे स्वकालीनसाध्यवद्वृत्त्यभावीयप्रतियोगितावच्छेदकत्वविरहादवोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदसत्त्वादिति ।

**एकमात्रवृत्तिधर्मावच्छेदेनेति** । अनेकावृत्तिधर्मावच्छेदेनेति तदर्थः । उभयवृत्तिधर्मावच्छेदेनेति सावधारणम्, अनेकाऽवृत्तिधर्मानवच्छिन्नत्वे सति उभयवृत्तिधर्मावच्छिन्नेति तदर्थः । अन्यथा—पर्याप्त्यनङ्गीकारे । **अविशेषप्रसङ्गादिति** । इदमुपलक्षणम् । तथासति द्वौ घटः अयं द्वौ इत्यादिप्रतीतेरप्यापत्तेः, द्वयं घटत्ववद् अयं द्वित्ववानित्यादिप्रतीत्यनुरोधेन द्वित्वेदन्त्वादेरपि घटत्वद्वित्वादिसमवायाऽवच्छेदकत्वस्याऽऽवश्यकत्वात् । न चोक्तप्रतीतेर्द्वित्वेदन्त्वादिसामानाधिकरण्येन घटत्वद्वित्वादिसमवायावगाहित्वस्यैवाऽभ्युपगमेनोक्तरीत्याऽवच्छेदकत्वावगाहित्वमेवाऽसिद्धमिति वाच्यम् । शाखी संयोगवानित्यादिप्रतीतेः शाखादौ संयोगसमवायाद्यवच्छेदकत्वावगाहित्वेन तत्तुल्याया एतत्प्रतीतेरप्यवच्छेदकत्वस्यैवौचित्यात्, प्रतीतिमात्रस्यैव सामानाधिकरण्यावगाहित्वाभ्युपगमसम्भवेनाऽवच्छेदकत्वावगाहिप्रतीतेरुच्छेदप्रसङ्गाच्च । न च समवायातिरिक्तपर्याप्तेरङ्गीकारेऽपि उक्तापत्तिर्दुर्वारा द्वित्वेदन्त्वादेर्घटत्वद्वित्वादिपर्याप्त्यवच्छेदकत्वे बाधकाभावादिति वाच्यम् ।

त्रित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः ।

---

चारिण्यतिव्याप्तिरिति वाच्यम् । इदन्त्वावच्छिन्ने एव वह्नित्वमेकत्वं च पर्याप्तं न तु द्वित्वमित्याद्यनुभवादेव तदभ्युपगमादिति भावः ।

व्यासज्यवृत्तित्वतदन्यत्वाऽन्यतररूपेणैव स्वसमानवृत्तिकत्वोक्त्याऽपि वह्नित्वादिवारणसंभवे स्वपर्याप्तीत्यादिपर्यन्ताऽनुधावनस्य प्रयोजनमाह त्रित्वादिकमिति । तथाच धूमवन्निष्ठाभावप्रतियोगितावच्छेदकस्य

---

घटत्वादिनिरूपितायास्तस्याः एकमात्रवृत्तिधर्मावच्छिन्नत्वस्य, द्वित्वादिनिरूपितायाश्चोभयादिवृत्तिधर्मावच्छिन्नत्वस्यैव धर्मिग्राहकमानसिद्धत्वात् , प्रत्येकघटव्यक्तिघटद्वयादिव्यक्तिस्वरूपायास्तस्या द्वित्वेदन्त्वादेरतिप्रसक्ततया न्यूनवृत्तितया चाऽवच्छेदकत्वाऽसम्भवाच्च । न चोक्तप्रतीतेरापादकाऽभावः, असंसर्गाऽग्रहादेरेवाऽऽपादकत्वात् । न चाऽसंसर्गाऽग्रहादिसत्त्वे भ्रमात्मकतादृशप्रतीतापत्तिरिति वाच्यम् । तस्याः फलतः प्रमात्वस्यैवाऽऽपाद्यत्वात् । एतेन विशेष्यतावच्छेदकतासम्बन्धेन घटत्वद्वित्वादिमत्ताबुद्धिं प्रति विषयतासम्बन्धेन इदन्त्वद्वित्वाद्युपस्थितेर्हेतुत्वस्य कल्पनान्नोक्तापत्तिरित्यपि निरस्तम् । केचित्तु घटत्वमेकस्मिन् पर्याप्तम् , द्वित्वन्तु द्वयोरेव पर्याप्तमित्यादिप्रतीत्या घटत्वादिपर्याप्तेरेकमात्रवृत्तिधर्मावच्छिन्नाया द्वित्वादिपर्याप्तेरुभयवृत्तिधर्मावच्छिन्नत्वमात्राऽऽक्रान्तायाश्च सिद्धिरित्याहुः ।

अन्येतु एकगोदानेन सहस्रगोदानजन्यफलस्याऽनुत्पादात्तत्कारणतावच्छेदकतयाऽतिरिक्तपर्याप्तिसिद्धिः । प्रत्येकगोदानवृत्तिधर्मसहस्रस्य दण्डत्वचक्रत्वादिवत्कारणतावच्छेदकत्वकल्पनेऽतिगौरवादिति प्राहुः । एतेनाऽयमेको घट इत्यादिप्रतीतेः समवायविषयकत्वेनैवोपपत्तौ घटत्वादेः पर्याप्त्याख्यस्वरूपसम्बन्धे मानाभावः । एको द्वावित्यादिप्रतीत्यापत्तिस्तु पर्याप्तिस्वीकारेऽपि दुर्वारा, प्रत्येकाऽवृत्तिधर्मस्य समुदायाऽवृत्तित्वनियमेन द्वित्वादिस्वरूपायास्तस्याः प्रत्येकमपि सत्त्वात् , अतिरिक्तत्वे च मानाभावात् । अस्तु वा तादृशी प्रतीतिः एकत्वादौ द्वित्वाद्यवच्छेदकत्वाभावादेव वा न तादृशप्रतीतिः, एकत्वादिकं धर्मितावच्छेदकीकृत्य तादृशप्रतीतेरापादकाभावश्च । वस्तुतस्तु समवायैक्यपक्षे यथा समवायो न वायौ रूपादीनां सम्बन्धोऽपि तु पृथिव्यादावेव, तथा समवायो नैकैकस्मिन् द्वित्वादिसम्बन्धः किन्तु मिलित एव यथा भवतामतिरिक्ता पर्याप्तिः, तथाच एको द्वौ इति प्रतीत्यापत्तिवारणं सुकरमेवेति किं पर्याप्त्यङ्गीकारेणेत्यादिकं बहूनां बहुतरंप्रलपितमपास्तम् ।

अत एव सम्बन्धावच्छेदकस्य सम्बन्ध्यवच्छेदकत्वनियमेन स्वावच्छेदकावच्छिन्नवृत्तिकत्वमेवाऽत्र स्वसमानवृत्तिकत्वमुचितमित्यपि निरस्तम् । समवायेनाऽवच्छेदकत्वमादाय यावत्त्वादौ वह्नित्वादिसमानवृत्तिकत्वस्य दुर्वारत्वादधिकमन्यतोऽवसेयमिति दिक् ।

अन्यतररूपेणैवेति । तन्निवेशश्च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टो यो धर्मः स पारिभाषिकावच्छेदकः, वै० स्वाभाववद्वृत्तित्व–स्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च स्वसाजात्यसम्बन्धेन, साजात्यं च व्यासज्यवृत्तित्वतदन्यत्वाऽन्यतररूपे-

वह्निधूमघटत्रितयत्वस्य व्यासज्यवृत्तितया स्वसमानवृत्तिकस्य तस्यैव नाऽतिरिक्तवृत्तित्वं वह्निधूमोभयत्वस्यापीति ताद्रूप्येण स्वसमानवृत्तिकत्वोक्तौ वह्निधूमोभयवान् धूमादित्यादावेव व्याप्तिलक्षणाऽव्याप्तिः स्यादिति भावः ।

---

णेति । अथ व्यासज्यवृत्तित्वमेकत्वानवच्छिन्नानुयोगिताकपर्याप्तिकत्वम् , तथाच हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य वह्निधूमघटगतत्रित्वस्योभयत्वनिष्ठ"एकत्वानवच्छिन्नानुयोगिताक"द्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वरूपव्यासज्यवृत्तित्वविरहेण कथं तत्समानवृत्तिकत्वम् , एवं स्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतासम्बन्धेन द्रव्यत्वसत्तागतद्वित्वविशिष्टस्य संयोगेन साध्यतायां व्यभिचारिणि अतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवाद्द्रव्यत्वे कल्पनीयम् , तथाच द्रव्यत्वे उक्तव्यासज्यवृत्तित्वविरहात् तदन्यत्वस्य सत्त्वात् साध्यतावच्छेदके व्यासज्यवृत्तित्वसत्त्वेनाऽन्यतररूपेण साजात्यविरहात्तादृशपारिभाषिकावच्छेदकं द्रव्यत्वं तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वात् । न चाऽत्र द्रव्यगतयावत्त्वावच्छिन्नाभावमादाय नातिव्याप्तिरिति वाच्यम् । एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वद्रव्यत्वसत्तागतद्वित्वनिष्ठप्रतियोगित्वयोर्भेदेनोक्तरूपेणाऽत्रापि साजात्यविरहादतिव्याप्तितादवस्थ्यमिति चेन्न । व्यासज्यवृत्तिमत्र नैकत्वानवच्छिन्नानुयोगिताकपर्याप्तिकत्वम्, तथासति वह्निधूमोभयानुयोगिकसमवायेन वह्निधूमघटगतत्रित्वविशिष्टस्य साध्यतायां वह्निहेतावतिव्याप्त्यापत्तेः, किन्तु एकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकान्यत्वमेव तत् , तथाचोक्तस्थले द्रव्यत्वसत्तागतद्वित्वस्य द्रव्यगतयावत्त्वस्य चैतादृशव्यासज्यवृत्तित्ववत्त्वेन नातिव्याप्तिः । न चैवमपि यत्र स्वकालीनतद्घटत्वद्रव्यत्वोभयप्रतियोगिकपर्याप्तिमत्तासम्बन्धेन द्रव्यत्वतद्घटत्वोभयत्वविशिष्टस्य संयोगेन साध्यता वाच्यत्वस्य हेतुता तत्रातिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवात्तद्व्यक्तित्वे कल्पनीयम् , तादृशतद्व्यक्तित्वविशिष्टत्वस्य साध्यतावच्छेदके विरहादुक्तव्यासज्यवृत्तित्वस्य साध्यतावच्छेदके सत्त्वेऽपि तद्व्यक्तित्वे विरहादिति वाच्यम् । तद्घटतदन्यघटगतयावत्त्वावच्छिन्नाभावमादाय नातिव्याप्तिः । एवं च तादृशत्रित्वस्यापि द्वित्वसमानवृत्तिकत्वं द्वित्वस्यापि च त्रित्वसमानवृत्तिकत्वमित्यव्याप्तेः संगतिः, अतिव्याप्तेश्च वारणं सुघटमिति । नचैवं स्वपर्याप्त्यवच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्नपर्याप्तिकत्वरूपस्वसमानवृत्तिकत्वोक्तावपि वह्निधूमघटवान् वह्नेरित्यत्राऽतिव्याप्तिर्दुरुद्धरैवेति वाच्यम् । उत्तरस्योक्तप्रायत्वात् । तच्च स्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वस्यैव विवक्षितत्वात् । एवं च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्याऽयोगोलकाऽवृत्तित्वस्य स्वसमानवृत्तिकस्याऽनतिरिक्तवृत्तित्वं वह्निधूमघटगतत्रित्वरूपसाध्यतावच्छेदकस्येति नातिव्याप्तिरिति ।

अथ महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिरिति चेन्न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टरूपवद्भिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम् , वै० स्ववृत्तित्व-स्ववृत्तिनिरूपकत्वा-

भाक्व्याप्यधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिधर्ममात्रावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वोभयसम्बन्धेन, स्ववृत्तित्वं च साजात्यसंबंधेन, साजात्यं च एकत्वावच्छिन्नानुयोगिताकपर्याप्तीयप्रतियोगिताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितनवच्छेदकत्वतदन्यत्वान्यतररूपेण, वै०स्वानवच्छेदकानवच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेन, तथाच महानसीयत्ववह्नित्वगतद्वित्वविशिष्टत्वं न वह्नित्वगतैकत्वे स्ववृत्तिनिरूपकत्वाभाववव्याप्यो यः पर्वतीयत्वादिः तदवच्छिन्नानुयोगित कपर्याप्तिप्रतियोगि यद्वह्नित्वादिकं तदवच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वविरहान्नाव्याप्तिः । एवंरीत्या व्यभिचारिण्यपि नातिव्याप्तिः । अत्र स्वसामानाधिकरण्यानुपादाने तार्णातार्णोभयाभावमादायाव्याप्तितादवस्थात् घटगतैकत्ववाच्छिन्नानुयोगिताकपर्याप्तीया या प्रतियोगिता सा घटत्वनिष्ठा प्रतियोगिता तद्विशिष्टतार्णातार्णोभयत्वनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्योक्तोभयत्वगतैकत्वे विरहेण तदन्यत्वस्य वह्नित्वगतैकत्वे तार्णातार्णोभयत्वगतैकत्वे च सत्त्वात्, उभयत्वस्य स्वरूपतो भानस्वीकारादिति । स्वानवच्छेदकानवच्छिन्नत्वानुपादाने घटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताविशिष्टप्रमेयत्वावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्योक्तोभयत्वगतैकत्वे विरहेण तदन्यत्वस्य वह्नित्वगतैकत्वे तार्णातार्णोभयत्वगतैकत्वे च सत्त्वेन तादृशद्वित्वगतैकत्वविशिष्टवह्नित्वगतैकत्वमादाय तार्णातार्णोभयाभावमादाय च वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः । ननु वह्निमान् धूमादित्यादौ तार्णातार्णोभयाभावमादायाऽव्याप्तितादवस्थ्यम्, तादृशद्वित्वगतैकत्वविशिष्टत्वस्य वह्नित्वगतैकत्वेऽपि सत्त्वात् घटवृत्तित्वविशिष्टैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिताविशिष्टा या घटत्वनिष्ठावच्छेदकता तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य वह्नित्वगतैकत्वे तार्णातार्णोभयत्वगतैकत्वे च सत्त्वेन साजात्यसत्त्वादिति चेन्न । एकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या एकत्वनिष्ठावच्छेदकता तन्निरूपितानुयोगिताकपर्याप्तीयप्रतियोगितापि धार्या इति सामान्याभावविरहान्नाऽव्याप्तिः ।

ननु एकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकान्यत्वरूपव्यासज्यवृत्तित्वनिवेशे महानसीयवह्न्यभावप्रतियोगितावच्छेदकतावद्वान् द्रव्यत्वादित्यादौ साध्याभावप्रतियोगितावच्छेदकत्वस्य लाघवान्महानसीयत्ववह्नित्वगतद्वित्वे स्वीकारात्तादृशद्वित्वे व्यासज्यवृत्तित्वसत्त्वेऽपि महानसीयवह्न्यभावप्रतियोगितावच्छेदकतायां तदवच्छेदकतात्वेन व्यासज्यवृत्तित्वविरहाद् वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकमहानसीयवह्न्यभावप्रतियोगितावच्छेदकतानिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोगित्वस्य तत्र सत्त्वादिति चेन्न । एकत्वानवच्छिन्नपर्याप्तिप्रतियोगि यद्यत्तावदन्यतमत्वतद्भिन्नत्वान्यतररूपेण साजात्यविवक्षणात्, तथाचैकत्वानवच्छिन्नपर्याप्तीया या प्रतियोगिता सा महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिता तादृशप्रतियोगित्वस्य तादृशाऽवच्छेदकतायां सत्त्वेन तावदन्यतमत्वसत्त्वान्नालक्षणसमन्वयः । तन्निवेशश्च एकत्वानवच्छिन्नानुयोगिताकपर्याप्तियप्रतियोगित्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिकूटत्वावच्छिन्नावच्छे-

यद्यपि तार्णातार्णोभयत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकताघटकसम्बन्धः पर्याप्तिरेव, न तु समवायः तार्णमात्रसत्त्वेऽपि तार्णातार्णोभयं नास्तीतिप्रतीतेः, तथाच प्रतियोगितावच्छेदकताघटकपर्याप्तिसम्बन्धेन तादृशोभयत्वाद्यभाववति प्रत्येकवह्नौ वृत्तिमत्त्वादेव वह्नित्वादेरवच्छेदकत्वाऽसंभवात्स्वसमानवृत्तिकेति व्यर्थम्। तथापि प्रत्येकवह्नौ पर्याप्तिसम्बन्धेनाऽपि न तार्णातार्णोभयत्वादेरभावः किन्तु घटादावेव, अन्यथा तत्सम्बन्धेन प्रत्येकाऽवृत्तिधर्मस्य तत्सम्बन्धेन समुदायाऽवृत्तित्वानियमात्, उभयत्रैव प्रत्येकं द्वित्वाभावसत्त्वादिमौ न द्वौ इति प्रतीत्यापत्तेः।

न चैवमयं द्वौ इत्यपि प्रत्यक्षप्रतीतिः प्रमा स्यात्, एकव्यक्तावपि द्वित्वस्य पर्याप्तिसम्बन्धेन सत्त्वादिति वाच्यम्। मूलावच्छिन्नो वृक्षः कपिसं-

---

दकताकप्रतियोगिताकभेदवत्त्वतदन्यत्वाऽन्यतररूपेणेति ध्येयम्।

तार्णमात्रसत्त्वेऽपीति। तादृशप्रतीतौ समवायस्य प्रतियोगितावच्छेदकतावच्छेदकतया भाने तु प्रतियोगितावच्छेदकतानियामकसमवायेन द्वित्वावच्छिन्नस्य प्रत्येकप्रतियोगिनः सत्त्वेन तार्णातार्णोभयं नास्तीति प्रतीतिर्न स्यात्, अभावस्य प्रतियोगितावच्छेदकतानियामकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिना समं विरोधादिति। तथाच— पर्याप्तिरेव तादृशाभावप्रतियोगितावच्छेदकतानियामकत्वे च। तादृशोभयत्वाद्यभाववति— प्रत्येकवृत्तिधर्मावच्छेदेन तार्णातार्णोभयत्वाभाववति। प्रत्येकवह्नावित्ति। तथाच पर्याप्तिसम्बन्धेन तार्णातार्णोभयत्वस्याऽभाववति वह्निभिन्ने वह्नित्वस्याऽवृत्तितया वह्नित्वस्याऽवच्छेदकत्ववारणाय स्वसमानवृत्तिकत्वमवच्छेदकविशेषणमिति भावः। अन्यथा—प्रत्येकस्मिन् पर्याप्तिसम्बन्धेन द्वित्वस्याऽभावे। नियमादिति। अत्रेयमाशंका। उभयत्वे उभयनिरूपितवृत्तित्वसत्त्वे प्रत्येकनिरूपितवृत्तित्वस्यापि सत्त्वात्कथं प्रत्येकाऽवृत्तित्वम्। न च प्रत्येकवृत्तिधर्मावच्छिन्ननिरूपकताकवृत्तित्वाभावहेतुना उभयत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावः साधनीयः, उभयत्वे निरुक्तहेतोः सत्त्वादिति वाच्यम्। स्वमते उभयत्वे निरुक्तहेतोः सत्त्वेन उभयाऽवृत्तित्वस्याऽऽपत्त्या तद्धेतोरप्रयोजकत्वमावश्यकमिति। तत्र समाधिः। यदेकत्वावच्छेदेन यदभाववत् तत् तदुभयत्वावच्छेदेन तदभाववदिति व्याप्त्या उभयत्वावच्छेदेनाऽप्युभयाऽभावप्रसङ्गात्। न च दृष्टान्ताऽसिद्धिः। व्यतिरेकेण दृष्टान्तत्वादिति ध्येयम्। प्रत्येकमिति। प्रत्येकवृत्तिधर्मावच्छेदेनेत्यर्थः। प्रतीत्यापत्तेरिति। न च तादृशप्रतीतौ तदुभयत्वावच्छेदेन द्वित्ववत्ताज्ञानं विरोधीति वाच्यम्। तदुभयत्वे स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिद्वित्ववत्ताज्ञानस्य तदवगाहितादृशप्रतीतिं प्रत्येव ग्राह्याभावावगाहितया प्रतिबंधकतया तदुभयत्वेऽनतिरिक्तवृत्तित्वावगाहितादृशप्रतीत्युत्पत्तौ बाधकाभावात्, स्वातन्त्र्येण विरोधित्वकल्पनापेक्षया प्रत्येकस्मिन् द्वित्वाभावानभ्युपगमे एव लाघवात्। ननु एको न द्वौ इति प्रतीतिरन्यथानुपपत्त्या प्रत्येकं द्वित्वाभावाभ्युपगमस्याऽऽवश्यकत्वे तादृशविरोधित्वकल्पनप्रयुक्तगौरवस्य प्रामाणिकत्वेन तदकल्पनप्रयुक्तलाघवमकिंचित्करमित्याशयेनाऽशङ्कते न चेति। एवं—प्रत्येकस्मिन्नपि द्वित्वाभावा-

योगीत्यादिप्रतीतेर्मूलावच्छेद्यसमवायेन कपिसंयोगाद्यवगाहित्ववत् उक्तप्रतीतेरपीदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेनैव द्वित्वावगाहितया प्रमात्वाऽयोगात्, एकव्यक्तेरिदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन द्वित्वरहितत्वात्। अत एवाऽयं न द्वौ इत्यादिप्रतीतेः प्रमात्वमुपपद्यते, इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन यो द्वित्वस्याऽभावस्तद्वति तदवगाहित्वात्। न चेदन्त्वावच्छेद्यपर्याप्त्यप्रसिद्धिः। एकत्ववह्नित्वादौ तत्सौलभ्यात्। एकत्वं वह्नित्वं चेदन्त्वावच्छिन्ने पर्याप्तम्, नतु द्वित्वादिकमित्यनुभवस्य सर्वसिद्धत्वात्।

न चैकस्य द्वित्वपर्याप्त्याधिकरणत्वे घटद्वयशून्येऽपि गृहादौ अत्र घटौ इति प्रतीतिः प्रमा स्यादिति वाच्यम्। तद्गृहनिष्ठे घटे घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वविरहात्, घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वावगाहिन्याः प्रोक्तप्रतीतेर्भ्रमत्वात्। अत एव घटौ न तद्गृहनिष्ठौ इत्याकारकधीस्तत्र प्रमा, तद्गृहस्थितस्यापि घटस्य घटद्वयत्वावच्छेदेन तन्निष्ठत्वाभावसम्भवात्। घटपटयोर्न घटत्वमित्यादिप्रतीतेः प्रमात्वानुरोधेन व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकस्य प्रतियोगिमत्यपि तदभावस्य सर्वसम्मतत्वात्। न च घटत्वादौ घटपटोभयवृत्तित्वाभाव एवोक्तप्रतीतिविषयः सामा(१)न्यघटयोर्न समवायेन घटत्वमित्यादौ सामान्यघटोभयसमवेतत्वाऽप्रसिद्ध्या तदभावस्य भानाऽसंभवादिति सम्प्रदायविदः।

परे तु तदनतिरिक्तवृत्तित्वमत्र न तदभाववदवृत्तित्वम्, तथासति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं प्रत्येकं तदभाववान् वह्निर्धूमश्चेति तदुभयवृत्तित्वस्यैव वह्निधूमोभयत्वे सत्त्वात्तद्रूपेण साध्यतायां वह्न्यादिहेतावतिव्याप्त्यापत्तेः, किन्तु तादृशप्रतियोगितावच्छेदकवती यावती व्यक्तिः तद्भेदकूटवदवृत्तित्वमेव तथात्वं वाच्यम्, तथाच वह्निमान् धूमादित्यत्राऽव्याप्तिरेव, तादृशावच्छेदकीभूतं यत्तार्णतार्णोभयत्वादिकं तद्वतो निखिलवह्नेः प्रत्येकभेदकूटवति वह्नित्वस्याऽवृत्तेरतः स्वसमानवृत्तिकत्वं देयमेवेति वदन्ति। तत्तुच्छम्। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् धूमत्वं तदभाववति पर्याप्तिसम्बन्धेन वह्निधूमोभयत्वस्याऽवृत्तित्वादेव तद्रूपेण साध्यतायां वह्निहेतावतिव्याप्त्यभावाद् भेदकूटनिवेशव्यर्थतापातादिति।

---

नभ्युपगमे। सम्प्रदायविद इत्यस्वरसः, तद्बीजन्तु प्रत्येकस्मिन् पर्याप्तिसम्बन्धेन द्वित्वाभावानभ्युपगमे स्वसमानवृत्तिकत्वस्याऽवच्छेदकविशेषणतयोपादानेऽपि वह्नित्वस्याऽवच्छेदकत्वं

---

(१) ननु समवायसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेन तदभाव एव उक्तप्रतीतेर्विषयः इति किमनुरोधेन व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावसिद्धिरिति चेन्न। विशेषरूपेण संसर्गतानभ्युपगमादिति।

केचित्तु तार्णातार्णोभयं नास्तीति प्रतीतौ प्रतियोगितावच्छेदकतानिर्वाहकः (१)समवाय एव सम्बन्धो भासते न तु पर्याप्तिः । दण्डिगुरुत्वाश्रयस्य सत्त्वेऽपि तदवच्छिन्नाभाववत्ताद्दशोभयत्वाश्रयस्यं तार्णमात्रस्य सत्त्वेऽपि तादृशोभयत्वावच्छिन्नाभावो न विरुद्धः, तदवच्छिन्नाधिकरणतया सार्धमेव तस्य विरोधात् । एवं च यथाश्रुतमेव सम्यगित्याहुः । तच्चिन्त्यम् । समवायेन तद्वतोऽधिकरणे तदवच्छिन्नाऽनधिकरणत्वस्याऽसम्भवात् ।

वस्तुतस्तु समवायेन प्रमेय(२)साध्यके भावत्वादिहेतौ अतिव्याप्तिवारणार्थमवश्यं प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमित्यस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदन्यूनवृत्ति तत्त्वमित्यर्थो वाच्यः । तत्राऽन्यूनवृत्तित्वं न प्रतियोगितावच्छेदकताघटकसम्बन्धेन वाच्यम्, वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तेः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं तस्य तादृशपर्याप्त्यधिकरणं यद्वह्निधूमोभयं तत्प्रत्येकनिष्ठस्य पर्याप्तिसम्बन्धावच्छिन्नाभावस्य प्रतियोगित्वेन वह्निधूमोभयत्वादिकं प्रति न्यूनवृत्तित्वात्, किन्तु स्वावच्छिन्नप्रतियोगित्वसम्बन्धेनैव तथात्वं

दुर्वारम्, प्रत्येकस्मिन् पर्याप्तिद्वित्वादेरभावस्येव द्वित्वादिपर्याप्तेरप्यभावस्याऽसत्त्वेन द्वित्वादेरपि वह्नित्वपर्याप्त्यधिकरणपर्याप्तत्वरूपस्वसमानवृत्तिकत्वस्याऽनपायात् । न च प्रत्येकस्मिन् पर्याप्तिसम्बन्धेन द्वित्वादेरभावस्याऽसत्त्वेऽपि द्वित्वादिपर्याप्तेरभावस्य सत्त्वाभ्युपगमान्न दोष इति वाच्यम् । तत्र तत्सम्बन्धस्याऽभावे तेन सम्बन्धेन सम्बन्धिनः सत्त्वाभ्युपगमस्याऽसम्भवादिति । तदवच्छिन्नानधिकरणत्वस्याऽसम्भवादिति । प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतयैवाऽभावस्य विरोधे प्रत्येकाधिकरणे द्वित्वावच्छिन्नाभाववत् प्रत्येकं द्वित्वाभाववत्त्वेऽपि बाधकाभावेन वह्नित्वादेरवच्छेदकत्वापत्तेरभावाद् व्यर्थमेव स्वसमानवृत्तिकत्वविशेषणं स्यादित्यपि बोध्यम् । वस्तुतस्त्विति । यदन्यूनवृत्तीति । यद्व्यापकमित्यर्थः । तथात्वं—व्यापकत्वम् । अथात्र वह्निमान् धूमादित्यादावव्याप्तिः, घटत्वाधिकरणवृत्तित्वावच्छिन्नप्रतियोगित्वसम्बन्धेन पटत्वाभावप्रतियोगितावच्छेदकत्वस्य समवाये स्वीकारादुक्तसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्धेरिति चेन्न । प्रतियोगितावच्छेदकसम्बन्धे गुरुत्वग्रहस्याऽप्रतिबन्धकत्वात् । अथवा प्रतियोगितात्वेनैव संसर्गत्वम् प्रतियोगित्वांशेऽवच्छेदकतानिरूपकत्वनियामकमिति समवायस्य प्रतियोगितावच्छेदकत्वेन लाघवमिति ध्येयम् । अनुगमस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टो यो धर्मः स एव पारिभा-

(१) हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवद् यद्धर्माधिकरणनिष्ठाधिकरणतानवच्छेदकं तत्पारिभाषिकावच्छेदकमिति । तेन प्रमेयस्य संयोगेन साध्यतायां वाच्यत्वादिहेतौ तत्प्रतियोगिकभेदकूटस्याप्रसिद्धावपि नातिव्याप्तिरिति ध्येयम् ।

(२) तादृशाभावप्रतियोगितावच्छेदकस्य प्रमेयत्वस्य प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेनाभाववति सामान्यादौ साध्यतावच्छेदकताघटकसम्बन्धेन समवायेन वृत्तेरप्रसिद्ध्या उदासीनाभावमादायातिव्याप्तिः ।

वाच्यम् , तथाच वह्निनिष्ठयावत्त्वतार्णातार्णोभयत्वादेरपि स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वह्नित्वादिकं प्रत्यन्यूनवृत्तित्वाद् वह्निमान् धूमादित्यादौ वह्नित्वादेरवच्छेदकत्ववारणाय स्वसमानवृत्तिकत्वेनाऽवच्छेदकं विशेषणीयमिति युक्तमुत्पश्यामः ।

---

षिकावच्छेदकः । तदन्यत्वं साध्यतावच्छेदके निवेश्यम् । वै० स्ववृत्तित्व–स्वनिष्ठोभयाऽवृत्तिधर्मावच्छिन्नप्रतियोगिता"काभाववद्वृत्तित्व"सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । वृत्तित्वं च स्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकत्वसम्बन्धेन । वह्निधूमोभयाभावमादायाऽव्याप्तिवारणाय प्रथमसम्बन्धप्रवेशः । तद्व्यक्त्यभावमादायाऽव्याप्तिवारणाय द्वितीयसम्बन्धप्रवेशः । अभावीयप्रतियोगिता च अवच्छेदकताविशिष्टान्या ग्राह्या , वै० स्वनिरूपितत्व–स्वभिन्नाऽवच्छेदकत्वानिरूपितत्वोभयसम्बन्धेन । तेन महानसीयवह्न्यभावमादाय नाव्याप्तिः । नव्यास्तु हेतुसमानाधिकरणाभावविशिष्टान्यत्वं साध्यतावच्छेदके निवेश्यम् । वै० स्वनिरूपितप्रतियोगितावच्छेदकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वीयप्रतियोगितावच्छेदकत्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । प्रथमभेदप्रतियोगितावच्छेदकत्वं च स्वाश्रयपर्याप्त्यवच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकत्वसम्बन्धेन । स्वं घटाभावादिगतं कत्वम् । द्वितीयसम्बन्धप्रविष्टाऽवच्छेदकत्वाभावश्च स्वनिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकः । स्वं अवच्छेदकता । वृत्तित्वं च स्वावच्छिन्नपर्याप्तिकावच्छेदकतानिरूपकतासम्बन्धेनेति प्राहुः ।

गुरुचरणास्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टो यो धर्मः स पारिभाषिकावच्छेदकः । वै० आधेयतासम्बन्धेन । सा च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धावच्छिन्ना । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकता च प्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्त्यवच्छिन्नभेदकूटवत्त्व–स्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्नपर्याप्तिकान्यत्वोभयसम्बन्धेन । स्वं परिभाषिकावच्छेदकत्वेनाभिमतम् । प्रथमसम्बन्धघटकभेदप्रतियोगितावच्छेदकता च स्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नेति ।

अथात्र व्याप्यत्वं व्यापकत्वं च यदि यत्किञ्चित्सम्बन्धेनोच्यते तदा वह्निमान् धूमादित्यादावव्याप्तिः, घटत्वस्याऽपि वह्नित्वव्यापकत्वात् कालिकेन वह्नित्वाधिकरणे तद्व्यक्तौ कालिकेन तद्व्यक्त्यसमानकालनिव्यक्त्यभावस्य प्राप्ततया तदप्रतियोगित्वस्य घटत्वादौ सत्वात् , सम्बन्धसामान्येनोक्तौ तु उक्तयुक्त्यैव वह्निमान् धूमादित्यादावव्याप्तिः, अतो व्याप्यत्वं साध्यतावच्छेदकताघटकसम्बन्धेन व्यापकत्वं च प्रतियोगितावच्छेदकताघटकसम्बन्धेन वाच्यम् । न च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां सद्धेतौ घटत्वस्यापि घटत्वव्यापकत्वाऽसम्भवात् तेन सम्बन्धेन घटत्वाधिकरणाऽप्रसिद्धेरव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य पर्याप्त्यनिवेशेन शुद्धसमवायेन घटत्वे घटत्व-

व्यापकत्वसम्भवात्तेन सम्बन्धेन घटत्वस्याधिकरणताप्रसिद्धेरव्याप्त्यभावादिति चेन्न। तद्वह्न्य-
नुयोगिककालिकेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां सद्धेतौ पारिभाषिकाऽवच्छेदकाऽप्रसि-
द्ध्याऽव्याप्तिरिति साध्यतावच्छेदकताघटकसम्बन्धे पर्याप्तिनिवेशस्याऽऽवश्यकत्वाद् वह्नित्व-
प्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थलेऽव्याप्तितादवस्थ्यमतो व्याप्यत्वमपि प्रतियोगि-
तावच्छेदकताघटकसम्बन्धेनैव निवेश्यम्, तथाच धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादा-
वतिव्याप्तिः। न च धूमगताऽन्यतमत्वावच्छिन्नाभावमादाय नातिव्याप्तिरिति वाच्यम्। तादा-
त्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां व्यभिचारिणि अतिव्याप्तिः, तत्र साध्याभावप्रतियो-
गितावच्छेदकत्वं लाघवाद् धूमत्वे कल्पनीयम्, प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन
धूमपरमाणौ धूमत्वस्याऽसत्त्वाद् धूमस्य पारिभाषिकावच्छेदकत्वानुपपत्तेरिति चेन्न। तादा-
त्म्येन तद्धूमव्यक्तिविशिष्टस्य संयोगेनाऽभावस्य लक्षणघटकतया चालनीन्यायेन सकल-
धूमव्यक्तौ धूमत्वसत्त्वात्, तत्र च तत्तद्धूमव्यापकत्वसत्त्वाद्धूमत्वस्यैव पारिभाषिकावच्छे-
दकत्वान्नातिव्याप्तिः, तद्व्यक्तेः स्वरूपतो भानस्वीकारात्तदभावप्रतियोगितावच्छेदकत्वस्य स्व-
रूपतस्तद्धूमव्यक्तौ सत्त्वात्। न च तादात्म्येन वह्निविशिष्टस्य संयोगेन साध्यतायां सद्धे-
तावव्याप्त्यापत्तिः, तत्र तादात्म्येन तद्वह्निव्यक्तिविशिष्टस्य संयोगेनाऽभावप्रतियोगितावच्छेद-
कत्वस्य चालनीन्यायेन सकलवह्निव्यक्तौ सत्त्वेन तत्र च सकलवह्निव्यापकत्वस्य तादात्म्येन
सत्त्वात्तद्द्वयोरपि पारिभाषिकावच्छेदकत्वादिति वाच्यम्। तत्र समवायेन वह्नित्वस्यैव साध्य-
तावच्छेदकत्वात्। तथा चोक्ततद्व्यक्त्यवच्छिन्नाभावप्रतियोगितावच्छेदकतद्व्यक्तौ तद्व्यक्ति-
व्यापकत्वसत्त्वेन तस्य पारिभाषिकावच्छेदकत्वेऽपि तदन्यत्वस्य वह्नित्वे सत्त्वान्नाऽव्याप्ति-
रिति। न च तद्व्यक्त्यनुयोगिकस्वरूपेण मेयत्वविशिष्टस्य संयोगेन साध्यतायां व्यभिचारि-
ण्यतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवात्स्वरूपसम्बन्धेन तद्व्यक्तित्व-
स्यैव कल्पनीयम्, तथाच हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताघटकस्वरूपसम्बन्धेन प्रमे-
यत्वव्यापकत्वाभावेन तादृशपारिभाषिकावच्छेदकं तद्व्यक्तित्वमेव तदन्यत्वस्य प्रमेयत्वे
सत्त्वादिति वाच्यम्। तत्र प्रमेयत्वविषयकतद्व्यक्तिविषयकसमूहालम्बनज्ञानानुयोगिकविषय-
तासम्बन्धेन प्रमेयत्वविशिष्टाभावमादायातिव्याप्तिवारणसम्भवादिति। न चोक्ताभावप्रति-
योगितावच्छेदकत्वं समूहालम्बनज्ञानव्यक्तित्वस्यैव कल्पनीयम्, अतिप्रसञ्जनापादकत्वा-
दिति वाच्यम्। प्रतियोगितावच्छेदकताघटकसाध्यतावच्छेदकताघटकाऽन्यतरसम्बन्धेन
व्याप्यत्वं निवेश्यमिति केचित्। तन्न। तद्व्यक्त्यनुयोगिकस्वरूपसम्बन्धेन प्रमेयत्वविशिष्ट-
साध्यकस्थलेऽतिव्याप्तितादवस्थ्यात्। वस्तुतो हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्य-
त्सम्बन्धेन यद्यद्धर्मव्यापकं तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्न-
साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यतावच्छेदकत्वं साध्यतावच्छेदके
निवेश्यम्। तथाच तद्व्यक्त्यभावप्रतियोगितावच्छेदकस्य तद्व्यक्तित्वस्य तद्व्यक्त्यनुयोगिकस्व-
रूपेण प्रमेयत्वव्यापकतया तत्सम्बन्धावच्छिन्नावच्छेदकताकविशेष्यताभिन्नसाध्यतावच्छेदक-
ताघटकसम्बन्धावच्छिन्नावच्छेदकत्वस्य साध्यतावच्छेदके विरहान्नोक्तस्थलेऽतिव्याप्तिरिति।
केचित्तु स्वावच्छेद्यप्रतियोगितासम्बन्धेन व्याप्यत्वं व्यापकत्वं च निवेश्यम्, तथा च वह्नि-
धूमोभयवान् वह्नेरित्यत्राऽतिव्याप्तिविरहात्। कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादौ कम्बुग्री-

घटकं चाऽवच्छेदकत्वं स्वरूपसम्बन्धविशेष । एवं च यद्धर्मावच्छिन्नेत्यत्र यद्धर्माऽन्यूनवृत्तिधर्मावच्छिन्नेति वक्तव्यम्, तेनोक्ताऽव्याप्तिनिरासः ।

वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्त्वविशिष्टसामान्य-

ननु प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमित्यत्र (घटकं) (१)प्रतियोगितावच्छेदकत्वं यदि प्रतियोगिता(२)ऽनतिरिक्तवृत्तित्वरूपं तदा तार्णातार्णोभयत्वावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादौ वह्नित्वं अपि(३) पारिभाषिकावच्छेदकं स्यादत आह घटकमिति । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे गुरुरूपेण साध्यतायामव्याप्तिमपाकर्त्तुमाह एवंचेति ।

ननु धूमत्वमेकस्मिन्नेव धूमे पर्याप्तमित्यादिप्रतीतेः प्रत्येकवृत्तिधर्मावच्छिन्नाधिकरणताकत्वावगाहितयैवोपपत्तौ धूमत्वादेः पर्याप्तिसम्बन्धसत्त्वे मानाभाव इति धूमवान् वह्नेरित्यादावतिव्याप्तिः, स्वपदेन धूमत्वस्य गृहीतुमशक्यत्वात् । एवं सत्तात्वस्य विशिष्टसत्तात्वाऽनतिरिक्त(४)वृत्तितया सत्तादिसाध्यकजातिमत्त्वादिहेतावव्याप्तिश्चेत्यत आह वस्तुतस्त्विति । तदवच्छिन्नविषयित्वसम्बन्धावच्छिन्नप्रतियोगितामादायैव नातिव्याप्तिरित्याहुः । तच्चिन्त्यम् ।

ननु व्यापकत्वघटकस्याऽभावविशेषणस्य स्वसामानाधिकरण्यस्य स्वाधिकरणतावच्छेदकावच्छिन्नाधिकरणताकत्वरूपस्य निवेशेनैव वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तेर्वह्निमान् धूमादित्यादावव्याप्तेश्च वारणसम्भवेऽवच्छेदके स्वसमानवृत्तिकत्वनिवेशनमयुक्तमिति चेन्न । उपायस्योपायान्तराऽदूषकत्वेन यथासन्निवेशे वैयर्थ्याभावादिति ।

दीधितौ स्वरूपसम्बन्धविशेष इति । अन्यथाऽनवस्थापत्तेरिति भावः । दीधितौ एवञ्चेति । स्वसमानवृत्तिकत्वप्रवेशे चेत्यर्थः । अन्यथा वह्नित्वाऽन्यूनवृत्तितार्णातार्णोभयत्वावच्छिन्नत्वस्य संयोगसम्बन्धावच्छिन्नत्वस्य च धूमसमानाधिकरणतार्णातार्णोभयाभावीयप्रतियोगितायां सत्त्वादसंभव एव स्यादिति भावः । एवं च यद्धर्मावच्छिन्नत्वेत्यस्य यद्धर्मसमानवृत्तिको यद्धर्माऽन्यूनवृत्तिर्यो धर्मस्तदवच्छिन्नत्वेत्यर्थ इति भावः ।

अनुपपत्तिसम्भवे, आपत्तेरन्याय्यत्वादाह एवमिति । ननु वह्निमान् धूमादित्यत्र पर्व-

---

(१) वृत्तित्वस्य घटकं प्रति०—इति प्रा० पु० पाठः ।

(२) प्रतियोगितानतिरिक्तवृत्तित्वरूपावच्छेदके स्वपर्याप्त्यवच्छेदकीभूतपर्याप्तिकत्वं न देयम्, अन्यथा तादृशावच्छेदकमवृत्तिपदार्थोऽपि स्यात् तस्मिन् स्वपर्याप्त्यवच्छेदकीभूतपर्याप्तिकत्वाविरहादसम्भव एव स्यादिति ध्येयम् ।

(३) तादृशोभयाभावप्रतियोगितानतिरिक्तवृत्ति यद्वह्नित्वं तदनतिरिक्तवृत्तित्वाद्वह्नित्वस्येत्यर्थः ।

(४) साक्षात्परम्परासाधारणसाध्यतावच्छेदकातिरिक्ताभावनिष्ठावच्छेदकत्वानिरूपितत्वस्य प्रतियोगितायां निवेशान्न वह्निमान्धूमादित्यादौ पर्वतान्यत्वविशिष्टाभावमादायाव्याप्तिरिति सत्तावानित्यादौ घटादवृत्तित्वविशिष्टाभावे तात्पर्यं, गगनसंयोगस्य वृत्त्यनियामकतया न गगनवृत्तित्वविशिष्टवह्न्यभावमादायाव्याप्तिरिति ध्येयम् ।

कत्वम्, स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं वक्तव्यम्।

वच्छिन्नेति। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववति असम्बद्धं यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकमित्यर्थः।

अत्र तदाश्रयप्रतियोगिताकाभावेत्युक्तौ तादृशधूमत्वाश्रयप्रतियोगिकोभयाभावादिमति प्रमेयधूमत्वविशिष्टस्य सम्बद्धतयाऽवच्छेदकत्वं न

तान्यत्ववैशिष्ट्यावच्छिन्नाभावमादायाऽव्याप्तिसम्भवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न। पर्वतान्यत्ववैशिष्ट्यावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं पर्वतावृत्तित्वे कल्पनीयम्, तथा च प्रतियोगितावच्छेदकाभाववति पर्वतीयवह्नौ वह्नित्वस्य सत्त्वान्नाऽव्याप्तिः। नच गुणान्यत्ववैशिष्ट्यावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं गुणाऽवृत्तित्वे कल्पनीयमिति वाच्यम्। सामानाधिकरण्यसम्बन्धेन गुणत्वविशिष्टाभावमादायाऽव्याप्तिः। नचैवं वह्निमान् धूमादित्यादावपि पर्वतत्ववैशिष्ट्यावच्छिन्नाभावमादायाऽव्याप्तिरिति वाच्यम्। व्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेण सत्तावान् जातेरित्यादावव्याप्तिर्दत्ता संयोगेन वह्नेः व्याप्यवृत्तित्वविरहात्सत्तावान् जातेरित्यत्र गुणान्यत्वविशिष्टसत्ताभावस्योक्तधर्मविशिष्टान्यप्रतियोगिताकत्वविरहेऽपि गुणत्ववैशिष्ट्यावच्छिन्नाभावमादायाव्याप्तिरिति।

इत्यर्थ इति। तथाच तदवच्छिन्नेत्यत्र तत्पदं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतस्वरूपसम्बन्धरूपावच्छेदकपरम्, भवति हि वह्निसमानाधिकरणतादृशाभावप्रतियोगितायाः स्वरूपसम्बन्धरूपं यदवच्छेदकं धूमत्वं तदवच्छिन्नाभाववति प्रमेयधूमत्वविशिष्टसामान्यमसम्बद्धमेवेति प्रमेयधूमत्वस्याप्यवच्छेदकत्वमिति।

अथ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धं यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकमिति कल्पे वह्निमान् धूमादित्यादावव्याप्तिः, हेतुसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नाभाववति वह्नित्वविशिष्टसामान्यस्याऽसत्त्वादिति चेन्न। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभाववति असम्बद्धत्वस्य विवक्षितत्वात्।

वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगितापर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाच नाव्याप्तिः। अथ धूमवान् वह्नेरित्यत्राऽतिव्याप्तिर्धूमाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तेरप्रसिद्धत्वादेकत्वस्य पर्याप्तित्वे मानाभावात्। न च न्यूनवृत्तिधर्मस्याऽनवच्छेदकत्वे वह्निधूमोभयाभावमादाय नातिव्याप्तिः। न च यत्र तद्रूपस्य तादात्म्येन साध्यता वाच्यत्वस्य हेतुता तत्राऽतिव्याप्तिः तद्रूपघटोभयभेदप्रतियोगितावच्छेदकावच्छिन्नाभाववति साध्यतावच्छेदकविशिष्टसामान्यस्य सत्त्वाद् व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयित्वादिति वाच्यम्। तद्रूपनिष्ठविशेष्यत्वतद्रूपानिष्ठप्रकारत्वोभयाभावमादायाऽतिव्याप्तिविरहात्। एतेन यत्र समवायेन तद्रूपविशिष्टस्य संयोगेन साध्यता वाच्यत्वस्य हेतुता तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवात्-

स्यात्, किन्तु गगनत्वादेरेव तथात्वं स्यादित उक्तम् तदवच्छिन्नेति । प्रतियोगित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्, तेन अयं घट एत(१)त्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं पटत्वं सम्बन्धसामान्येन कालिकसम्बन्धेन वा तदवच्छिन्नाभाववति नित्यगुणगगनादौ घटत्वत्वविशिष्टस्याऽसम्बद्धत्वेऽपि नाऽव्याप्तिः ।

पर्वतादेरुत्पत्तिकालावच्छेदेन संयोगसम्बन्धावच्छिन्नधूमा(सामान्या)भाववत्त्वात्, तत्र च धूमत्वविशिष्टस्य सम्बद्धत्वात् तदसम्बद्धस्वविशिष्टसामान्यकं गगनत्वादिकमुपादाय धूम(२)वान् वह्नेरित्यादावतिव्याप्तिरतः प्रतियोगिव्यधिकरणत्वेन तदवच्छिन्नाऽभावो विशेष्यः ।

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धी तदवच्छिन्नाभाववान् ग्राह्य इति तु पर्यवसितार्थः । तेन संयोगस-

---

द्घटानिष्ठतद्व्यक्तित्वस्यैव कल्पनीयम्, अतस्तत्राऽतिव्याप्तिरिति परास्तम् । तद्व्यक्तिघटपटमठैतदन्यतमानुयोगिकसमवायेन रूपविशिष्टस्य संयोगेनाभावमादायाऽतिव्याप्तिविरहात् । एवं धूमवान् वह्नेरित्यत्र धूमघटपटमठैतदन्यतमानुयोगिकसमवायेन द्रव्यत्वविशिष्टस्य संयोगेनाऽभावमादायाऽतिव्याप्तिवारणात् ।

गगनत्वादेरेवेति । गगनत्वविशिष्टस्य कुत्राप्यधिकरणेऽसम्बद्धत्वेन धूमघटोभयाभाववति असम्बद्धत्वात् । तथात्वं स्यादिति । पारिभाषिकावच्छेदकत्वं स्यादित्यर्थः ।

तेन—निरुक्तप्रतियोगितावच्छेदकावच्छिन्नाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशनेन । अत्र वह्निमान् धूमादित्यत्र तादृशप्रतियोगितावच्छेदकघटत्वावच्छिन्नस्य कालिकेनाऽभाववति वह्न्यवयवे वह्न्यन्तरस्य संयोगेन संबद्धत्वादव्याप्तिविरहेण अयं घट एतत्वादित्यादिस्थलानुसरणमिति ध्येयम् ।

पर्यवसितार्थ इति । ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धिनि असंबद्धं यद्धर्मविशिष्टसामान्यमिति निवेशेनैव सामञ्जस्ये तदवच्छिन्नाभाववानिति विशेषणं व्यर्थमिति चेन्न । तदवच्छिन्नाभाववानित्यनेन तादृशार्थ एव विवक्षित इति केचिदाहुः । तन्न । अभावश्च प्रतियोगिव्यधिकरणो बोध्य इति ग्रन्थाऽसंगतेः, प्रतियोगिव्यधिकरणस्याऽधुना लक्षणेऽनिवेशात् । वस्तुतस्तु नाप्यतिरिक्तवृत्तित्वमित्यादिना प्रतियोगितायाः स्वरूपसम्बन्धरूपाऽवच्छेदकत्वं परित्यज्य प्रतियोगिताया अनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वनिवेशः । ततः प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपतया प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वरूपप्रतियोगिताऽनतिरिक्तवृत्तित्वस्य निवेशः । प्रतियोगितायाः प्रतियोगिस्वरूपत्वेन तदवच्छिन्नाभाववदसम्बद्धमित्यादिना प्रतियोगिताऽनतिरिक्तवृत्तित्वनिवेशः । परन्तु प्रतियोगितावच्छेदकावच्छिनाऽसम्बन्ध्यवृत्तित्वरूपाऽनतिरिक्तवृत्तित्वनिवेशेऽनतिरिक्तवृत्तित्वस्य पारिभाषिक-

---

(१) गगनादौ संयोगेन वह्न्यादिमत्त्वेन वह्निमान्धूमादित्यादिप्रसिद्धस्थले नाव्याप्तिः सम्भवतीति स्थलान्तरानुधावनम् ।

(२) इदन्तु धूमप्रतियोगिकसंयोगेन साध्यत्वाभिप्रायेण ।

म्बन्धावच्छिन्नधूमाभावस्य धूमवत्पर्वतादौ समवायादिसम्बन्धेन प्रतियोगिव्यधिकरणत्वेऽपि धूमत्वस्य नाऽवच्छेदकत्वहानिः । न वा(१)द्रव्यं घटत्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् घटभिन्नद्रव्यत्वं प्रतियोग्यनधिकरणे तदवच्छिन्नाभाववति गुणादौ द्रव्यत्वत्वाविशिष्टस्याऽसत्त्वेऽप्यव्याप्तिः ।

वस्तुतो निरुक्तप्रतियोग्यनधिकरणत्वमेव तदवच्छिन्नाभाववतः साध्यतावच्छेदकसम्बन्धेन वाच्यम्, न तु प्रतियोगितायास्तत्सम्बन्धावच्छिन्नत्वम्, वृत्त्यनियामकसम्बन्धेन साध्यतायां तत्सम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिप्रसंगादिति ध्येयम्(२) ।

त्वापत्तेः । एतेन हेत्वधिकरणेऽसम्बद्धं यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकमित्यपि निरस्तम् ।

**प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धीति ।** अयं भावः । प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोगिवैयधिकरण्योक्तौ धूमवान् वह्नेरित्यादौ उत्पत्तिकालावच्छेदेन धूमवत्पर्वतादिवृत्तेरपि धूमाद्यभावस्य धूमत्वाद्यवच्छिन्नमहानसीयधूमाद्यनधिकरणपर्वतादिवृत्तित्वेन प्रतियोगिव्यधिकरणतया धूमत्वादेरनवच्छेदकत्वं दुर्वारम् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसामान्यवैयधिकरण्योक्तौ च वह्न्यभाववान् धूमाभावादित्यादौ व्यभिचारिणि अतिव्याप्तिः, तत्र सर्वस्यैवाऽभावस्य साध्यतावच्छेदकसम्बन्धेन पूर्वक्षणवृत्तित्वविशिष्टस्वाभावादिलक्षणप्रतियोगिसामानाधिकरण्येन गगनाभावस्यैव सिद्धान्तलक्षणोक्तरीत्या प्रतियोगिवैयधिकरण्येन तद्वति वह्न्यभावत्वादिविशिष्टस्य सम्बद्धतया वह्न्यभावत्वादेरवच्छेदकत्वाऽसम्भवात् । यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्योक्तावपि पर्वतादिवृत्तिधूमाद्यभावस्योभयाभावघटितपर्वतादिवृत्तित्वविशिष्टस्वाभावत्वलक्षणयत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्याक्रान्ततया धूमत्वादेरवच्छेदकत्वं दुर्वारमेवेत्यतः तादृशप्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धीत्यर्थो वाच्यः । तादृशपदं चात्र घटकीभूतस्वरूपसम्बन्धरूपावच्छेदकतानिरूपकप्रतियोगितापरम्, एवं च न कोपि दोषः, तत्प्रतियोगितावच्छेदकधूमत्वावच्छिन्नवैयधिकरण्यस्य पर्वतादिवृत्तिधूमाद्यभावे सत्त्वात् । वह्न्यभावाभावादेस्तत्प्रतियोगितावच्छेदकवह्न्यभावत्वावच्छिन्नव्यधिकरणत्वाच्च ।

न चैवमप्ययोगोलकादिवृत्तेरेव धूमाभावस्य पर्वतादिवृत्तितया कथं धूमत्वादेरवच्छेदकत्वोपपत्तिरिति वाच्यम् । तत्प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यविशिष्टतदवच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वस्य विवक्षितत्वादिति । )

तेन—प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वप्रवेशेन । **नाऽवच्छेदकत्वहानिरिति ।** न धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः । यत्किञ्चित्सम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशाभिप्रायेणेदम् । सम्बन्धसामान्येन विवक्षणे तु सम्बन्धसामा-

(१) प्रतियोगितावच्छेदकावच्छिन्नेत्यस्य फलमाह नवेति ।

(२) अवच्छेदकत्वाप्रसिद्धिनिबन्धनाव्याप्तिरित्यर्थः ।

न च घटवान् महाकालत्वादित्यादौ तादृशप्रतियोगितावच्छेदकं यद् गगनत्वं तदवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । अत्रापि साध्यतावच्छेदकसम्बन्धसामान्ये (१)तादृशधर्मावच्छिन्नप्रतियोगिकत्वयदनुयोगिकत्वोभयाभावस्तदसम्बद्धत्वस्य विवक्षितत्वात् ।

---

न्यान्तर्गतसंयोगेन धूमाद्यधिकरणत्वस्य पर्वतादौ सत्त्वेन सम्बन्धसामान्येन प्रतियोगिव्यधिकरणतदभाववत्त्वं न पर्वतादेरित्यातिव्याप्तिविरहेऽपि घटत्ववान् घटरूपादित्यादावव्याप्तिः स्यात्, घटरूपसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नस्याऽनधिकरणे गगनादौ घटत्वत्वविशिष्टस्याऽसम्बद्धत्वादिति गगने संयोगेन वह्नेः सम्बद्धत्वाद्वह्निमान् धूमादित्युपेक्षितमिति ध्येयम् । प्रतियोगितावच्छेदकावच्छिन्नेत्यस्य व्यावृत्तिमाह **नवेति** ।

**प्रतियोगिवैयधिकरण्याऽप्रसिद्ध्येति** । कालिकेन गगनत्वावच्छिन्नाधिकरणत्वाऽप्रसिद्धेरिति भावः । **अत्रापीति** । अथात्र यद्यदितिवीप्साननुधावने वह्निमान् धूमादित्यादावव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटत्वावच्छिन्नप्रतियोगिताकत्वपटानुयोगिकत्वोभयाभावस्य साध्यतावच्छेदकसम्बन्धे सत्त्वेन तादृशपटादिव्यक्त्यवृत्तित्वस्य वह्नित्वविशिष्टसामान्ये सत्त्वात् । वीप्सादरे तु पर्वतव्यक्तेरपि यदन्तर्गतत्वेन तदसम्बद्धत्वस्य वह्नित्वविशिष्टे विरहान्नाव्याप्तिः । ननु यद्यद्व्यक्तिमध्ये जातिव्यक्तेरपि धारणात्तन्निरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्ध्या वह्निमान् धूमादित्यत्राऽव्याप्तिरिति चेन्न । अग्रे सत्तावान् भावत्वादित्यादावेतत्कल्पेऽतिव्याप्तेरुक्ततया वह्निमान् धूमादित्यादाव्याप्तिरपीष्यत एवेति । न च तत्राऽव्याप्तिसम्भवेऽतिव्याप्तिदानं सन्दर्भविरुद्धमिति वाच्यम् । यादृशसत्तासाध्यकस्थलेऽव्याप्तिवारणायैतत्कल्पः स्वीकृतस्तत्साध्यकस्थले एव व्यभिचारिणि अतिव्याप्तिः सम्भवति, एतदभिप्रायेणैवाऽव्याप्तिं परित्यज्य सत्तासाध्यकस्थले व्यभिचारिण्यतिव्याप्तिरुक्ता जगदीशेनेत्याहुः । तच्चिन्त्यम् । सत्तावान् जातेरित्यादावव्याप्तिः । यद्व्यक्तिमध्ये जातिव्यक्तेरपि धारणात्सत्तावान् भावत्वादित्यादावप्रसिद्धिनिबन्धनाऽतिव्याप्तिवारणात् । वस्तुतस्तु यद्यदितिवीप्सादरेण सामान्याभावनिवेशः सूचितः । स च निवेशः साध्यतावच्छेदकसम्बन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववदुभयाभावीयप्रतियोगितानिरूपितपरंपरीयाऽनुयोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावन्निरूपितवृत्तित्वाभावस्य यद्धर्मविशिष्टसामान्ये विवक्षितत्वात्, तथाच परंपरीयानुयोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सामान्यादिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्धावपि तादृशावच्छेदकतावत्पर्व- ३ तादिव्यक्तिनिरूपितवृत्तित्वाभावस्य गगनत्वविशिष्टसामान्ये सत्त्वात्तादृशगगनत्वादिकमेव पारिभाषिकावच्छेदकमिति नाव्याप्तिरिति ।

केचित्तु साध्यतावच्छेदकसम्बन्धसामान्ये साध्यतावच्छेदकसम्बन्धवद्यद्यद्व्यक्त्यनुयोगिक-

---

(१) ननु तथापि साध्यतावच्छेदकसम्बन्धसामान्ये प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वयद्यदनुयोगिकत्वोभयाभावस्तन्निरूपितसाध्यतावच्छेदकसम्बन्धाप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्तिरिति चेन्न । हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताविशिष्टयद्यदनुयोगिकत्वोभयाभावो बोध्य इति ध्येयम् ।

त्व(१)यद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तत्तद्व्यक्त्यवृत्तित्वस्य विवक्षितत्वात्, सम्बन्ध-वत्ता चाऽनुयोगित्वप्रतियोगित्वान्यतरसम्बन्धेन, तथाच सामान्यपदेयद्व्यक्तिर्न साध्यताव-च्छेदकसंयोगवती, अपि तु पर्वतादिव्यक्तिरेव तत्तद्व्यक्तिनिरूपितवृत्तित्वाभावस्य गगनत्व-विशिष्टसामान्ये सत्त्वान्न वह्निमान् धूमादित्यादावव्याप्तिरित्याहुः ।

ननु तद्घटभेदसाध्यकद्रव्यत्व हेतावतिव्याप्तिः, अत्र साध्यतावच्छेदकसम्बन्धस्तु तद्घटभेदत्वावच्छिन्नप्रतियोगिकः स्वरूपसम्बन्धः । अत्र यद्यद्व्यक्तिमध्ये तद्घटव्यक्तेरपि धारणाऽसम्भवात्तादृशव्यक्तेः साध्यतावच्छेदकसम्बन्धवत्त्वविरहात् पटादिव्यक्तेरेव धारण-सम्भवेन पटाद्यनुयोगिकत्वहेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकगगनत्वावच्छिन्नप्रति-योगिकत्वोभयाभावस्य साध्यतावच्छेदकसम्बन्धसामान्ये सत्त्वात्पटाद्यसम्बद्धत्वस्य तद्घ-टभेदत्वावच्छिन्नेऽसत्त्वाद् गगनत्वावच्छिन्ने एव सत्त्वेन गगनत्वमेव पारिभाषिकाऽवच्छे-दकं स्यादिति चेन्न । प्रमेयवान् भावत्वादित्यादावतिव्याप्तेरुक्तत्वेनाऽत्राप्यतिव्याप्तेरिष्ट-त्वात् । न च सत्तावान् जातेरित्यादावव्याप्तिः, यद्यद्व्यक्तिमध्ये जातिव्यक्तेरपि धारणात्त-न्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्धेरिति वाच्यम् । केवलानुयोगित्वसम्बन्धेन साध्यतावच्छेदकसम्बन्धवत्त्वस्य विवक्षणात् सत्तासाध्यकसद्धेतौ नाऽव्याप्तिः, व्यभि-चारिण्यतिव्याप्तिसम्भवाच्चेति ।

अथात्र यद्यद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये हेतुसमानाधिकरणाभा-वप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिकत्वाभावः तत्तद्व्यक्त्यवृत्तित्वमेव विवक्षणी-यम् किमुभयाभावनिवेशेनेति चेन्न । द्रव्यवान् वाच्यत्वादित्यादौ संयोगेन साध्यतायाम-तिव्याप्तिः, तत्र यत्पदेन घटस्य न धारणं तदनुयोगिकसंयोगे द्रव्यत्वावच्छिन्नप्रतियोगि-कत्वसत्त्वात्, एवं यत्पदेन गगनादेरपि न धारणं तदनुयोगिकसंयोगाऽप्रसिद्धेरतः साध्या-भावस्य लक्षणाऽघटकत्वाद् घटाभावमादायाऽतिव्याप्तिरत उभयाभावनिवेशः । तथाच संयोगे द्रव्यत्वावच्छिन्नप्रतियोगिकत्वगुणानुयोगिकत्वोभयाभावसत्त्वाद्यद्व्यक्तिपदेन गुणव्य-क्तेरपि धारणात्तदवृत्तित्वस्य द्रव्यत्वविशिष्टसामान्ये सत्त्वान्नातिव्याप्तिः । वस्तुतस्तु गुणा-दिनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्यैव नातिव्याप्तिः ।

अथ साध्यतावच्छेदकसम्बन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदक-धर्मावच्छिन्नप्रतियोगिताकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तद्व्यक्त्य-वृत्तित्वं यद्धर्मविशिष्टसामान्ये विवक्षितम्, यद्यद्व्यक्त्यनुधावनं व्यर्थमिति चेन्न । एतल्लक्षणस्य लक्षणान्तरत्वेनोक्तलक्षणस्याऽदुष्टत्वात् ।

**अत्रेदं बोध्यम्** । यद्यदितिवीप्सानुधावनपक्षे साध्यतावच्छेदकसम्बन्धवृत्तिभेदप्रति-योगितावच्छेदकत्वाभाववान् यो हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकधर्मावच्छिन्न-प्रतियोगिताकत्वयद्यद्व्यक्त्यनुयोगिकत्वोभयाभावः तादृशाभावीयप्रतियोगितानिरूपितपरम्प-रीयानुयोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावदवृत्तित्वाभावो निवेश्यः, भवतादि-वीप्सानुधावनपक्षे साध्यतावच्छेदकसम्बन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववद्धेत्वधि-

(१) हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं ।

तद्सम्बद्धत्वमपि साध्यतावच्छेदकसम्बन्धेन सम्बद्धत्वसामान्याभावो बोध्यः। तेन घटत्वाद्यवच्छिन्नाभाववति घटत्वगगनत्वविशिष्टस्यापि यथाकथंचित्तादात्म्यादिना संबद्धतया न पारिभाषिकाऽवच्छेदकाऽप्रसिद्धिनिबन्धनो व्याप्तिलक्षणाऽसम्भवः।

नवा, तादृशप्रतियोगितावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नाभाववति जलादौ वह्नित्वाविशिष्टस्याऽसम्बद्धत्वाद्वह्निमान् धूमादित्यादावव्याप्तिः। धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्वह्नित्वावच्छिन्नाभाववति वह्नित्वविशिष्टस्य तत्तद्वह्नेरसम्बद्धत्वाद् वह्निमान् धूमादित्यादौ वह्नित्वमप्यवच्छेदकं स्यादतः सामान्यपदम्।

करणानुयोगिकत्वघटितोभयाभावीयप्रतियोगितानिरूपितपरम्परीयानुयोगित्वनिष्ठावच्छेदकतानिरूपितहेत्वधिकरणनिष्ठावच्छेदकतावद्वृत्तित्वाभावस्य निवेशादिति लाघवविरहादिति सुधीभिर्विभावनीयम्।

ननु साध्यतावच्छेदकसम्बन्धसामान्ये यद्यदनुयोगिकत्वविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिकत्वाभावः तत्तद्व्यक्त्यवृत्तित्वस्य यद्धर्मविशिष्टसामान्ये विवक्षणेनैव सामञ्जस्ये किमुभयाभावपर्यन्तानुधावनेन। वै० सामानाधिकरण्यसम्बन्धेन। न च कालो घटवान् महाकालत्वादित्यत्र महाकालानुयोगिकत्वविशिष्टगगनत्वावच्छिन्नप्रतियोगिकत्वाऽप्रसिद्धेरव्याप्तिरिति वाच्यम्। तत्र महाकालाभावमादाय लक्षणसमन्वयः महाकालानुयोगिकत्वविशिष्टमहाकालत्वावच्छिन्नप्रतियोगिकत्वस्य तादात्म्यादौ प्रसिद्धत्वादिति चेन्न। यत्र कालिकतादात्म्यान्यतरसम्बन्धेन घटस्य साध्यता महाकालत्वस्य हेतुता तत्राऽव्याप्तिस्तत्र महाकालाभावस्य लक्षणाघटकत्वात्। न च गगनाभावमादायैव नाव्याप्तिः, तथाहि—घटानुयोगिकत्वविशिष्टगगनत्वावच्छिन्नप्रतियोगिकत्वस्य संयोगादौ प्रसिद्धस्य साध्यतावच्छेदकसम्बन्धसामान्येऽसत्त्वात्, यत्पदेन घटस्य धारणसम्भवात्, तद्व्यक्त्यवृत्तित्वस्य गगनत्वविशिष्टसामान्ये सत्त्वादिति वाच्यम्। यत्र संयोगकालिकतादात्म्यान्यतमसम्बन्धेन घटस्य साध्यता महाकालत्वस्य हेतुता तत्र घटानुयोगिकत्वविशिष्टगगनत्वावच्छिन्नप्रतियोगिकत्वाभावस्य साध्यतावच्छेदकसम्बन्धत्वाव्यापकत्वात्। उभयाभावनिवेशे गगनाभावमादाय लक्षणसमन्वयः। महाकालानुयोगिकत्वविशिष्टगगनत्वावच्छिन्नप्रतियोगिकत्वस्याऽप्रसिद्धत्वेऽपि महाकालानुयोगिकत्वगगनत्वावच्छिन्नप्रतियोगिकत्वोभयाभावस्य साध्यतावच्छेदकसम्बन्धत्वव्यापकत्वाल्लक्षणसमन्वयः।

तेन—साध्यतावच्छेदकसम्बन्धोपादानेन। सम्बद्धत्वसामान्याभावेत्यत्र सामान्यपदव्यावृत्तिमाह न वेति। तथाच तादृशप्रतियोगितावच्छेदकीभूतमहानसीयवह्नित्वाभाववज्जलसम्बद्धत्वं नास्तीत्यभावस्य वह्नित्वविशिष्टे सत्त्वेऽपि तादृशप्रतियोगितावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नाभाववत्सम्बद्धत्वसामान्याभावस्य वह्नित्वविशिष्टेऽसत्त्वान्न तस्य पारिभाषिकाऽवच्छेदकत्वमिति भावः। केवलान्वयिनि लक्षणसत्त्वादाह अव्याप्तिरिति। तादात्म्येन साध्यतायां तेन सम्बन्धेन वृत्तेरप्रसिद्धेरतः सम्बद्धत्वेति। स्वविशिष्टेति निवे-

ननु कालिकादिसम्बन्धेन गगनत्वाविशिष्टं घटादि तस्य तादृशप्रतियोगितावच्छेदकीभूतगगनत्वावच्छिन्नाभाववति साध्यतावच्छेदकसंयोगादिसम्बन्धेन संबद्धत्वात्पारिभाषिकाऽवच्छेदकाऽप्रसिद्ध्या व्याप्तिलक्षणाऽसम्भवः । न च साध्यतावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्याभिधानान्नैष दोषः । पुरुष(१)निष्ठसंयोगसम्बन्धेन दण्डवतः कालिकविशे-

---

षात् विशिष्टसत्तावान् जातेरित्यत्र विशिष्टसत्तात्वावच्छिन्नाभाववति गुणे विशिष्टसत्तात्वाश्रयीभूतसत्तायाः सम्बद्धत्वेपि विशिष्टसत्तात्वस्य नावच्छेदकत्वक्षतिः । न च विशेष्ये गुणेसम्बद्धत्वस्य सत्त्वादेव विशिष्टेऽपि तत्सम्बद्धत्वसत्त्वं विशिष्टस्याऽनतिरिक्तत्वादिति स्वविशिष्टेतिनिवेशेऽपि नेष्टसिद्धिरिति वाच्यम् । एतदस्वरसेनैव लक्षणान्तरस्याऽवतारणीयत्वात् । स्वविशिष्टसामान्यमित्यत्र सामान्यपदव्यावृत्तिमाह धूमवन्निष्ठाभावेति ।

पुरुषनिष्ठसंयोगसम्बन्धेनेति । ननु केवलसंयोगेन दण्डविशिष्टस्य साध्यत्वेऽप्यव्याप्तिसम्भवे पुरुषनिष्ठपर्यन्तानुसरणं व्यर्थमिति चेन्न । यत्र समवायेन विशिष्टसत्तावत्तादात्म्येन साध्यता सत्त्वादेर्हेतुता तत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति गुणे विशिष्टसत्ताविशिष्टस्य गुणस्य सम्बद्धत्वादतिव्याप्तिवारणार्थं यादृशरूपवृत्तिनिरूपकताधिकरणतावत्सामान्यं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धं तादृशरूपभिन्नरूपावच्छिन्नसामानाधिकरण्यमिति वक्तव्यम्, तथाच तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववति गुणादौ विशिष्टसत्त्वस्य सत्तानतिरिक्ततया तद्धर्मविशिष्टस्य सम्बद्धत्वेऽपि विशिष्टसत्तात्वावच्छिन्नाधिकरणताविशिष्टस्य (द्रव्यस्य) असम्बद्धत्वान्नातिव्याप्तिः। एवं चोक्तस्थले गगनवृत्तित्ववैशिष्ट्यघटत्वगताद्वित्ववृत्तियां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना निरूपकता सा संयोगसम्बन्धावच्छिन्ना गगनवृत्तित्वविशिष्टघटत्वावच्छिन्ननिरूपकताधिकरणतावद्गगनस्य निरुक्तप्रतियोगितावच्छेदकावच्छिन्नाभाववति महाकालेऽसत्त्वात्तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके सत्त्वाल्लक्षणसमन्वयः । पुरुषानुयोगिकत्वानिवेशे पुरुषानुयोगिकसंयोगसम्बन्धावच्छिन्नगगनवृत्तित्वविशिष्टघटत्वावच्छिन्ननिरूपकताधिकरणत्वाप्रसिद्ध्याऽव्याप्तिः सङ्गच्छते ।

अथवा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वावच्छिन्नाभाववति महाकाले संयोगेन यावन्मूर्तविशिष्टस्य गगनादेरसम्बद्धत्वान्नाव्याप्तिः, तथाहि यादृशरूपमध्ये मूर्तवृत्तियावत्त्वगतैकत्वं घर्त्तव्यं, तादृशैकत्ववृत्तिर्या निरूपकता सा मूर्तगतयावत्त्वावच्छिन्ना निरूपकता तादृशनिरूपकताधिकरणताविशिष्टसामान्यं हेतुसमानाधिकरणमूर्तत्वावच्छिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धं भवतीति लक्षणसमन्वयात् । पुरुषानुयोगिकत्वोपादाने तु पुरुषानुयोगिकसम्बन्धावच्छिन्नयावत्त्वावच्छिन्ननिरूपकत्वाप्रसिद्धेः ।

केचित्तु वह्निधूमोभयविशिष्टं नायोगोलकमिति प्रतीतौ वह्निधूमोभयप्रतियोगिकसम्बन्धा-

---

(१) द्विक्षणस्थायिजन्यसंयुक्तं यत्किञ्चिद्गुरुकं संयोगेन तदवच्छिन्नपरमाण्वादयभावमादायाव्याप्त्यभावादत आह पुरुषनिष्ठेति ।

षणतया साध्यतायां महाकालत्वहेतावव्याप्त्यापत्तेः। गगन(१)त्वादेः पुरुषनिष्ठसंयोगसम्बन्धेनाऽवृत्त्या पारिभाषिकाऽवच्छेदकाऽप्रसिद्धेः।

न च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं यादृशसम्बन्धावच्छिन्नं तेनैव सम्बन्धेन स्ववैशिष्ट्याभिधानाद् घटत्वगगनत्वादौ पारिभाषिकावच्छेदकत्वं सुलभमिति वाच्यम्। धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तिः, साध्यतावच्छेदकमपेक्ष्य लघोर्धूमत्वस्यैव समवायेन हेतुमन्निष्ठसंयोगसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतया समवायेन च धूमत्वप्रकारकप्रमाविशेष्यत्वस्यावृत्त्या तस्य पारिभाषिकावच्छे-

भावो यथा अयोगोलके भासते तथा यद्धर्मावच्छिन्नवाचकपदोत्तरं वैशिष्ट्यपदं तद्धर्मावच्छिन्नप्रतियोगिकसम्बन्धस्यैवावगाहनात्, तथाच यद्धर्मविशिष्टसामान्यमित्यनेन यद्धर्मविशिष्टनिष्ठप्रतियोगितानिरूपकसम्बन्धविशिष्टसामान्यं(२) तद्धर्मावच्छिन्नाभाववति असम्बद्धामित्यादिरीत्या निवेशः। एवं च गगनवृत्तित्ववैशिष्ट्यघटत्वोभयत्वावच्छिन्ना घटगतयावत्वावच्छिन्ना च गगनवृत्तित्वविशिष्टघटनिष्ठा शुद्धघटनिष्ठा च या प्रतियोगिता तन्निरूपकसंयोगविशिष्टगगनमहाकालादिगगनत्वावच्छिन्नाभाववति महाकालेऽसम्बद्धतया विशिष्टघटत्वघटगतयावत्वादिकमेव पारिभाषिकावच्छेदकं स्यान्नाव्याप्तिरतः पुरुषनिष्ठेति दिक्।

तेनैव सम्बन्धेनेति। प्रतियोगितावच्छेदकताघटकसम्बन्धेनेत्यर्थः। अतिव्याप्तिरिति। ननु विषयितासम्बन्धेन वह्नित्वविशिष्टाभावमादाय वह्निमान् धूमादित्यादौ सर्वत्रासम्भव एव सम्भवतीति कथमतिव्याप्तिर्दत्ता, तथाहि—प्रतियोगितावच्छेदकताघटकविषयितासम्बन्धेन वह्नित्वविशिष्टज्ञानस्य हेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकावच्छिन्नाभाववति साध्यतावच्छेदकसम्बन्धेनाऽसम्बद्धत्वाद्वह्नित्वस्यापि पारिभाषिकावच्छेदकत्वादिति चेन्न। साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्याऽवच्छेदकतायां निवेश्यतया तेनैव वारणसम्भवात्। तच्च पूर्ववत्साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठत्वोभयाभावरूपं वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थलेऽव्याप्तिवारणार्थम्। न च तादात्म्येन घटविशिष्टस्य समवायेन साध्यतायां कपालत्वहेतावव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यत्कपालत्वादिकं तदवच्छिन्नाभाववति भूतलादौ प्रतियोगितावच्छेदकताघटकसमवायेन घटविशिष्टकपालस्याऽसम्बद्धतया घटस्यैव पारिभाषिकावच्छेदकत्वादिति वाच्यम्। साध्यतावच्छेदकताघटकसम्बन्धातिरिक्तत्वसाध्यतावच्छेदकप्रतियोगिकत्वोभयाभाववत्प्रतियोगितावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्याभि-

(१) ननु विषयितासम्बन्धेन वह्नित्वविशिष्टस्य कालिकेन साध्यतायां महाकालत्वादिहेतावव्याप्तिसम्भवेऽतिव्याप्तिदानं संदर्भविरुद्धमिति सर्वेषामेव धर्माणां तादृशान्यतरावच्छेदकताघटकसम्बन्धेन तदवच्छिन्नाभाववन्निरूपितवृत्तितावच्छेदकत्वादिति चेन्न। तादृशावच्छेदकत्वाभाववत् साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति सूचितम्। ननु यद्यप्यतिव्याप्तिवारणार्थं तादृशावच्छेदकत्वाभावकूटत्वनिवेशस्यावश्यकत्वेन गौरवं स्यात्, तथापि तादृशावच्छेदकत्वविरोधिसामान्याभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम्।

(२) यद्धर्मावच्छिन्नप्रतियोगिकसम्बन्धावच्छिन्नसामान्यमित्यर्थः।

दकत्वाभावप्रसङ्गात् । नच साध्यत्ववत्तादृशप्रतियोगित्वयोरन्यतरावच्छेदकताघटकसम्बन्धेनैव स्ववैशिष्ट्यस्य विवक्षणान्नोक्ताव्याप्त्यतिव्याप्त्योः प्रसङ्ग इति वाच्यम् । तादात्म्येन धूमवतः संयोगेन साध्यतायां द्रव्यत्वा(१)

---

धानात्, समवाये तूभयाभावविरहेणोक्ताव्याप्तिनिरासात् । पटप्रतियोगिकसंयोगेन पटविशिष्टस्याभावस्य लक्षणघटकत्वात्, पटप्रतियोगिकसंयोगे घटप्रतियोगिकत्वविरहेणोभयाभावसत्त्वात् । न च पुरुषनिष्ठसंयोगेन प्रमेयविशिष्टस्य संयोगेन साध्यतायां तद्भूतलत्वादिहेतौ घटाद्यभावोपि न लक्षणघटकः प्रतियोगितावच्छेदकताघटकसमवाये साध्यतावच्छेदकताघटकपुरुषनिष्ठसंयोगातिरिक्तत्वप्रमेयप्रतियोगिकत्वोभयसत्त्वेनोभयाभावविरहादव्याप्त्यापत्तेरिति वाच्यम् । साध्यतावच्छेदकताघटकसंसर्गातिरिक्तत्वसाध्यतावच्छेदकताविशिष्टप्रतियोगितानिरूपकत्वोभयाभाववत्त्वं प्रतियोगितावच्छेदकताघटकसम्बन्धे निवेश्यम्, वै० स्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतत्त्रितयसम्बन्धेन, वृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन, तथाच घटत्वप्रतियोगिकसमवाये त्रितयसम्बन्धेन साध्यतानिरूपितप्रमेयत्वावच्छिन्नावच्छेदकताविशिष्टसंसर्गीयप्रमेयत्वावच्छिन्नप्रतियोगिताकत्वविरहेणोभयाभावसत्त्वेन घटत्वप्रतियोगिकसमवायेन घटत्वविशिष्टाभावमादायैव लक्षणं संगमनीयमिति नासम्भवः । धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादौ तु तादृशावच्छेदकताविशिष्टविशेष्यतात्वावच्छिन्नप्रतियोगितानिरूपकत्वस्य समवाये विरहेणोभयाभावसत्त्वात्, समवायेन धूमत्वविशिष्टाभावमादायातिव्याप्तिरिति चिन्तनीयम् ।

वस्तुतस्तु प्रतियोगितावच्छेदकताघटकसम्बन्धेन यद्धर्मविशिष्टसामान्यं तदवच्छिन्नाभाववति असम्बद्धं प्रतियोगितावच्छेदकताघटकतत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यत्वं तदवच्छेदकत्वस्य साध्यतावच्छेदके निवेश्यत्वात्, कपालाभावप्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन घटविशिष्टस्य कपालत्वावच्छिन्नाभाववति असम्बद्धत्वेऽपि समवायसम्बन्धावच्छिन्नघटनिष्ठावच्छेदकताकविशेष्यताभिन्नतादात्म्यसम्बन्धावच्छिन्नघटनिष्ठावच्छेदकताकविशेष्यतावच्छेदकत्वस्य घटे सत्त्वात्तादात्म्येन घटविशिष्टस्य समवायेन साध्यतायां कपालत्वादिहेतौ नाव्याप्तिः, अतिव्याप्तिस्तु धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादौ भवत्येवातोऽव्याप्तिमुपेक्ष्याऽतिव्याप्तिर्दत्ता । न चैतादृशनिवेशे यद्यदितिवीप्सादरस्यैवोचितत्वादयं धूमीयवान्(२) वह्नेरित्यादावतिव्याप्तेरसङ्गत्यापत्तिरिति वाच्यम् । यद्यदितिवीप्सादरणं विनाप्यतिव्याप्तिसम्भवेन तस्यैवात्र निवेशात् । तन्निवेशश्च प्रतियोगितावच्छेदकताघटकसम्ब-

---

(१) इदमत्रावधेयम् । अयोगोलकावृत्तित्वावच्छिन्नाभावमादायोक्तातिव्याप्तिवारणं सम्भवति तदवच्छेदकस्वरूपसम्बन्धे धूमविशिष्टाप्रसिद्ध्या पुनरां तादात्म्येन धूमविशिष्टस्यायोगोलकेऽसम्बद्धत्वात् । अत्र समाधानम् । घटत्वाभावस्य तादात्म्येन तद्विशिष्टस्य स्वरूपेण साध्यतायां घटत्वादिहेतावतिव्याप्तिः, यावत एवाभावस्य प्रतियोगितावच्छेदकताघटकस्वरूपसम्बन्धेन साध्यतावच्छेदकघटत्वाभावविशिष्टगगनाभावस्य सर्वत्र सत्त्वात् ।

(२) तादात्म्येन धूमविशिष्टवान् ।

दावतिव्याप्त्यापत्तेः। धूमापेक्षया लघुत्वेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धूमत्वं तदवच्छिन्नाभाववति तत्तत्परमाणौ प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन धूमविशिष्टस्य परमाणोः साध्यताघटकसंयो-

---

न्धेन यद्धर्मविशिष्टसामान्यं प्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धं प्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यत्वं तदवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात् । तथाचोत्तरकल्पापेक्षया नाभेदः । न वा धूमीयवान् वह्नेरित्यादावतिव्याप्तिरसंगतेति भट्टानां पन्थाः ।

केचित्तु प्रतियोगितावच्छेदकप्रतियोगिकप्रतियोगितावच्छेदकताघटकसम्बन्धेन यद्धर्मविशिष्टत्युक्तौ तादात्म्येन घटविशिष्टसाध्यकस्थले कपालत्वादिहेतौ कपालत्वप्रतियोगिकसमवायेन घटविशिष्टस्याऽप्रसिद्धतया तादृशपारिभाषिकावच्छेदकं कपालत्वमेव तद्भिन्नत्वस्य घटे सत्त्वान्नाव्याप्तिरिति । धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तिस्तु सम्भवत्येवेति ।

एतेनायोगोलकावृत्त्यभावमादायाऽतिव्याप्तिर्वारणीयेत्यपि निरस्तम् । अयोगोलकावृत्तित्वप्रतियोगिकस्वरूपेण विशेष्यताविशिष्टस्याप्रसिद्धेरिति प्राहुः ।

नन्वत्रायोगोलकावृत्तित्वावच्छिन्नाभावमादायातिव्याप्तिवारणसम्भवात्कथमतिव्याप्तिर्दत्तेति चेन्न । विशेषणता द्विविधा, एका भावीया अपरा चाऽभावीया, तथाचायोगोलकावृत्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदकताघटकाभावीयविशेषणतासम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वविशिष्टत्वाप्रसिद्धेर्यद्धर्मपदेनाऽयोगोलकावृत्तित्वस्यैव धारणात् ।

केचित्तु धूमत्वप्रकारकप्रमाविशेष्यताप्रतियोगिकस्वरूपेण यत्र विशेष्यताविशिष्टस्य साध्यता वह्नेर्हेतुता तत्रातिव्याप्तिः, तत्प्रतियोगितावच्छेदकताघटकस्वरूपसंबन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकताकविशेष्यताभिन्नधूमत्वप्रकारकप्रमाविशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकताकविशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादित्याहुः ।

अथ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताघटकसम्बन्धेन स्ववैशिष्ट्याभिधाने धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादौ कथमतिव्याप्तिर्दत्ता, हेतुमन्निष्ठो योऽभावः स धूमनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्तत्प्रतियोगितावच्छेदकताघटकीभूतस्वरूपसम्बन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वविशिष्टस्य धूमाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धत्वादिति चेन्न । हेतुमन्निष्ठाभावीययत्प्रतियोगितावच्छेदकताघटकसम्बन्धेन यद्धर्मविशिष्टसामान्यं तत्प्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धं तद्धर्मभिन्नत्वं साध्यतावच्छेदके निवेश्यम् । अनुगमस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताविशिष्टावच्छेदकतानिरूपिताऽवच्छेदकता तादृशावच्छेदकतावद्भिन्नत्वस्य साध्यतावच्छेदके विवक्षितत्वात् । प्रतियोगितावैशिष्ट्यं चावच्छेदकतायां स्वावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्वावच्छेदकावच्छिन्नाभाववद्वृत्तित्वाभाववद्वृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छे-

दकतावत्त्वैतदुभयसम्बन्धेन। वृत्तित्वाभाववद्वृत्त्यभावश्च यद्धर्मावच्छिन्नाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकं नास्तीति प्रतीतिसाक्षिकः, धूमीयवान् वह्नेरित्यत्रातिव्याप्तिभयेन प्रतियोगितावच्छेदकताघटकसाध्यतावच्छेदकताघटकान्यतरसम्बन्धेन यद्धर्मवैशिष्ट्यमपि न निवेशनीयमिति जगदीशेनोक्तम्। न चात्रायोगोलकावृत्त्यभावमादायैव नातिव्याप्तिः, तत्प्रतियोगितावच्छेदकावच्छिन्नाभाववति अयोगोलकेऽन्यतरघटकप्रतियोगितावच्छेदकताघटकस्वरूपेण धूमविशिष्टस्याप्रसिद्धतया साध्यतावच्छेदकताघटकतादात्म्येन धूमविशिष्टस्य संयोगेनाऽसम्बद्धतया तस्यैव परिभाषिकावच्छेदकत्वादिति वाच्यम्। आदिपदात्तादात्म्येन तद्घटभेदविशिष्टस्य स्वरूपेण साध्यतायां घटत्वादिहेतावतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवात्तद्घटभेदनिष्ठतद्व्यक्तित्वस्यैव कल्पयितुमुचितत्वाद्, एवं व्यभिचारिस्थलावृत्तित्वावच्छिन्नाभाववति तद्घटेऽन्यतरघटकस्वरूपेण तद्घटभेदविशिष्टवाच्यत्वादेः सत्त्वेन तादृशगगनत्वादिकं पारिभाषिकावच्छेदकमिति। न च घटभेद इत्याकारकज्ञाननिष्ठविशेष्यतासम्बन्धावच्छिन्नावच्छेदताकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया तदवच्छिन्नाभाववति तद्घटप्रतियोगितावच्छेदकताघटकविषयितासम्बन्धेन साध्यतावच्छेदकविशिष्टस्याऽप्रसिद्धतया तादात्म्येन तद्घटभेदविशिष्टस्याऽसंबद्धत्वात्तस्यैव पारिभाषिकावच्छेदकत्वेन तादृशातिव्याप्त्यसम्भवात्, नहि एतादृशाभावप्रतियोगितावच्छेदकत्वं तद्घटभेदनिष्ठतद्व्यक्तित्वे कल्पनीयम् तादृशज्ञानशून्यदशायां पटादौ तादृशाभावप्रत्ययानुदयापत्तेः, तत्प्रतियोगितावच्छेदकीभूततद्घटभेदनिष्ठतद्व्यक्तित्वावच्छिन्नाधिकरणतायाः पटादौ सत्त्वादिति वाच्यम्। तादात्म्येन तद्घटभेदविशिष्टस्य सविषयकानवच्छिन्नप्रतियोगिताकस्वरूपेण साध्यतायां घटत्वादिहेतावतिव्याप्त्यापत्तेः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवेन तद्व्यक्तित्वस्यैव कल्पयितुमुचितम्, तद्घटभेद इत्याकारकज्ञानावच्छिन्नाभावस्य लक्षणाघटकत्वेऽपि सविषयकानवच्छिन्नप्रतियोगिताकस्वरूपेण प्रतियोगितावच्छेदकज्ञानाभावस्य कुत्राप्यसत्त्वेन तदभावस्य केवलान्वयितया तद्वृत्ति पटेऽन्यतरघटकतादात्म्येन तद्घटभेदसविषयकानवच्छिन्नप्रतियोगिताकस्वरूपेण सम्बद्धत्वात्तादृशगगनत्वादिकमेव पारिभाषिकावच्छेदकमिति। न च तद्व्यक्तेः स्वरूपतो भानाङ्गीकर्तृमते तद्घटभेदनिष्ठतादात्म्यसम्बन्धावच्छिन्नावच्छेदकताकसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य लक्षणघटकतया तत्प्रतियोगितावच्छेदकावच्छिन्नाभाववति तद्घटेऽन्यतरघटकतादात्म्येन तद्घटभेदविशिष्टस्य स्वरूपेणाऽसम्बद्धत्वात्तस्यैव पारिभाषिकावच्छेदकत्वेनाऽतिव्याप्त्यसम्भवादिति वाच्यम्। सामानाधिकरण्येन तद्घटभेदविशिष्टस्य सविषयकानवच्छिन्नप्रतियोगिताकस्वरूपेण साध्यतायामुक्तहेतावतिव्याप्तिः, तत्र सामानाधिकरण्यसम्बन्धेन तद्व्यक्तिविशिष्टाभावप्रतियोगितावच्छेदकत्वस्य स्वरूपेण तद्घटभेदनिष्ठतद्व्यक्तित्व एव कल्पयितुमुचितत्वात्तादृशतद्व्यक्तित्वावच्छिन्नाभाववति तद्घटेऽन्यतरघटकस्वरूपेण तद्घटभेदविशिष्टस्य वाच्यत्वादेः सम्बद्धतया तस्यैव पारिभाषिकावच्छेदकत्वाभावेन गगनत्वादिकमेव तदित्यपि कश्चित्। वस्तुतस्तु तद्घटभेदानुयोगिकस्वरूपेण प्रमेयत्वविशिष्टस्य सविषयकानवच्छिन्नप्रतियोगिकस्वरूपेण साध्यतायां घटत्वादिहेतावतिव्याप्तिः, तत्र साध्याभावीयप्रतियोगितावच्छेदकतद्घटभेदनिष्ठतद्व्यक्तित्वावच्छिन्नाभाववति अन्यतरघटकस्वरूपेण प्रमेयत्वविशिष्टस्य वाच्यत्वादेः संब-

द्धत्वादसम्बद्धं गगनत्वादिविशिष्टमेव, तद्धटभेदानुयोगिकस्वरूपेण तद्धटभेदव्यक्तिविशिष्टाभावप्रतियोगितावच्छेदकत्वं लाघवात्तादात्म्यसम्बन्धेन तद्घटभेदत्वस्यैव, तथाच प्रतियोगितावच्छेदकताघटकतादात्म्यसम्बन्धेन प्रमेयविशिष्टस्य वाच्यत्वादेः सम्बद्धत्वात्तत्रैव ग्रन्थतात्पर्यात्। नन्वत्र कालिकेन घटत्वविशिष्टस्य कालिकेन साध्यतायां महाकालत्वादिहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति महाकालेऽन्यतरघटकसाध्यतावच्छेदकताघटककालिकेन गगनत्वविशिष्टस्य घटादेः कालिकेन सम्बद्धतयाऽसम्बद्धत्वाऽप्रसिद्ध्याऽव्याप्तिदानं धूमीयवान् वह्नेरित्यादौ सन्दर्भविरुद्धमिति चेन्न। तद्व्यक्तेः स्वरूपतो भानस्वीकारे तादात्म्यसम्बन्धावच्छिन्नगगननिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य लक्षणघटकत्वेन तत्प्रतियोगितावच्छेदकावच्छिन्नाभाववति महाकालेऽन्यतरघटककालिकेन तद्व्यक्तिविशिष्टस्याऽप्रसिद्धतया तादात्म्येन गगनरूपतद्व्यक्तिविशिष्टकालिकेनाऽसम्बद्धतया तद्व्यक्तेरेव पारिभाषिकावच्छेदकत्वेनाव्याप्त्यसम्भवादतिव्याप्तेरुपादानम्।

न च तथापि विषयितया घटत्वविशिष्टस्य कालिकेन साध्यतायां महाकालत्वादिहेतौ तादात्म्येन गगनरूपतद्व्यक्तिविशिष्टाभावो न लक्षणघटकः तत्प्रतियोगितावच्छेदकतद्व्यक्त्यवच्छिन्नाभाववति महाकालेऽन्यतरघटकविषयितया तद्व्यक्तिविशिष्टस्य ज्ञानादेः सम्बद्धत्वादसम्बद्धत्वाऽप्रसिद्ध्याऽव्याप्तिः सम्भवतीति वाच्यम्। साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकप्रतियोगितावच्छेदकताघटकान्यतरसम्बन्धेन यद्धर्मविशिष्टेत्युक्तौ नोक्ताव्याप्तिः सम्भवति, घटत्वप्रतियोगिकविषयितया गगनविशिष्टाप्रसिद्ध्याऽन्यतरघटकतादात्म्येन गगनविशिष्टस्य गगनादेः कालिकेन महाकालादावसम्बद्धतया तस्यैव पारिभाषिकावच्छेदकत्वेनोक्ताभावस्यैव लक्षणघटकत्वात्। न चैवमपि विषयितया प्रमेयविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेतौ तादात्म्येन गगनरूपतद्व्यक्तिविशिष्टाभावोपि न लक्षणघटकः, तद्व्यक्त्यवच्छिन्नाभाववति महाकाले प्रमेयप्रतियोगिकविषयितया गगनविशिष्टस्य ज्ञानादेः कालिकेन सम्बद्धत्वादसम्बद्धत्वाप्रसिद्धेरव्याप्त्यापत्तिरिति वाच्यम्। प्रतियोगितावच्छेदकताघटकसाध्यतावच्छेदकतानिशिष्टप्रतियोगितानिरूपकसाध्यतावच्छेदकताघटकान्यतरसंम्बन्धेन यद्धर्मविशिष्टेत्युक्तावेव नोक्ताव्याप्तिः। वै० स्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्वस्वनिरूपितत्वैतत्त्रितयसम्बन्धेन, स्वनिरूपितत्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन, तथाच साध्यतानिरूपितप्रमेयत्वावच्छिन्नावच्छेदकताविशिष्टोक्तत्रितयसम्बन्धेन प्रमेयत्वावच्छिन्नप्रतियोगितानिरूपकविषयितया गगनरूपतद्व्यक्तिविशिष्टस्याप्रसिद्धतया तादात्म्येन तद्व्यक्तिविशिष्टस्य गगनादेः कालिकेन महाकालादावसम्बद्धतया तस्यैव पारिभाषिकावच्छेदकत्वेनोक्ताभावस्यैव लक्षणघटकत्वादतोऽतिव्याप्त्युपादानमिति। केचित्तु स्वाश्रयानुयोगिकोक्तान्यतरसम्बन्धेन यद्धर्मविशिष्टेत्युक्तौ नाव्याप्तिः सम्भवति, स्वं पारिभाषिकावच्छेदकत्वेनाभिमतम्, स्वाश्रयत्वं प्रतियोगितावच्छेदकताघटकसम्बन्धेन, तथाच विषयितया घटत्वविशिष्टस्य कालिकेन साध्यतायां उक्तहेतौ गगनाभावो लक्षणघटकः, महाकाले गगनानुयोगिकस्वरूपेण गगनत्वविशिष्टस्य सम्बद्धत्वादिति प्राहुः। तन्न। एवंसति पूर्वोक्तधूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तिः, तत्र यद्धर्मपदेन तादृशविशेष्यत्वस्य धर्तुमशक्यत्वात्प्रतियोगितावच्छेदकताघटकसमवायेन तादृशविशेष्यत्वाश्रयस्याप्रसिद्धेः तादृशं स्वं धूमत्वादिकमेव

तद्भिन्नत्वस्य विशेष्यत्वे सत्त्वादिति। प्रतियोगितावच्छेदकताघटकसाध्यतावच्छेदकताघटका-न्यतरसम्बन्धेन स्वाश्रयत्वविवक्षणे उक्तातिव्याप्तिवारणेऽपि कालिकेन यद्धर्मविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेतावव्याप्त्यापत्तेः, तत्र गगनाभावप्रतियोगितावच्छेदकस्यान्यतरसम्बन्धेनाश्रयस्य ज्ञानानुयोगिकउक्तान्यतरसम्बन्धेन गगनत्वविशिष्टस्य ज्ञानादेः कालिकेन महाकालादौ सम्बद्धतयाऽसम्बद्धत्वाप्रसिद्धेरिति। अथ स्वाश्रयत्वं प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव धूमत्वप्रकारकप्रमाविशेष्यवान् वह्निरित्यादौ तु धूमगतान्यतमत्वावच्छिन्नाभावादिकमादायातिव्याप्तिरिति चिन्त्यम्।

नन्वेवं प्रतियोगितावच्छेदकप्रतियोगिकप्रतियोगितावच्छेदकताघटकसम्बन्धसाध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसम्बन्धान्यतरसम्बन्धेन यद्धर्मविशिष्टयुक्तौ धूमीयवान् वह्निरित्यादौ नातिव्याप्तिः, धूमत्वावच्छिन्नाभाववति परमाण्वादौ धूमप्रतियोगिकतादात्म्येन धूमविशिष्टस्य धूमादेरसम्बद्धतया तस्यैव पारिभाषिकावच्छेदकत्वात् धूमत्वप्रतियोगिकसमवायेन धूमविशिष्टस्याऽप्रसिद्धत्वादलं कल्पान्तरानुसरणेनेति चेन्न। केवलसमवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां केवलसमवायेन वह्नित्वविशिष्टविषयकवह्नित्वप्रतियोगिकसमवायेन वह्निविशिष्टविषयकज्ञानान्यतरत्वहेतौ अतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टविषयकज्ञाने उक्तान्यतरसम्बन्धेन वह्नित्वविशिष्टस्य सम्बद्धत्वात्। उक्तान्यतरसम्बन्धश्च वह्नित्वप्रतियोगिकसमवाय एव तत्र साध्याभावस्य लक्षणाघटकत्वात् घटाभावस्यैव लक्षणघटकत्वात्। नन्वत्र तदवच्छिन्नाभाववति उक्तान्यतरसम्बन्धेन साध्यत्वप्रतियोगित्वान्यतराश्रयं यद्धर्मविशिष्टसामान्यमसम्बद्धं तदेव पारिभाषिकावच्छेदकमिति निवेशनेनैवातिव्याप्तिवारणसम्भवात् अलं कल्पान्तरानुसारेण। धूमीयवान् वह्निरित्यादौ तु समवायेन धूमविशिष्टस्य परमाण्वादेर्धूमाभावीयप्रतियोगित्वसाध्यत्वान्यतराश्रयत्वविरहेण तादृशयद्धर्मपदेन धूमस्यैव धर्तुं शक्यत्वात्। न चान्यतरसम्बन्धेन यद्धर्मविशिष्टे हेतुमन्निष्ठाभावप्रतियोगिताश्रयत्वनिवेशेनैवोक्तातिव्याप्तिवारणसम्भवे व्यर्थमन्यतराश्रयत्वपर्यन्तमिति वाच्यम्। वह्निमान् धूमादित्यादौ विषयितया वह्नित्ववद्ज्ञानाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति पर्वतेऽन्यतरसंबंधेन वह्नित्वविशिष्टे वह्नौ प्रतियोगिताश्रयत्वविरहेण प्रतियोगिताश्रयमुक्तान्यतरसम्बन्धेन वह्नित्वविशिष्टज्ञानादिकमेव भवति तस्याऽसम्बद्धतया वह्नित्वस्यैव पारिभाषिकावच्छेदकत्वादव्याप्तिः। न च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकत्वात्कथमव्याप्तिरिति वाच्यम्। एतत्कल्पेऽवच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वं न निवेश्यम्, उक्ताव्याप्तिवारणायान्यतराश्रयत्वनिवेशादिति चेन्न। सामानाधिकरण्यसम्बन्धेन तद्घटभेदविशिष्टस्य सविषयकानवच्छिन्न प्रतियोगिकस्वरूपेण साध्यतायां घटत्वहेतावतिव्याप्तिः, तत्र तद्व्यक्तेः स्वरूपतो भानानंगीकारे तद्घटभेदव्यक्त्यवच्छिन्नाभावो न लक्षणघटकः, तद्व्यक्तेः स्वरूपतो भानस्वीकारे तु तादृशाभावप्रतियोगितावच्छेदकताघटकतादात्म्यसाध्यतावच्छेदकताघटकसामानाधिकरण्यान्यतरसम्बन्धघटकसामानाधिकरण्यसम्बन्धेन तद्घटभेदविशिष्टस्य वाच्यत्वादेर्निरुक्तप्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धत्वविरहात्। अथा-

त्र स्ववृत्तिर्योऽन्यतरस्तदवच्छेदकसम्बन्धेन यद्धर्मवैशिष्ट्यं निवेश्यम्, अलं विशेष्यत्वादिघटितकल्पान्तरानुसरणेन पारिभाषिकावच्छेदकत्वेनाऽभिमतम्। अन्यतरश्च प्रतियोगितावच्छेदकतासाध्यतावच्छेदकतान्यतरात्मकः। धूमीयवान् वह्नेरित्यादौ धूमवृत्तिर्योऽन्यतरः तत्र साध्यतावच्छेदकत्वमेव न तु प्रतियोगितावच्छेदकत्वं तस्य धूमत्ववृत्तित्वात्तथा तादृशान्यतरावच्छेदकीभूततादात्म्येन धूमविशिष्टस्य परमाण्वादानसत्त्वेन स्वपदेन धूमस्यापि धर्तुं शक्यत्वादिति चेन्न। तद्घटभेदानुयोगिकस्वरूपेण प्रमेयविशिष्टस्य स्वरूपेण यत्र साध्यता घटत्वादेर्हेतुता तत्रातिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं स्वरूपेण तद्घटभेदनिष्ठतद्व्यक्तित्वे स्वीकार्यं लाघवात् स्ववृत्तिर्योऽन्यतरः तत्प्रतियोगितावच्छेदकत्वं साध्यतावच्छेदकत्वमपि तदवच्छेदकीभूतस्वरूपसम्बन्धेन तद्घटभेदाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति तद्घटे प्रमेयविशिष्टस्य वाच्यत्वादेः सम्बद्धत्वान्नैतादृशं स्वं प्रमेयादिकम्, अपि तु तद्घटभेदनिष्ठतद्व्यक्तित्वादिकमेव तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वात्। न च स्वत्वस्य प्रतिव्यक्तिविश्रान्ततया स्वपदेन प्रमेयमात्रस्य धारणात् वाच्यत्वप्रमेयत्वाद्यात्मकस्वनिष्ठसाध्यतावच्छेदकतात्मकान्यतरघटकतद्घटभेदानुयोगिकस्वरूपसम्बन्धेन वाच्यत्वप्रमेयत्वादिविशिष्टस्य तद्घटभेदस्य तद्घटेऽसम्बद्धत्वान्न पारिभाषिकावच्छेदकाभिन्नत्वं कस्यापि प्रमेयस्य, वाच्यत्वाद्यात्मकप्रमेयस्यापि स्वपदेन धारणात्पटानुयोगिककालिकेन वाच्यत्वविशिष्टं नास्तीत्यभावस्य लक्षणघटकतया तदवच्छिन्नाभाववति घटे वाच्यत्वात्मकस्वनिष्ठप्रतियोगितावच्छेदकताघटकोक्तकालिकेन वाच्यत्वनिष्ठस्यासम्बद्धत्वेन प्रमेयमात्रस्य पारिभाषिकावच्छेदकत्वेन नातिव्याप्तिरिति वाच्यम्। कालिकेन प्रमेयविशिष्टस्य कालिकेन साध्यतायां महाकालत्वहेतावव्याप्त्यापत्तेः, तत्र गगनाभावस्यैव लक्षणघटकत्वेन गगनत्वात्मकस्वनिष्ठं यदन्यतरं तत्साध्यतावच्छेदकत्वं प्रतियोगितावच्छेदकत्वमपि तद्घटककालिकेन गगनत्वविशिष्टस्य घटादेस्तदवच्छिन्नाभाववति महाकालादौ कालिकेन सम्बद्धत्वात्पारिभाषिकावच्छेदकाप्रसिद्धेः। न च स्वमात्रनिष्ठं यदन्यतरं तद्घटकसम्बन्धेन स्वविशिष्टेत्युक्तौ गगनत्वमात्रनिष्ठं न साध्यतावच्छेदकत्वमपि तु प्रतियोगितावच्छेदकत्वमेव तद्घटकस्वरूपेण गगनत्वविशिष्टस्य गगनादेः गगनत्वावच्छिन्नाभाववति महाकालादावसम्बद्धतया गगनत्वस्यैव पारिभाषिकावच्छेदकत्वेनोक्तसद्धेतावव्याप्तिविरहादिति वाच्यम्। उक्तव्यभिचारिणि अतिव्याप्तेर्दुर्वारत्वात्। तत्र वाच्यत्वप्रमेयत्वादिमात्रनिष्ठान्यतराऽप्रसिद्ध्या नैतादृशं स्वं वाच्यत्वप्रमेयत्वादिकम्, अपि तु तद्घटभेदनिष्ठतद्व्यक्तित्वादिकं तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वाद्, अतो यादृशरूपवृत्त्युक्तान्यतरावच्छेदकसम्बन्धावच्छिन्नयादृशरूपवृत्त्यवच्छेदकता तादृशावच्छेदकतानिरूपकनिरूपकताविशिष्टसामान्यं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असम्बद्धं तादृशावच्छेदकतावद्भिन्नत्वं साध्यतावच्छेदके निवेश्यम्, तथाच यत्र कालिकेन प्रमेयविशिष्टस्य कालिकेन साध्यता महाकालत्वादेर्हेतुता तत्र नाव्याप्तिः। उभयत्र रूपवृत्तित्वं च स्वतादात्म्यवदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथाहि गगनत्वगतैकत्ववृत्तिर्योऽन्यतरः तच्च प्रतियोगितावच्छेदकत्वमेव, न च साध्यतावच्छेदकत्वं तस्य स्वतादात्म्यवदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वसम्बन्धेन प्रमेयत्वगतसमुदायत्वे सत्त्वात्, किन्तु प्रतियोगितावच्छेदकत्वमेव तदवच्छेदकीभूत-

गसम्बन्धेन सम्बद्धतया धूमस्य पारिभाषिकावच्छेदकत्वविरहादिति चेत् । अत्राहुः । यद्यत्सम्बन्धेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसम्बन्धेनाऽसम्बद्धं तत्तत्सम्बन्धेन तत्तद्धर्मावच्छिन्नविशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं विशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वान्नोक्तदोषः । समवायेन वह्नित्वावच्छिन्नविशेष्यतायाः स्वरूपादिसम्बन्धेन गगनत्वावच्छिन्नविशेष्यताभिन्नत्वादेवावच्छेदकाऽप्रसिद्धिनिबन्धनाऽसम्भवस्य व्युदासादिति ।

नन्वेवमपि विशिष्टसत्तावान् जातेरित्यादौ अतिव्याप्तिः, तादृशद्रव्यत्वा-

---

स्वरूपसम्बन्धावच्छिन्ना या गगनत्वगतैकत्ववृत्त्यवच्छेदकता सा गगनत्वनिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपकताविशिष्टसामान्यस्य गगनत्वावच्छिन्नाभाववति असम्बद्धत्वाल्लक्षणसमन्वयः । तद्घटभेदानुयोगिकस्वरूपेण प्रमेयविशिष्टस्य साध्यतास्थले प्रमेयप्रमेयत्वगतसमुदायत्ववृत्तिर्योऽन्यतरः तच्च साध्यतावच्छेदकत्वमेव, तदवच्छेदकीभूततद्घटभेदानुयोगिकस्वरूपसम्बन्धावच्छिन्ना तादृशरूपवृत्तिर्याऽवच्छेदकता प्रमेयत्वावच्छिन्ना प्रमेयनिष्ठावच्छेदकता तादृशावच्छेदकताकनिरूपकताविशिष्टसामान्यस्य तदवच्छिन्नाभाववति असम्बद्धत्वात् । न च वह्निमान् धूमादित्यादावव्याप्तिः, तत्र महानसीयवह्न्यभावस्य लक्षणघटकतया महानसीयत्ववह्नित्वगतद्वित्ववृत्तिप्रतियोगितावच्छेदकतात्मकान्यतरावच्छेदकसम्बन्धावच्छिन्नमहानसीयत्ववह्नित्वगतद्वित्ववृत्तिअवच्छेदकताकनिरूपकताविशिष्टसामान्यस्य महानसीयवह्नित्वावच्छिन्नाभाववति असम्बद्धत्वात्तादृशावच्छेदकत्वावच्छिन्नभिन्नत्वस्य साध्यतावच्छेदके विरहादिति वाच्यम् । तादृशावच्छेदकत्वावच्छिन्नभिन्नत्वं साध्यतावच्छेदके विहाय तादृशरूपभिन्नत्वं साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे निवेश्यम् । नचैकत्वस्य पर्याप्त्यनुयोगितावच्छेदकत्वे मानाभावाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरिति वाच्यम् । यादृशावच्छेदकतासमनियतं यदन्यतरं तद्घटकसम्बन्धावच्छिन्ना या तादृशावच्छेदकता तन्निरूपकनिरूपकताविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति असम्बद्ध तादृशावच्छेदकतावदन्यत्वं साध्यतावच्छेदके निवेश्यम्, तथाचोक्तदोषवारणसम्भवात् । सामनैयत्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्य–स्वानवच्छेदकानवच्छिन्नत्व–स्ववृत्तित्वेत चतुष्टयसम्बन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन । एवं सत्युत्तरकल्पापेक्षया गौरवादिति ध्येयम् ।

यद्यत्सम्बन्धेनेति । निरुक्तधर्मेति । साध्यतावच्छेदकसम्बन्धसामान्ये यादृशधर्मावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशधर्मेत्यर्थः । यत्साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नमिति । साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकमित्यर्थः । अत्र कालिकसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकधूमनिष्ठविशेष्यतायास्तादृशविशेष्यताभिन्नत्वात्तदवच्छेदकत्वस्य धूमत्वे सत्त्वादतिव्याप्तिरतः साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यतापर्यन्तानुधा-

चनम् । नन्वत्र यद्यत्सम्बन्धेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति असम्बद्धं तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताभिन्ना या साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकता तादृशावच्छेदकतावत्साध्यतावच्छेदकमिति निवेशेनैव सामञ्जस्येऽलं विशेष्यताभेदनिवेशेनेति चेन्न। प्रतियोगितावच्छेदकताविशेष्यतावच्छेदकतासाधारणावच्छेदकतात्वस्य दुर्वचतया तत्तदवच्छेदकताभिन्नावच्छेदकतानिवेशे महागौरवादिति । केचित्तु सर्वसाधारणावच्छेदकतात्वस्य दुर्वचतया प्रतियोगितावच्छेदकताभेदनिवेशे कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तिः, कम्बुग्रीवादिमत्त्वे प्रतियोगितावच्छेदकताविरहेण घटत्वादिनिष्ठप्रतियोगितावच्छेदकताभेदस्य साध्यतावच्छेदकतायां सत्त्वात् । नचोत्तरत्रापि (भेदानुयोगिकोटौ) प्रतियोगितावच्छेदकताया एव निवेशात्कम्बुग्रीवादिमत्त्वे प्रतियोगितावच्छेदकताविरहेण नातिव्याप्तिरिति वाच्यम् । कम्बुग्रीवादिमद्वान् घटत्वादित्यत्राऽव्याप्तिः, तत्र साध्यतावच्छेदके प्रतियोगितावच्छेदकत्वविरहात् । न च तत्सम्बन्धावच्छिन्नतान्निष्ठप्रकारतावच्छेदकताभिन्नसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतावत्त्वं साध्यतावच्छेदके निवेश्यम्, तथाच न कुत्रापि दोष इति वाच्यम् । लाघवविरहादिति प्राहुः ।

अपरे तु प्रतियोगितया महानसीयवह्निसाध्यकसद्धेतौ महानसीयाभावं वह्न्यभावं चादायाऽव्याप्तिः, तन्निवेशे च पर्याप्तिनिवेशस्याऽऽवश्यकतया प्रत्येकधर्मावच्छिन्नविशेष्यताभिन्नोभयधर्मावच्छिन्नविशेष्यतामादाय लक्षणं सङ्गमनीयमिति वदन्ति । अत्रेदं तत्त्वम् । अत्र तद्धर्मभिन्नं साध्यतावच्छेदकमित्युक्तौ तादृशप्रतियोगितावच्छेदकं यन्महानसीयवह्नित्वसित्ववह्नित्वं तदवच्छिन्नाभाववति तादृशविशिष्टवह्नित्वविशिष्टस्याऽसम्बद्धतया तद्भिन्नत्वस्यासत्त्वाद्वह्निमान् धूमादित्यादाव्याप्तिः । तत्र तद्धर्मावच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकमित्युक्तावपि न निस्तारः, वह्नित्वावच्छिन्नविशेष्यतायां विशिष्टवह्नित्वावच्छिन्नविशेष्यतान्यत्वस्याऽसत्त्वात् विशिष्टस्यानतिरेकात् । न च तद्धर्मपर्याप्तावच्छेदकताकविशेष्यतान्यविशेष्यतावच्छेदकत्वप्रवेशात्तद्वारणमिति वाच्यम् । शुद्धवह्नित्वावच्छिन्नविशेष्यतायामपि विशिष्टवह्नित्वपर्याप्तावच्छेदकताकत्वसत्त्वात् । यद्यत्सम्बन्धावच्छिन्नाया निरुक्तधर्मावच्छिन्नाभाववन्निरूपितसम्बन्धितावच्छेदकतायाः पर्याप्त्यनुयोगिकत्वाभाववान् यो यः तदवच्छेदेन पर्याप्ततत्सम्बन्धावच्छिन्नावच्छेदकताकविशेष्यताभिन्नविशेष्यतावच्छेदकत्वविवक्षणान्न दोषः । परन्तु यद्यत्सम्बन्धावच्छिन्नाया निरुक्तयद्धर्मावच्छिन्नाभाववन्निरूपितसम्बन्धितावच्छेदकताया पर्याप्त्यनुयोगितावच्छेदकत्वाभाववान् यो यो धर्मस्तद्धर्मभिन्नत्वस्य साध्यतावच्छेदकतायाः पर्याप्त्यनुयोगितावच्छेदके प्रवेशनैवोपपत्तौ विशेष्यत्वानुधावनं व्यर्थमेवेति केचित् ।

अथात्र तादृशविषयताभिन्नविषयतावच्छेदकत्वनिवेशेनैवोपपत्तौ किं विशेष्यत्वोपादानेन, अत एव सामान्यनिरुक्तौ पक्षविशेष्यकभ्रम इत्यस्य व्याख्यायां भट्टाचार्येण विशेष्यतांया व्यावृत्तिराभिहितेति चेन्न । लाघवाभावात् । व्याप्यधर्मघटितस्य लक्षणत्वसम्भवे व्यापकधर्मघटितलक्षणस्याऽव्याप्यत्वाच्च । अत एव स्मृतिं प्रति अनुभवत्वापेक्षया लघुनापि ज्ञानत्वेन न कारणत्वम्, व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वादित्युक्तम् ।

यद्यत्सम्बन्धेनेत्यस्यानुगमः । साध्यतावच्छेदकसम्बन्धत्वव्यापकाधिकरणनिरूपितसम्बन्धितावच्छेदकताविशिष्टान्यावच्छेदकताकविशेष्यताभेदकूटवत्साध्यतावच्छेदकता-

घटकसम्बन्धावच्छिन्नावच्छेदकताकविशेष्यतावच्छेदकत्वम् । व्यापकत्वं चाधिकरणे स्वानुयोगिकत्वस्वकालीनसाध्यतावच्छेदकसम्बन्धत्वव्यापकप्रतियोगितावत्त्वोभयाभाववत्त्वसम्बन्धेन । साध्यतावच्छेदकसम्बन्धत्वव्यापकत्वं च प्रतियोगित्वे स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वस्व समानकालीनहेत्वधिकरणत्वसमानाधिकरणोभयाभाववत्त्वोभयाभावसम्बन्धेन । सम्बन्धितावच्छेदकतावै० स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति श्रीचरणाः ।

केचित्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववद्वृत्तित्वाभाववृत्तिअभावीयप्रतियोगितानिरूपितपरम्परीयविशिष्टनिष्ठावच्छेदकताविशिष्टविशेष्यतात्वावच्छिन्नप्रतियोगिताकभेदविशिष्टविशेष्यतावच्छेदकसाध्यतावच्छेदकमिति । वै० स्वनिरूपितावच्छेदकताघटकसंम्बन्धावच्छिन्नत्वस्वनिरूपितावच्छेदकताविशिष्टत्वोभयसम्बन्धेन । वृत्तित्वाभाववृत्तिअभावश्च यत्रसम्बन्धेन यद्धर्मविशिष्टवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसाक्षिकः । नन्वत्र तादृशवृत्तित्वाभाववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परीयविशिष्टनिष्ठावच्छेदकताविशिष्टप्रकारतात्वावच्छिन्नप्रतियोगिताकभेदवत्प्रकारतावत्त्वं साध्यतावच्छेदके निवेश्यम् लाघवात्, वै० स्वनिरूपितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्वनिरूपितावच्छेदकताविशिष्टत्वोभयसम्बन्धेनेति चेन्न । धूमत्वनिष्ठा प्रकारता द्विविधा एका सावच्छिन्ना अपरा च निरवच्छिन्ना । अत्र सावच्छिन्नप्रकारताभेदनिवेशेऽथवा निरवच्छिन्नप्रकारताभेदनिवेशे व्यभिचारिण्यतिव्याप्तिः, निरवच्छिन्नप्रकारतायां सावच्छिन्नप्रकारताभेदसत्वात्, सावच्छिन्नप्रकारतायां निरवच्छिन्नप्रकारताभेदसत्वात् । नहि निरवच्छिन्नप्रकारताभेदस्य निरवच्छिन्नप्रकारतायां स्वावच्छिन्नप्रकारताभेदस्य सावच्छिन्नप्रकारतायां निवेशो गौरवात् । नच निरवच्छिन्नावच्छेदकताकविशेष्यताभेदनिवेशे सावच्छिन्नावच्छेदकताकविशेष्यताभेदनिवेशे उक्तयुक्त्या व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् । अस्माकं निरवच्छिन्नधूमत्वनिष्ठावच्छेदकताकविशेष्यतासावच्छिन्नधूमत्वनिष्ठावच्छेदकताकविशेष्यतयोरैक्यम्, धूमत्वनिष्ठावच्छेदकताकविशेष्यतात्वस्यानुगतत्वादिति नातिव्याप्तिरिति विभावनीयमिति प्राहुः ।

नन्वत्र महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वान् धूमादित्यादावतिव्याप्तिः, साध्याभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति पर्वते तादृशजातिविशिष्टस्य वह्नेः सम्बद्धतया तादृशं गगनत्वादिकमेव तदवच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति चेन्न । यादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताघटकसम्बन्धावच्छिन्नतादृशावच्छेदकताकनिरूपकताविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति असम्बद्धं तादृशावच्छेदकतानिष्ठावच्छेदकताविशेष्यताभेदनिवेशः, तथाच महानसीयवह्निवृत्तित्वविशिष्टजातिगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताविशिष्टस्य महानसीयवह्नेः पर्वतादावसम्बद्धत्वान्नातिव्याप्तिः । न च वह्निमान् धूमादित्यादावव्याप्तिः, हेतुमन्निष्ठमहानसीयवह्न्यभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति पर्वते महानसीयत्ववह्नित्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताविशिष्टमहानसीयवह्नेरसम्बद्धतया तादृशावच्छेदकतावद्वह्नित्वनिष्ठावच्छेदकताकविशेष्यताभेदस्य वह्नित्वावच्छिन्नविशेष्यतायां विरहादिति वाच्यम् । तादृशसमुदायत्ववृत्तिविशेष्यताभिन्नविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगि-

द्यभाववति गुणादौ विशिष्टसत्त्वस्य सम्बद्धत्वात् । स्वस्य तादृशधर्मावच्छिन्नाभाववन्निष्ठसम्बन्धिताऽनवच्छेदकत्वाविवक्षया कथंचित्तत्राऽतिव्याप्तिवारणेऽपि सत्तावान् भावत्वादित्यादावतिव्याप्तिः, सत्तात्वावच्छिन्नाभाववति सामान्यादौ साध्यतावच्छेदकसमवायसम्बन्धेन सम्बन्धित्वाऽप्रसिद्धेः, सत्तात्वस्य निरुक्तावच्छेदकत्वाभावात् । न च साध्यतावच्छेदकसम्बन्धसामान्ये तदवच्छिन्नाभाववदनुयोगिकत्वयद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभावः तत्त्वं विवक्षितमतो नोक्तदोष इति वाच्यम् । तथासति प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । धूमत्वघटिततादृशोभयत्वापेक्षया प्रमेयधूमत्वघटिततादृशोभयत्वस्य गुरुतया तदवच्छिन्नप्रतियोगित्वाऽप्रसिद्धेरित्यस्वरसादाह स्वविशिष्टेति । स्वं पारिभाषिकाऽवच्छेदकत्वेनाऽभिमतम् । तथाच हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं स एव पारिभाषिकाऽवच्छेदकः तदन्यत्वं साध्यतावच्छेदकविशेषणमिति भावः । अत्र स्वविशिष्टसम्बन्धित्वं

---

ताकपर्याप्त्यनुयोगितावच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपमित्यादिनिवेशः, तथाच नोक्तसद्धेतावव्याप्तिः । तन्निवेशश्च तादृशवृत्तित्वावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परीयविशिष्टविशेष्यताभिन्नविशेष्यतेत्यादि । वै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व–स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्तित्वोभयसम्बन्धेन, प्रथमरूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, स्वावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन द्वितीयरूपवृत्तित्वं बोध्यम् । अव्यासज्यवृत्तिएकत्वादेः पर्याप्त्यनंगीकारे तु तादृशवृत्तित्वाभाववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परीयविशिष्टनिष्ठावच्छेदकतावैशिष्ट्यं विशेष्यतायां निवेश्यम् । वै० स्वनिरूपितावच्छेदकतात्वावच्छिन्नसमनियतावच्छेदकतानिरूपकत्वसम्बन्धेन । सामनैयत्यं च प्रसिद्धचतुष्टयसम्बन्धेनेति दिक् ।

विवक्षयेति । स्वस्य तादृशधर्मावच्छिन्नाभाववन्निष्ठाधिकरणतानिरूपितनिरूपकतानऽवच्छेदकत्वविवक्षयेत्यर्थः । सत्तावान् भावत्वादित्यादावतिव्याप्तिरिति । न च प्रमेयवह्निमान् धूमादित्यादावव्याप्तिरेव सम्भवति, तादृशमहानसीयवह्नित्वावच्छिन्नाभाववति प्रमेयवह्नित्वविशिष्टस्य संबद्धत्वेऽपि प्रमेयवह्नित्वस्य गुरुतया आधेयतानवच्छेदकत्वादिति वाच्यम् । प्रमेयवह्निमान् पर्वत इति प्रतीतिबलाद् गुरुणोऽपि प्रमेयवह्नित्वादेराधेयतावच्छेदकत्वात् विशिष्टसत्तावान् गुण इति प्रतीत्यभावेन च विशिष्टसत्तात्वादेस्तादृशनिरूपकतानवच्छेदकत्वादुक्ताव्याप्त्यतिव्याप्त्योरभावेन सत्तावान् भावत्वादिति स्थलान्तरानुसरणमिति मन्तव्यम् ।

तथाचेति । प्रतियोगितावच्छेदकं—प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणम् । तेन महानसीयवह्नित्वस्य तादृशाभावप्रतियोगितावच्छेदकत्वे तद्घटकवह्नित्वस्यापि तत्त्वेन-

साध्यतावच्छेदकसम्बन्धेन ग्राह्यम् । तेन प्रतियोगितावच्छेदकमात्रस्यैव यथाकथंचित्सम्बन्धेन यत्स्वविशिष्टसंम्बंन्धि तन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि न पारिभाषिकाऽवच्छेदकाऽप्रसिद्धिः ।

अभावश्चाऽत्र प्रतियोगिव्यधिकरणो वोध्यः । तेन घटत्वाद्यवच्छेदकमात्रस्यैव स्वविशिष्टसम्बन्धिनिष्ठसंयोगसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात् पारिभाषिकाऽवच्छेदकाऽप्रसिद्ध्या वह्निमान् धूमादित्यादौ नाव्याप्तिः । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यसम्बन्धित्वं स्वविशिष्टसम्बन्धिनो विशेषणं देयमिति तु फलितार्थः । तेनाऽभावमात्रस्यैव यथाकथंचित्कालिकादिसम्बन्धेन प्रतियोगिनः सम्बन्धिनि वृत्तावपि न क्षतिः । नवा हेतुमन्निष्ठांभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वादेः सत्तात्वाद्यवच्छिन्नसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेऽपि सत्तावान् जातेरित्यादावव्याप्तिः । तादृशाभावप्रतियोगित्वन्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम् । तेन न घटत्वादेरपि स्वविशिष्टसम्बन्धिनिष्ठसमवायाद्यवच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि वह्निमान् धूमादित्यादौ अवच्छेदकाऽप्रसिद्धिनिबन्धनो दोषः ।

वस्तुतः पूर्ववदिहाऽपि साध्यतावच्छेदकसम्बन्धेन निरुक्तप्रतियोग्यसम्बन्धित्वमेव स्वविशिष्टसम्बन्धिनो वक्तव्यम् । तेन वृत्त्यनियामकसम्ब-

---

तस्य वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन वह्नित्वस्याऽप्यनवच्छेदकत्वापत्तिरिति शङ्काया अनवकाशः । विशिष्टसत्तात्वाश्रयसत्तासम्बन्धिगुणादिनिष्ठाऽभावप्रतियोगितावच्छेदकत्वात् विशिष्टसत्त्वस्याऽनवच्छेदकत्वाऽपत्तिरतः स्वविशिष्टेति । यथाकथञ्चित्सम्बन्धेन—सम्बन्धान्तरेणेत्यर्थः । साध्यतावच्छेदकसम्बन्धान्यसम्बन्धेनेति यावत् । प्रतियोगितावच्छेदकत्वात् संयोगेन द्रव्यस्याऽव्याप्यवृत्तित्वादिति भावः । **फलितार्थ इति** । तथाच प्रतियोगितावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नस्याऽसम्बन्धित्वं स्वविशिष्टसम्बन्धिनः तादृशप्रतियोगितानवच्छेदकं हेतुमन्निष्ठतादृशाभावप्रतियोगितावच्छेदकं तादृशं स्वं अवच्छेदकमिति यावत् । तेन—प्रतियोगितावच्छेदकसम्बन्धप्रवेशेन । **अभावमात्रस्यैव यथाकथञ्चिदिति** । तथाच वह्निमान् धूमादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्घटत्वं तस्य वह्नित्वविशिष्टसम्बन्धिनिष्ठो यः सम्बन्धसामान्येन प्रतियोगिव्यधिकरणाभावो न घटाभावोऽपि तु तत्पर्वताऽसमानकालीनक्रियाऽभावस्तत्प्रतियोगिताऽनवच्छेदकत्वेन वह्नित्वस्य पारिभाषिकाऽवच्छेदकत्वाऽऽपत्त्याऽव्याप्तिः स्याद्यदि प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यप्रवेशो न स्यादित्यर्थः । प्रतियोगितावच्छेदकविशिष्टेत्यस्य फलमाह **नवेति** । **प्रतियोगिताऽनवच्छेदकत्वेऽपीति** । विशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणतया विशिष्टसत्तात्वस्य तादृशाभावान्तरप्रतियोगिताऽनवच्छेदकत्वेऽपीत्यर्थः ।

न्धेन साध्यतायां तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्धावपि नाऽव्याप्तिः।

प्रतियोगिताऽनवच्छेदकमित्यत्राऽवच्छेदकत्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताघटकसम्बन्धेन बोध्यम्। तेन घटत्वादेर्विषयितासम्बन्धेन घटत्वादिविशिष्टस्य ज्ञानादेः संयोगेनाऽभावस्य प्रतियोगिव्यधिकरणस्य घटत्वादिविशिष्टसम्बन्धिनिष्ठस्य प्रतियोगिताया विषयितासम्बन्धेनाऽनवच्छेदकत्वेऽपि न तादृशाऽवच्छेदकाऽप्रसिद्धिः।

---

ज्ञानादेः संयोगेनाऽभावस्येति। अथ ज्ञानादेः संयोगेनाऽधिकरणस्याऽप्रसिद्धया कथं साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं संयोगेन ज्ञानाऽभावस्येति चन्न। मौलप्रतियोगिव्यधिकरणत्वस्य सम्बन्धधर्मिकोभयाभावघटितत्वेन वह्निमान् धूमादित्यादौ उभयाभावघटितप्रतियोगिवैयधिकरण्याश्रयस्योत्पत्तिकालावच्छेदेन धूमादिमन्निष्ठस्य रूपाद्यभावस्य प्रतियोगितावच्छेदकस्य रूपत्वादेः संयोगेन रूपाद्यधिकरणाऽप्रसिद्धया रूपाद्यभावस्य संयोगेन यथाश्रुतप्रतियोगिव्यधिकरणत्वाभावेन वह्नित्वादिविशिष्टसम्बन्धिनिष्ठतादृशाभावान्तरप्रतियोगितानवच्छेदकतया वह्नित्वादेरवच्छेदकत्वाऽऽपत्त्या इदमीयप्रतियोगिवैयधिकरण्यस्यापि साध्यतावच्छेदकसम्बन्धसामान्ये यदभावप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वस्वविशिष्टसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावरूपस्य निवेशनीयतया संयोगेन ज्ञानादेरभावस्यापि निरुक्तप्रतियोगिवैयधिकरण्यसम्भवात्। ननु प्रतियोगिताऽनवच्छेदकेत्यत्राऽवच्छेदकत्वं साध्यतावच्छेदकताघटकसम्बन्धेनैव वाच्यम्, तथाच नोक्तरीत्या घटत्वादेरवच्छेदकत्वाऽसम्भव इति हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताघटकसम्बन्धेन तद्विवक्षणं व्यर्थमिति चेन्न। विषयितया धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य वह्नित्वादेर्वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः समवायेनाऽनवच्छेदकत्वाद् वह्नित्वस्य परिभाषिकाऽवच्छेदकत्वाऽऽपत्त्या वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः। एतेन मौलप्रतियोगिवैयधिकरण्यस्योभयाभावगर्भत्वे एवेदमीयप्रतियोगिवैयधिकरण्यस्याऽप्युक्तरीत्योभयाभावगर्भताऽऽवश्यकत्वम्, तदेव न, तथाहि मौलप्रतिवैयधिकरण्यस्योभयाभावगर्भत्वं गगनाभावसाधारण्यानुरोधेनैव वाच्यम्, अन्यथा कालो घटवान् महाकालपरिमाणादित्यादौ साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्याऽप्रसिद्ध्याऽव्याप्त्यापत्तेः, तथाच तत्साधारण्येऽपि स्वविशिष्टसम्बन्धीत्याद्यवच्छेदकलक्षणपक्षे वक्ष्यमाणरीत्या तत्राऽवच्छेदकाऽप्रसिद्ध्याऽव्याप्तेर्दुरुद्धरत्वेन तदवच्छिन्नाभाववदित्याद्यवच्छेदकलक्षणमेव तत्राङ्गीकरणीयमिति स्वविशिष्टेत्यादिलक्षणे गगनाभावसाधारण्यस्याऽनपेक्षिततया मौलप्रतियोगिवैयधिकरण्यं यथाश्रुतमेव, एवं च रूपाद्यभावस्य संयोगेन प्रतियोग्यधिकरणाऽप्रसिद्ध्या तमादायोक्तरीत्याऽव्याप्त्यभावेनेदमीयप्रतियोगिवैयधिकरण्यमपि यथाश्रुतमेवेति संयोगेन ज्ञानादेरभावस्य संयोगेन प्रतियोगिवैयधिकरण्याभावान्नोक्तरीत्या घटत्वादेरवच्छेदकत्वाऽसम्भव इति उक्तसम्बन्धावच्छिन्नत्वनिवेशो व्यर्थ इत्यपास्तम्।

ननु उक्तपारिभाषिकाऽवच्छेदकत्वद्वयस्य प्रवेशे मूलो(१)क्तप्रतियोगिव्यधिकरणस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनाधिकरणार्थकत्वं विफलम्, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य द्रव्यत्वत्वादेर्विशिष्टसत्तात्वाद्यवच्छिन्नवन्निष्ठाभावप्रतियोगिताऽनवच्छेदकत्वादेव विशिष्टसत्तावान् जातेरित्यादावतिव्याप्त्यभावात् । न च संयोगेन घटाद्यभावस्यैव तत्समानयतघटविशिष्टवाच्यत्वा(२)द्यभावत्वात्, तत्प्रतियोगित्वावच्छिन्नस्य च वाच्यत्वस्य सर्वत्र सत्त्वात् प्रतियोगिव्यधिकरणाभावस्यैवाऽप्रसिद्धिः स्यात् यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यप्रवेशो न स्यादिति वाच्यम् । यत्प्रतियोगित्वावच्छिन्नस्याऽनधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकीभूतधर्मा(?)यद्विशिष्टसम्बन्धिनिष्ठप्रति-

---

ननु सिद्धान्तलक्षणोक्तरीत्या विशिष्टसत्तादिसाध्यकेऽतिव्याप्तिवारणायैव तद्विलक्षणं साध्यकमत आह हेतुमान्निष्ठेति । जातिमन्निष्ठेत्यर्थः । इदमुपलक्षणम् । मूर्त्तत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत् स्पर्शत्वं तदवच्छिन्नाभाववति भूतत्वमूर्त्तत्वोभयत्वविशिष्टस्याऽसम्बद्धत्वात्, स्पर्शत्वस्य तदुभयत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगिताऽनवच्छेदकत्वाच्चेति । प्रतियोगिताऽनवच्छेदकत्वादेवेति । जातिसमानाधिकरणाभावप्रतियोगिताऽवच्छेदकं यद् द्रव्यत्वत्वं तदवच्छिन्नाभाववति विशिष्टसत्तात्वविशिष्टस्याऽसम्बद्धत्वाच्चापि द्रष्टव्यम् । इत्यादावितिि । आदिना भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यस्य परिग्रहः ।

अथाऽत्रेदमीयप्रतियोगिवैयधिकरण्येऽपि प्रतियोगितावच्छेदकावच्छिन्नस्य वैयर्थ्यं कथं नोक्तम्, सत्तावान् जातेरित्यत्र विशिष्टसत्ताभावमादाय लक्षणसमन्वयात् । न च विषयितया नित्यज्ञानवृत्तित्वविशिष्टघटस्य विषयितया साध्यतायां ज्ञानत्वहेतावतिव्याप्तिः, साध्यतावच्छेदकविशिष्टसम्बन्धिनि नित्यज्ञाने सर्वस्यैव वस्तुनो विषयितासम्बन्धेन सत्त्वात्प्रतियोगिव्यधिकरणाऽप्रसिद्ध्या यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वात् तादृशाभावप्रतियोगितावच्छेदकं यन्नित्यज्ञानान्यत्वविशिष्टघटत्वं तद्धृति प्रतियोगिव्यधिकरणाभावाऽप्रसिद्धेश्चेति वाच्यम् । अप्रसिद्ध्यैवाऽत्रातिव्याप्तिवारणसम्भवादिति चेन्न । नित्यज्ञानाऽनुयोगिकविषयितासम्बन्धेन घटस्य साध्यतायां नित्यज्ञानत्वहेतावव्याप्तेः, व्याप्यवृत्तिसाध्यकस्थलीयलक्षणे साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यनिष्ठत्वोभयाभाववत्प्रतियोगिताया-

---

(१) ननु मूलोक्तप्रतियोगितावच्छेदकावच्छिन्नस्य वैयर्थ्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठप्रतियोगिव्यधिकरण इत्यत्रापि तद्वैयर्थ्यं कथं नोक्तम् ? सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावस्य प्रतियोगिव्यधिकरणत्वाभावान्न लक्षणघटकत्वमिति नाव्याप्तिरिति चेन्न । विषयितया नित्यवृत्तित्वविशिष्टघटस्य साध्यत्वे ज्ञानत्वहेतुकव्यभिचारिण्यतिव्याप्त्यापत्तेः । साध्यतावच्छेदकविशिष्टसम्बन्धिनि नित्यज्ञाने विषयितासम्बन्धेन प्रतियोगिव्यधिकरणाप्रसिद्ध्या यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वात् केवलघटत्वादिकं धर्तव्यं तद्विशिष्टसम्बन्धिनि जन्यज्ञाने प्रतियोगिव्यधिकरणघटाभावप्रतियोगितानवच्छेदकत्वस्य घटत्वे सत्त्वात् पारिभाषिकं घटत्वादिकं तदन्यत्वस्य साध्यतावच्छेदके सत्त्वात् । तन्निवेशे च नित्यज्ञाने नित्यज्ञानान्यत्वविशिष्टघटाभावस्य प्रतियोगिव्यधिकरणत्वसम्भवात् यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वादिति ।

(२) आदिपदाद् घटत्वविशिष्टगगनाभावमादायाप्रसिद्धिः, अन्यथा संयोगेन वाच्यत्वाधिकरणाप्रसिद्धेः ।

योगिव्यधिकरणाभावप्रतियोगितानवच्छेदकः तत्पारिभाषिकाऽवच्छेदकमित्यस्य निर्दोषत्वात् । घटाभावस्य घटविशिष्टवाच्यत्वाभावस्वरूपत्वेऽपि तस्य घटत्वावच्छिन्नं यत्प्रतियोगित्वं तदाश्रयव्यधिकरणत्वस्य सुलभत्वादिति ।

नच तत्राऽवच्छेदकभेदेऽपि प्रतियोगि(१)तैक्यं युक्तम्, घटपटाद्यभावानामप्येकप्रतियोगिताकत्वापत्तेरिति चेद् । अत्र प्राञ्चः । यत्प्रतियोगिताश्रयाऽनधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकेत्याद्यभिधाने वह्निमान् धूमादित्य(२)त्राऽव्याप्तिः, स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः प्रतिव्यक्तिभिन्नत्वात् । वह्नित्वावच्छिन्नाभावीयं महानसीयवह्निनिष्ठं यत्प्रतियोगित्वं तदवच्छिन्नानधिकरणहेतुमत्पर्वतादिनिष्ठवह्निसामान्याभावप्रतियोगितावच्छेदकीभूतवह्नित्वादेः स्वविशिष्टसम्बन्धिनिष्ठनिरुक्तप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वात् । प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यप्रवेशे तु तादृशप्रतियोगितायाः अवच्छेदकं यद्वह्नित्वादिकं तदवच्छिन्नाऽनधिकरणत्वं न हेतुमतः पर्वतादेरित्यदोष इत्याहुः ।

---

एव निवेश्यतया समवायेन पटाभावप्रतियोगितावच्छेदकाश्रयप्रतियोगिकत्वनित्यज्ञानानुयोगिकत्वोभयस्यैव साध्यतावच्छेदकसम्बन्धे सत्त्वात् । जन्यज्ञानानुयोगिकत्वघटितोभयाभावस्य तत्र सत्त्वेऽपि तदनुयोगिकत्वघटत्वावच्छिन्नप्रतियोगिकत्वोभयाभावस्य साध्यतावच्छेदकसम्बन्धे सत्त्वाद् घटत्वस्यापि पारिभाषिकावच्छेदकत्वापत्तेः । तन्निवेशे च नित्यज्ञानान्यस्वविशिष्टपटाभावस्य प्रतियोगिव्यधिकरणत्वसम्भवादिति ध्येयम् ।

इत्याहुरिति । अथ प्रतियोगिभेदेऽपि एका(समनियता)भावप्रतियोगितायाः अभेदपक्षे अभावभेदेनैव प्रतियोगिताभेदाद् वह्नित्वावच्छिन्नप्रतियोगितायाः ऐक्येन प्रतियोगितावच्छेदकावच्छिन्नत्वाऽनिवेशेऽपि उक्तरीत्याऽव्याप्त्यसम्भव इति चेन्न । एवमपि विशिष्टसत्तावान् जातेरित्यत्राऽतिव्याप्तिः, विशिष्टसत्ताभावस्य द्रव्यत्वाभावसमनियततया ऐक्येन द्रव्यत्वनिष्ठप्रतियोगितायाः अपि सत्तानिष्ठतया गुणादेः प्रतियोगिताविशिष्टसत्ताधिकरणत्वेन द्रव्यत्वाभावस्यापि प्रतियोगिव्यधिकरणत्वाभावात् । नचैवं समवायेन गगनाभावस्य संयोगेन सत्ताभावाऽभिन्नतया समवायेन प्रतियोगिव्यधिकरणस्याऽभावस्य जातिमत्यसंभवात् कथमतिव्याप्तिरिति वाच्यम् । असम्भवापत्तेः, संयोगेन घटाभावस्यापि घटवद्वृत्तित्वविशिष्टप्रमेयत्वाऽभावाऽभिन्नतया तत्प्रतियोगिताविशिष्टप्रमेयत्वस्य केवलान्वयितया प्रतियो-

---

(१) नन्वभावभेद एव प्रतियोगितानियामकोऽस्त्विति चेन्न । अभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणस्वरूपत्वात् घटाभावनिष्ठस्य पटाभावभेदस्य घटाभावरूपतया घटनिष्ठप्रतियोगित्वपटाद्यभावनिष्ठप्रतियोगित्वयोरैक्यापत्तेरेवोक्तत्वात् ।

(२) तद्धूमाभावमादाय धूमवान्वह्नेरित्यादौ अतिव्याप्तिवारणार्थं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यवच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यनवच्छेदकं तदेव पारिभाषिकावच्छेदकमित्यर्थो बोध्यः । तेन प्राचां मतेऽपि न [illegible]सम्भव इति ।

परेतु प्रतियोगिभेदेऽपि एकधर्मावच्छिन्नप्रतियोगिता लाघवादेकैवेति

गिव्यधिकरणाभावस्यैवाऽप्रसिद्धेः। न च प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकसम्बन्धेन निवेशनीयम् न तु प्रतियोगितावच्छेदकसम्बन्धेन, तथाच स्वरूपसम्बन्धेन प्रमेयत्वस्य केवलान्वयित्वेऽपि साध्यतावच्छेदकसंयोगेन केवलान्वयित्वाभावेन संयोगेन घटाभावस्य तेन सम्बन्धेन प्रतियोगिवैयधिकरण्यसम्भवेन प्रतियोगिव्यधिकरणाऽभावस्य प्रसिद्धिरीति वाच्यम्। तथापि संयोगेन घटाभावस्य घटवद्वृत्तित्वविशिष्टप्रमेयाभावाऽभिन्नतया तत्प्रतियोगितावि‍शिष्टस्य प्रमेयस्य हेत्वधिकरणे सत्त्वेन प्रतियोगिव्यधिकरणाऽभावाऽप्रसिद्धेः। एवं चाऽसंभववारणायैव प्रतियोगितावच्छेदकावच्छिन्नत्वं निवेशनीयम्। एवं च प्रमेयत्वस्य केवलान्वयित्वेऽपि संयोगेन घटाभावस्य तत्प्रतियोगितावच्छेदकघटवद्वृत्तित्वविशिष्टप्रमेयत्वत्वाद्यवच्छिन्नवैयधिकरण्यसंभवेन नाऽसंभव इति।

न च प्रतियोगितावच्छेदकभेदेन प्रतियोगिता भिद्यते इति द्रव्यत्वत्वावच्छिन्नप्रतियोगितायाः विशिष्टसत्तात्वावच्छिन्नप्रतियोगितातो भिन्नतया तत्प्रतियोगिताश्रयाऽनधिकरणत्वस्य गुणादौ सत्त्वेन द्रव्यत्वाभावस्य लक्षणघटकतया प्रतियोगितावच्छेदकावच्छिन्नत्वाऽनिवेशेऽपि नातिव्याप्तिः, एवं घटत्वावच्छिन्नप्रतियोगितायाः घटवद्वृत्तित्वविशिष्टप्रमेयत्वत्वाद्यवच्छिन्नप्रतियोगितातो भिन्नतया तदनिवेशेऽपि नाऽप्रसिद्धिनिबन्धनाऽसंभव इति वाच्यम्। प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेदे मानाभावात्।

अथ प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेद आवश्यकः, अन्यथा घटत्वादेः पटादिसाधारणप्रतियोगिताया न्यूनवृत्तित्वेनाऽवच्छेदकत्वानुपपत्तेः।

त्विह प्रतियोगितावच्छेदकभेदेऽपि प्रतियोगितायाः स्वरूपसम्बन्धात्मकत्वेनैक्ये अभावैक्येनैक्ये च प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशेऽपि धूमाभाववान् वह्न्यभावादित्यादौ पूर्वक्षणवृत्तित्वविशिष्टत्वाभावत्वादेरपि प्रतियोगितावच्छेदकतया यादृशप्रतियोगितावच्छेदकावच्छेत्यायुक्तावपि प्रतियोगिव्यधिकरणाभावाऽप्रसिद्ध्याऽव्याप्तिर्दुर्वारैव। यादृशप्रतियोगितायां यत्किंचिदवच्छेदकावच्छिन्नवैयधिकरण्योक्तौ च वह्निमान् धूमाद् कपिसंयोगाभाववान् आत्मत्वादित्यादौ प्रतियोगितायाः स्वरूपसम्बन्धात्मकत्वेन महानसीयवह्नित्वावच्छिन्नप्रतियोगितायाः वह्नित्वावच्छिन्नमहानसीयवह्निनिष्ठप्रतियोगितायाश्चैक्येन अभावैक्येन च कपिसंयोगाभावत्वावच्छिन्नप्रतियोगिताया गुणसामान्याभावत्वावच्छिन्नप्रतियोगित्वाऽभिन्नतया च साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि महानसीयवह्नित्वगुणसामान्याभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यसंभवेनाऽव्याप्तिः, तथाच प्रतियोगितावच्छेदकभेदेन प्रतियोगिभेदस्याऽऽवश्यकत्वे प्रतियोगितावच्छेदकावच्छिन्नत्वाऽनिवेशेऽपि न विशिष्टसत्तासाध्यके उक्ताऽतिव्याप्तिरसंभवो वेति तन्निवेशनमफलम्।

अपि च प्रतियोगितायाः स्वरूपसम्बन्धात्मकत्वे तन्निवेशनमफलमेव। न च पूर्वोपदर्शितरीत्या वह्निमान् धूमादित्यादावव्याप्तिवारणाय तन्निवेशनमिति वाच्यम्। मौलप्रतियोगिवैयधिकरण्ये तदनुपादाने इदमीयप्रतियोगिवैयधिकरण्येपि तदनुपादाने प्रयोजनाभावेनाऽव्याप्तेरसंभवादित्यत आह परेत्विति।

मते वह्निमान् धूमादित्यादौ नाव्याप्तिः, परन्तु तद्रूपान्यत्वविशिष्टसत्तावान् रूपत्वादित्यादावतिव्याप्तिरेव स्याद्यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावो मौलो न स्यात्, प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटत्वादेः सर्वस्यैव तद्रूपान्यत्वविशिष्टसत्तात्वावच्छिन्नसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वेन तादृशसत्तात्वस्य पारिभाषिकाऽनवच्छेदकत्वादिति प्राहुः। ( तच्चिन्त्यम् । )

इदं त्ववधातव्यम् । अत्रापि लक्षणे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत्सम्बन्धेन यादृशयादृशधर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगिताऽनवच्छेदकं तत्तत्सम्बन्धेन तादृशतादृशधर्मावच्छिन्नविशेष्यतान्यसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नविशेष्यतावच्छेदकत्वमेव साध्य-

---

अतिव्याप्तिरेव स्यादिति । तद्रूपान्यत्वविशिष्टसत्ताभावस्य सत्तात्मकप्रतियोगिसमानाधिकरणत्वेनेति शेषः । अत्र रूपान्यत्वविशिष्टसत्तायाः साध्यत्वे रूपान्यत्वविशिष्टसत्तासम्बन्धिनि रूपाऽसमवेतत्वावच्छिन्नाभावाऽसत्त्वात्तत्सम्बन्धिनिष्ठाभावप्रतियोगिताऽनवच्छेदकं यद्रूपाऽसमवेतत्वं तत्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं भवतीति रूपान्यत्वविशिष्टसत्तात्वं पारिभाषिकावच्छेदकं भवेत्, तथाच नातिव्याप्तिरतो रूपान्यत्वमपहाय तद्रूपान्यत्वेत्युक्तम्, तद्रूपाऽसमवेतत्वावच्छिन्नाभावस्तु तद्रूपान्यत्वविशिष्टसत्तासम्बन्धिनि तद्रूपे वर्त्तते एव । न च साध्याभावस्य लक्षणाऽघटकत्वेऽपि तद्रूपाऽसमवेततद्रूपभिन्नयावत्समवेताद्यभावमादायैव साध्यतावच्छेदकस्य पारिभाषिकाऽवच्छेदकत्वसंभवान्नातिव्याप्तिरिति वाच्यम् । तद्रूपाऽसमवेततद्रूपभिन्नयावत्समवेतस्या"धिकरणा"प्रसिद्ध्या प्रतियोगिव्यधिकरणतादृशाभावाऽसम्भवादतो हेतुसमानाधिकरणाऽभावेऽपि प्रतियोगितावच्छेदकावच्छिन्नाऽसमानाधिकरणत्वं वाच्यमिति निर्दोषत्वसूचनाय प्राहुरित्युक्तम् ।

इदन्त्ववधातव्यमिति । अत्रेयमाशङ्का । महानसीयवह्न्यभावमादायाऽव्याप्तिर्दुर्वारा, तथाहि साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नविशेष्यताया पारिभाषिकावच्छेदकमहानसीयवह्नित्वावच्छिन्नविशेष्यताया भेदाऽसत्त्वात्, विशिष्टवह्नित्वस्य वह्नित्वाऽनतिरेकात् । न च तद्धर्मपर्याप्तावच्छेदकताकविशेष्यताभिन्नादिप्रवेशादेव तद्वारणमिति वाच्यम् । शुद्धवह्नित्वावच्छिन्नविशेष्यताया विशिष्टवह्नित्वपर्याप्ताऽवच्छेदकताकविशेष्यताऽन्यत्वस्याऽसत्त्वात् । अत्रायं सिद्धान्तः । तादृशपारिभाषिकाऽवच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नपर्याप्तिकावच्छेदकताकविशेष्यतान्यविशेष्यतावच्छेदकत्वस्य निवेश्यत्वात्, तथाच वह्निमान् धूमादित्यादौ वह्नित्वावच्छिन्नविशेष्यतातादृशपारिभाषिकावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यन्महानसीयत्ववह्नित्वगतं द्वित्वं तदवच्छिन्नपर्याप्तिकावच्छेदकताकविशेष्यतान्यत्वस्य सत्त्वात् । न च तादृशावच्छेदकत्वानिरूपकं यद्विशेष्यत्वं तदवच्छेदकत्वमेव साध्यतावच्छेदके प्रवेश्यम् किं विशेष्यतानिवेशेनेति वाच्यम् । निरूपकत्वस्यानुगतत्वादतो निरूपकत्वाभावनिवेशे गौरवापत्तेरिति ध्येयम् ।

तावच्छेदके द्रष्टव्यम्, नातः प्रागुक्तदोषाणामवकाशः। नचा महानसीयवह्नित्वादेः पारिभाषिकावच्छेदकतया तदन्यत्वस्य वह्नित्वादावसत्त्वेऽपि वह्निमान् धूमादित्यादावव्याप्तिः. विशिष्टवह्नित्वाभिन्नस्यापि वह्नित्वस्य विशिष्टवह्नित्वावच्छिन्नविशेष्यतान्यविशेष्यतावच्छेदकत्वानपायात् ।

ननु घटवान् महाकालत्वादित्यादौ अव्याप्तिः, गगनत्वादिविशिष्टस्य कालिकसम्बन्धेन सम्बन्ध्यप्रसिद्ध्या पारिभाषिकाऽवच्छेदकत्वाऽसम्भवात्। न च साध्यतावच्छेदकसम्बन्धसामान्ये यादृशधर्मावच्छिन्नाभाववदनुयोगिकत्वयद्धर्मविशिष्टप्रतियोगिकत्वोभयाभाववत्त्वं विवक्षितम्, तच्च गगनत्वादौ सुलभमिति वाच्यम् । तथा सति प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तेरित्युक्तत्वात् । धूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वाऽपेक्षया प्रमेयधूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वस्य गुरुत्वेन तदवच्छिन्नप्रतियोगित्वाऽप्रसिद्धेरिति चेत् ।

अत्र वदन्ति । स्वविशिष्टप्रतियोगिकत्वानि विशिष्योपादाय साध्य-

---

यादृशधर्मावच्छिन्नेति । अत्र यादृशपदं हेतुसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकपरम् । यद्विशिष्टेति । यत्पदं पारिभाषिकावच्छेदकपरम् । तच्चेति । पारिभाषिकावच्छेदकत्वं चेत्यर्थः । तथाच काले घटवान् महाकालत्वादित्यादौ तादृशाभावप्रतियोगितावच्छेदकं गगनत्वं, कालिकसम्बन्धसामान्ये च गगनत्वविशिष्टप्रतियोगिकत्वतदवच्छिन्नाभाववदनुयोगिकत्वोभयाभावसत्त्वान्न गगनत्वस्य पारिभाषिकाऽवच्छेदकत्वक्षतिः । नन्वत्र साध्यतावच्छेदकावच्छिन्नसम्बन्ध्यनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वाभाव एव निवेश्यतामलमुभयाभावनिवेशेनेति चेन्न । सामान्यपदस्य व्यापकत्वार्थकतया तादृशसम्बन्धत्वावच्छिन्नाभावाऽप्रतियोगित्वमेव तादृशाभावे निवेश्यम्, एवं च मूर्तमात्रस्यैव दिगुपाधित्वम्महादिग्वृत्तितायामवच्छेदकत्वं न स्वाधिकरणत्वमिति मते दिक्कृतविशेषणतया घटादेः साध्यत्वे दिक्त्वहेतौ साध्यतावच्छेदकावच्छिन्नसम्बन्ध्यनुयोगिकदिग्विशेषणतात्वावच्छिन्नाभावप्रतियोगितात्वापेक्षया दिग्विशेषणतात्वावच्छिन्नाभावप्रतियोगितात्वस्य लघुत्वेन तादृशप्रतियोगितात्वावच्छिन्नाभावस्याऽप्रसिद्ध्याऽव्याप्त्यापत्तेः । न चैवंरीत्या वह्निप्रतियोगिकसंयोगेन वह्न्यादेः साध्यतायामप्युभयाभावनिवेशाव्याप्तिः सम्भवतीति वाच्यम् । विशेषरूपेण संसर्गतानभ्युपगमात्, अन्यथोभयाभावनिवेशेऽपि प्रमेयप्रतियोगिकसंयोगेन वह्न्यादेः साध्यतायामुक्तरीत्याऽप्रसिद्धेर्दुर्वारत्वादिति । गुरुत्वेनेति । अयमाशयः । प्रकृते सम्बन्धगतप्रतियोगिकत्वाऽनुयोगिकत्वनिष्ठोभयत्वस्य संख्यारूपत्वाऽसम्भवेनाऽपेक्षाबुद्धिविशेषविषयत्वरूपतया ज्ञानविशेषीययद्विशिष्टप्रतियोगिकत्वविषयत्वावच्छिन्नयदवच्छिन्नाभाववदनुयोगिकत्वनिषयत्वमेवोभयत्वम्, तथाच प्रमेयधूमत्वविशिष्टप्रतियोगिकत्वघटितोभयत्वस्य धूमत्वविशिष्टप्रतियोगिकत्वघटितोभयत्वापेक्षया गुरुत्वम् । एतेन द्वित्वात्मकोभयत्वव्यक्तिशरीरे प्रमेयधूमत्वादेरप्रवेशेन कथं गुरु-

तावच्छेदकसम्बन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववदनुयोगिकत्वस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य च द्वयोर्व्यतिरेकः स धर्मः पारिभाषिकोऽवच्छेदकः। प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेऽपि तत्तद्धर्मप्रतियोगिकत्वघटितोभयाभावकूटमादायैव नातिव्याप्तिः। कालो घटवान् महाकालत्वादित्यादौ च गगनत्वमेव तादृशोऽवच्छेदकमादाय लक्षणसमन्वय इति।

---

त्वमिति शंकाया अनवकाशः। विशिष्य–तत्तद्व्यक्तित्वादिना। द्वयोर्व्यतिरेक इति। अत्र च समवायनिष्ठघटत्वावच्छिन्नप्रतियोगिकत्वहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्वोभयाभावः एवं संयोगादिनिष्ठघटत्वावच्छिन्नप्रतियोगिकत्वानिरुक्तप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्वोभयाभावः एतादृशाभावकूटवत्त्वं साध्यतावच्छेदकसम्बन्धे निवेश्यम्, न तु तद्धर्मावच्छिन्नप्रतियोगित्वानि यावन्ति तत्प्रत्येकघटितोभयाभावः, तथासति घटत्वावच्छिन्नप्रतियोगिताकत्वयावदन्तर्गतसमवायनिष्ठघटप्रतियोगिकत्वसहितोभयाभावाप्रसिद्धावपि संयोगादिनिष्ठघटप्रतियोगिकत्वघटितोभयाभावघटयावत्त्वाऽप्रसिध्या तावदभावमादाय न पारिभाषिकावच्छेदकाऽप्रसिद्धिः। वस्तुतस्तु कूटानिवेशेन (प्रतियोगिभेदेन प्रतियोगिकत्वस्य भेदाद्) वह्नित्वविशिष्टमहानसीयवह्निप्रतियोगिकत्वमहानसीयवह्नित्वावच्छिन्नाभाववदनुयोगिकत्वोभयाभावस्य संयोगसामान्ये सत्त्वेऽपि न वह्नित्वस्याऽवच्छेदकत्वमिति।

अथैवमपि कालो घटवान् महाकालत्वादित्यत्र पारिभाषिकाऽवच्छेदकाऽप्रसिद्धिः, गगनत्वावच्छिन्नाभाववदनुयोगिकत्वघटितोभयाभावाऽप्रसिद्धिः, तादृशोभयत्वस्य गगनत्वावच्छिन्नप्रतियोगिताकत्वाऽपेक्षया गुरुत्वेनाऽनवच्छेदकत्वादिति चेत्। अत्राहुः। तदवच्छिन्नाभाववदनुयोगिकत्वानि अपि विशिष्योपादाय तदवच्छिन्नाभाववदनुयोगिकत्वव्यक्तीनां प्रत्येकस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य चोभयाभावकूटवत्त्वं विवक्षणीयम्, तथाच गगनाभाववदनुयोगिकत्वत्वेन तादृशानुयोगिकत्वसामान्यघटितोभयाभावस्याऽप्रसिद्धावपि गगनाभाववदनुयोगिकप्रत्येकान्तर्गतमहाकालानुयोगिकत्वगगनप्रतियोगिकत्वोभयाभावस्य प्रसिद्धत्वान्न दोषः। एवं च साध्यतावच्छेदकसम्बन्धसामान्ये तदवच्छिन्नाभाववदनुयोगिकत्वत्वसमानाधिकरणोभयावृत्तिधर्मयद्धर्मविशिष्टप्रतियोगिकत्वत्वसमानाधिकरणोभयावृत्तिधर्मउभयत्वैतत्त्रितयधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वं साध्यतावच्छेदकसम्बन्धसामान्ये निवेशनीयम्। तद्व्यक्तिएतद्व्यक्तिएतदुभयं नास्तीति प्रतीतिसाक्षिकाभावो ग्राह्यः। न चाऽनुयोगित्वस्य परिचायकं व्यर्थमिति वाच्यम्। घटभिन्नं द्रव्यत्वादित्यत्राऽतिव्याप्तेः, साध्याभाववदनुयोगिकत्वघटितोभयाभावप्रतियोगितावच्छेदकत्वं लाघवाद् घटानुयोगिकत्वत्वे एव कल्प्यते इत्यभावान्तरस्यैव लक्षणघटकत्वादिति। तादृशानुयोगिकत्वत्वप्रतियोगिकत्वत्वोभयमेव द्वित्वस्य परिचायकं न त्ववच्छेदकं तादृशद्वित्वव्यक्त्यवच्छिन्नाभावकूटस्यैव प्रवेशात् तद्धीः स्वरूपतो भानोपगमान्न कोपि दोषः।

(१) वस्तुतस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्मः प्रतियोगिव्यधिकरणस्तदवच्छिन्नाभावत्वावच्छेदेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितानिरूपितविशेषणतया यद्धर्मविशिष्टसम्बन्धित्वसामान्याभावस्तत्त्वे, यद्धर्मे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोग्यनधिकरणवृत्त्यधिकरणतावच्छेदकत्वसामान्यस्य प्रकृतसाध्याधिकरणतावच्छेदकत्वनिरूपितस्वरूपसम्बन्धेनाऽभावस्तत्त्वे वा स्वविशिष्टसम्बन्धीत्यादिनिरुक्तेस्तात्पर्यात् गगनत्वादौ सहजतः पारिभाषिकाऽवच्छेदकत्वं सुलभमिति ध्येयम् ।

केचित्तु तादात्म्य(२)साध्यतावच्छेदकान्यतरसम्बन्धेन यः स्वविशिष्टसम्बन्धी तन्निष्ठो यस्तदन्यतर(३)सम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वमुक्तलक्षणार्थः । तथाच तादृशान्यतरतादात्म्यसम्बन्धेन गगनत्वविशिष्टसम्बन्धिनि आकाशे वर्त्तमानो गगन

---

नन्वेतादृशनिवेशे "तदवच्छिन्नाभाववदसम्बद्ध" इत्यादिपूर्वकल्पस्यापि निर्दोषत्वसम्भवे अलं कल्पान्तरानुसरणेनेति चेन्न । एतदस्वरसेनैव वदन्तीत्युक्तत्वात् ।

केचित्त्विति । तादात्म्यसम्बन्धनिवेशाद् घटवान् महाकालत्वादित्यादौ गगनत्वादेर्नावच्छेदकत्वाऽप्रसिद्धिनिबन्धनाऽव्याप्तिः । अत्र तादात्म्यमात्रेण यद्धर्मविशिष्टसम्बन्धित्वनिवेशे केवलतादात्म्येन प्रतियोगिवैयधिकरण्यनिवेशे च द्रव्यं पृथिवीत्वादित्यत्राऽव्याप्तिः, घटवृत्तित्वविशिष्टद्रव्यत्वाभावस्य प्रतियोगितावच्छेदकं विशिष्टद्रव्यत्वत्वं तस्य तादात्म्येन द्रव्यत्वत्वविशिष्टसम्बन्धिद्रव्यत्वं तन्निष्ठकेवलतादात्म्येन प्रतियोगिव्यधिकरणाभावप्रतियोगिताऽनवच्छेदकत्वात् । एवं तादात्म्येन यद्धर्मविशिष्टसम्बन्धिनिष्ठः तादात्म्यसाध्यतावच्छेदकान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो योऽभावस्तत्प्रतियोगितावच्छेदकतत्कत्वविवक्षणेऽपि तद्दोषतादवस्थ्यम् । सत्तावान् द्रव्यत्वादित्यादावव्याप्तिश्च, साधनवन्निष्ठद्रव्यान्यत्वविशिष्टसत्ताभावप्रतियोगितावच्छेदकं यद् द्रव्यान्यत्वविशिष्टसत्तात्वं तस्य तादात्म्येन सत्तात्वविशिष्टसम्बन्धिनि प्रतियोगिव्यधिकरणो घटाभाव एव न तु विशिष्टसत्ताभावस्तत्प्रतियोगितानवच्छेदकत्वेन सत्तात्वस्य पारिभाषिकावच्छेदकत्वात् । यदि च तद्विवक्षणेऽपि तत्राव्याप्तिस्तदवस्थैव, साधनसमानाधिकरणघटान्यत्वविशिष्टाभावप्रतियोगितावच्छेदकघटान्यत्वस्य तादृशान्यतरसम्बन्धेन सत्तात्वविशिष्टसम्बन्धिनि घटे सत्त्वे वा तादृशान्यतरसम्बन्धेन प्रति

---

(१) ननु यद्धर्मावच्छिन्नप्रतियोगिव्यक्तीः विशिष्योपादाय तत्तद्व्यक्तिघटिततादृशाभावकूटनिवेशेऽपि यद्व्यक्तिविशेषस्य कदाचिदपि प्रतियोगिताज्ञानातिरिक्तज्ञानं न जातं प्रमेयत्वविशिष्टतद्व्यक्तित्वादिरूपेण साध्यतायां व्यभिचारिण्यतिव्याप्तिः साध्यतावच्छेदकस्य गुरुतया तदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्या लाघवात् तद्व्यक्तित्वस्यैव कल्पनादनतिप्रसक्तत्वादित्यत आह वस्तुत इति ।

(२) सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावमादायाव्याप्तिवारणाय साध्यताघटकेति ।

(३) धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणाय द्वितीयसाध्यताघटकेति । न चायोगोलकावृत्तित्वावच्छिन्नाभावमादाय नातिव्याप्तिरिति वाच्यम् । संयोगेन धूमसम्बन्धिनि दर्शितस्य प्रतियोगिव्यधिकरणत्वात् ।

भावो नैतादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणः, तस्य तादात्म्येन प्रतियोगिसमानाधिकरणत्वात्, किन्तु घटाभाव एव तथेति तत्प्रतियोगितानवच्छेदकमेव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतं गगनत्वमिति तमादायैव काले घटवान् महाकालत्वादित्यादौ लक्षणसंगतिः ।

---

योगिव्यधिकरणो न घटान्यत्वविशिष्टाभावः तादात्म्यसम्बन्धेन घटान्यत्वविशिष्टघटस्यैव सम्बद्धत्वात्, तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्याऽन्यविधाभावस्य प्रतियोगिताऽनवच्छेदकत्वादिति विभाव्यते, तदा द्रव्यं गगनत्वादित्यादावव्याप्तिवारणाय तत् । तदुपादाने गगनान्यत्वविशिष्टाभावप्रतियोगितावच्छेदकगगनान्यत्वस्य "गगनस्य गगनाऽन्यत्वविशिष्टत्वाभावेन" तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य द्रव्यत्वविशिष्टसम्बन्धिनिष्ठगगनाऽन्यत्वविशिष्टाभावस्य प्रतियोगितावच्छेदकत्वेन द्रव्यत्वत्वस्य पारिभाषिकावच्छेदकत्वाभावान्नाव्याप्तिरिति । एवं तादात्म्यसाध्यतावच्छेदकान्यतरसम्बन्धेन यद्धर्मविशिष्टसम्बन्धित्वं केवलतादात्म्येन प्रतियोगिवैयधिकरण्यं यद्युच्यते, तदा धूमवान् वह्नेरित्यादावतिव्याप्तिः, साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकधूमत्वस्य तादृशाऽन्यतरसम्बन्धेन धूमत्वविशिष्टस्य सम्बन्धिनि पर्वतादौ वर्त्तमानस्य तादात्म्येन प्रतियोगिव्यधिकरणधूमाभावस्य प्रतियोगितावच्छेदकत्वेन पारिभाषिकावच्छेदकभिन्नत्वस्य धूमत्वादौ सत्त्वात् । यदि च व्यभिचारिस्थलाऽवृत्तित्वविशिष्टस्य पर्वतादेः पर्वतादौ तादात्म्येन सम्बद्धतया तादृशान्यतरसम्बन्धेन धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य व्यभिचारिस्थलाऽवृत्तित्वे सत्त्वेन व्यभिचारिस्थलाऽवृत्त्यभावमादायैव तत्र नातिव्याप्तिः, एवं धूमधूमवदन्यतराभावमादायाऽपि इति विभाव्यते, तदा रूपत्ववान् रूपघटान्यतरत्वादित्यादावतिव्याप्तिः, रूपत्वत्वविशिष्टसम्बन्धिनि रूपे रूपत्वत्वविशिष्टस्य घटाऽवृत्तित्वविशिष्टस्य च तादात्म्येनाऽसम्बद्धतया तादात्म्यसम्बन्धेन प्रतियोगिव्यधिकरणतन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य साधनसमानाधिकरणाभावप्रतियोगितावच्छेदके रूपत्वत्वे घटाऽवृत्तित्वे च सत्त्वादिति । यद्यप्यत्रापि तद्रूपान्यत्वविशिष्टाभावमादाय नातिव्याप्तिरिति विभाव्यते, तदा गगनत्वत्वविशिष्टस्य स्वरूपसम्बन्धेन गगनावृत्तेर्वा विशेष्यतया साध्यत्वे गगनगगनत्वान्यतरत्वादिहेतावतिव्याप्तिवारणाय तदिति ध्येयम् । वस्तुतो द्रव्यत्वाभाववान् सत्त्वादित्यत्राऽतिव्याप्तिः, द्रव्यत्वाभावतद्वदन्यत्वस्य स्वरूपेण केवलान्वयितया प्रतियोगिवैयधिकरण्यविरहेण लक्षणाऽघटकत्वात् । केवलद्रव्यत्वाभावाभावस्य लक्षणघटकत्वेऽपि तादृशान्यतरसम्बन्धेन द्रव्यत्वाभावत्वविशिष्टसम्बन्धिगुणादिनिष्ठकेवलतादात्म्येन प्रतियोगिव्यधिकरणत्वात्, द्रव्याऽवृत्त्यभावस्य च तादृशान्यतरसम्बन्धेन द्रव्यत्वाभावत्वविशिष्टसम्बन्धिनि गगनाभावे प्रतियोगिव्यधिकरणत्वादत उभयत्राऽन्यतरसम्बन्धानुधावनमिति ध्येयम् । केचित्तु तादात्म्यमात्रेण यद्धर्मविशिष्टसम्बन्धित्वोक्तौ वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिः, तादात्म्येन उभयवैशिष्ट्याऽप्रसिद्ध्या यद्धर्मपदेन वह्निधूमोभयत्वस्य धर्तुमशक्यत्वात् । तादात्म्यमात्रेण प्रतियोगिवैयधिकरण्योक्तौ कालिकविषयितान्यतरसम्बन्धेन घटस्य साध्यतायां महाकालत्वादिहेतावव्याप्तिः पारिभाषिकावच्छेदकाप्रसिद्धेरित्याहुः ।

न चैवं धूमगगनाभावान्यतरस्य संयोगेन साध्यत्वे वह्न्यादा(१)वतिव्याप्तिः, तादृशान्यतरत्वापेक्षया लघुत्वेन धूमत्वस्यैव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वात्तस्य च संयोगतादात्म्यान्यतरसम्बन्धेन यस्तदन्यतरत्वविशिष्टस्य सम्बन्धी गगनाऽभावस्तन्निष्ठस्य तादात्म्यसंयोगान्यतरसम्बधेन प्रतियोगिन्यधिकरणस्य धूमाभावस्य प्रतियोगितावच्छेदकतया धूमगगनाऽभावान्यतरत्वस्य पारिभाषिकाऽवच्छेदकत्वविरहादिति वाच्यम् । धूमगगनाभावान्यतरत्वस्याप्यखण्डस्य धूमत्वतुल्यतया

अथ तादात्म्येन साध्यतास्थले भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपाऽन्यतरत्वाऽप्रसिद्धिरिति चेन्न । तत्रापि तादात्म्यो नेतिभेदस्य साध्यतानिरूपितकिञ्चित्सम्बन्धानवच्छिन्नावच्छेदकतावान्नेतिभेदस्य च प्रसिद्धत्वात्। अथवा तादात्म्याऽवृत्तित्वे सति साध्यताघटकसम्बन्धाऽवृत्तिर्यो धर्मः तच्छून्यत्वरूपस्याऽन्यतरत्वस्य प्रसिद्धेः । अतएव तर्कग्रन्थे वह्नितच्छून्यान्यतरजन्यो न स्यादिति दीधित्युपरि वह्नितच्छून्याऽन्यतरत्वं च वह्न्यवृत्तिसत्तच्छून्याऽवृत्ति यत्तच्छून्यत्वमिति गदाधरभट्टाचार्यैरुक्तम्।न च तथापि तादात्म्यावृत्तित्वविशिष्टसाध्यतावच्छेदकसम्बन्धावृत्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं लाघवात्तादात्म्याऽवृत्तित्वे एव कल्प्यते इत्यप्रसिद्धितादवस्थ्यमिति वाच्यम् । तादाम्याऽवृत्तित्वे सति साध्यताघटकसम्बन्धाऽवृत्ति यद्यत्तत्तदभावकूटवत्त्वविवक्षणेन दोषाभावादिति ।

लघुत्वेन धूमत्वस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वादिति । ननु अत्र हेतुसमानाधिकरणाऽन्यतरभेदप्रतियोगितावच्छेदकाऽन्यतरत्वे तादृशान्यतरसम्बन्धेनाऽन्यतरत्वविशिष्टसम्बन्धिनिष्ठस्याऽन्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितावच्छेदकत्वेनाऽन्यतरत्वस्य पारिभाषिकावच्छेदकत्वान्न तत्राऽतिव्याप्तिः । न चाऽन्यतरत्वं भेदप्रतियोगितावच्छेदकमेव न भवति लघुतया धूमत्वस्यैव तथात्वादिति वाच्यम् । गगनाभावेऽन्यतरभेदस्य प्रलयप्रसङ्गात् । न चाऽन्यतरत्वावच्छिन्नप्रतियोगिताकत्वाऽयोगोलकानुयोगिकत्वैतदुभयत्वापेक्षया धूमत्वावच्छिन्नप्रतियोगिकत्वाऽयोगोलकाऽनुयोगिकत्वैतदुभयत्वस्य लघुत्वात्तादृशान्यतरत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वावच्छिन्नाभावाऽप्रसिद्ध्या अन्यतरत्वावच्छिन्नप्रतियोगितायाः लक्षणाऽघटकत्वेनाऽतिव्याप्तिः सुदृढैवेति वाच्यम् । गगनाभावप्रतियोगिकस्वरूपसम्बन्धस्य धूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयाभाववतः अन्यतरत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वावच्छिन्नाभावाऽसत्त्वात् लघुनोऽपि धूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य अन्यतरत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वावच्छिन्नाभावप्रतियोगिताऽनवच्छेदकत्वादिति चेन्न । धूमत्वप्रकारकप्रमाविशेष्यत्वप्रमेयत्वैतदन्यतरविशिष्टस्य धूमप्रतियोगिकसंयोगेन साध्यतायां वह्न्यादिहेतावतिव्याप्तितात्पर्यात् , तादृशान्यतरविशिष्टाभावीयप्रतियोगितावच्छेदकं लाघवाद्धूमत्वमेव तादृशान्यतरविशिष्टस्य भेदाऽप्रसिद्ध्याऽनतिप्रसक्तत्वात् । न चैवंसति अन्यतरत्वस्याऽखण्डस्येति ग्रन्थविरोध इति वाच्यम् । तेन

(१) नचायोगोलकवृत्तित्वावच्छिन्नाभावमादाय नातिव्याप्तिरिति वाच्यम् । आदिपदाद्गगनाभावसमवेतान्यतरवान् अभाववह्न्यादिस्यादावतिव्याप्तिर्निपुणतरं विभावनीया ।

तस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य स्वविशिष्टसम्बन्धिनिष्ठ-ताद‍ृशसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगिताऽनवच्छेदकत्वेन पारिभाषिकाऽवच्छेदकत्वेनाऽतिव्याप्तिविरहादिति प्राहुः । तन्मन्दम्; रूपवान् घटत्वादित्यादावव्याप्तिप्रसङ्गात् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपत्वद्रव्यान्यतरत्वं तस्य ताद‍ृशसम्बन्धेन रूपत्ववि-

---

अन्यतरत्वस्याऽभावात्मकतयाऽभावस्य स्वरूपतोऽवच्छेदकत्वस्याऽऽविष्कृतत्वात् । तथा च गगनाभावमादायैवाऽत्र नातिव्याप्तिरिति भावः ।

केचित्तु साध्यतावच्छेदकसम्बन्धसामान्ये याद‍ृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावस्ताद‍ृशप्रतियोगितावच्छेदकधर्मेऽन्यतरसम्बन्धेन यद्धर्मविशिष्टसम्बन्धिनिष्ठान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाऽभावप्रतियोगितानवच्छेदकत्वं वाच्यम्, अन्यथा धूमवान् वह्नेरित्यादौ धर्मान्तरावच्छिन्नप्रतियोगिकत्वघटितोभयत्वमादायाऽतिव्याप्तिः स्यात्, एवंसति लाघवात्साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया एव याद‍ृशयाद‍ृशत्वेन लक्षणे निवेशनीयतया धूमगगनाभावान्यतरसाध्यकव्यभिचारिण्यतिव्याप्त्यभिधानमपि सङ्गच्छते, अन्यतरभेदप्रतियोगिताया लक्षणाऽघटकत्वात् । ननु तथाप्ययोगोलके संयोगेनाऽवृत्तेः संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायैव नातिव्याप्तिः, तथाहि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाऽयोगोलकाऽवृत्तित्वस्य तादात्म्यसाध्यतावच्छेदकान्यतरसम्बन्धेन यद्धर्मविशिष्टस्य सम्बन्धिनो ये धूमगगनाभावपर्वतादयः तन्निष्ठान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो नाऽयोगोलकाऽवृत्त्यभावः अयोगोलकावृत्तिरूपतत्प्रतियोगिनो धूमगगनाभावपर्वतादिषु अन्यतरसम्बन्धेन सम्बन्धित्वात्, किन्त्वयोगोलकसंयुक्तगगनाद्यभाव एव ताद‍ृशप्रतियोगिव्यधिकरणस्तत्प्रतियोगितानवच्छेदकत्वात्, तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके सत्त्वान्नातिव्याप्तिरिति । मैवम् । वह्निमान् धूमादित्यादौ पर्वतान्यत्वविशिष्टाभावमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकातिरिक्ताऽभावाऽनवच्छिन्नत्वस्य प्रतियोगितायां निवेशनीयतया अयोगोलकाऽवृत्त्यभावस्य लक्षणाऽघटकतया अभावान्तरस्य लक्षणघटकतयाऽतिव्याप्तिसङ्गतिरिति ।

परेतु धूमप्रतियोगिकसम्बन्धेन ताद‍ृशान्यतरसाध्यकव्यभिचारिण्यतिव्याप्तिरित्यत्रैव तात्पर्यादिति ।

केचित्तु समवेतगगनाभावान्यतरस्य समवायेन साध्यत्वे व्यभिचारिण्यातिप्रसङ्गात् । तन्न सामान्याद्यवृत्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन समवेतत्वे एव कल्पनादिति ।

रूपवान् घटत्वादित्यादावव्याप्तिप्रसङ्गादिति । अथ वह्निमान् धूमादित्यादिप्रसिद्धस्थले विशेषणतासंयोगसम्बन्धावच्छिन्नसम्बन्धित्वघटितसामानाधिकरण्यसम्बन्धेन तत्पर्वतान्यत्वविशिष्टाभावमादायाऽव्याप्तिसम्भवे तत्त्यागोऽनुचित इति चेन्न । साधनसमानाधिकरणाभावप्रतियोगितायां साध्यतावच्छेदकातिरिक्ताऽभावानवच्छिन्नत्वेन विशेषणीयत्वात् ।

न च तथापि समानाधिकरण्यसम्बन्धेन गगनत्वविशिष्टद्रव्यत्वावच्छिन्नाभावमादाय वह्निमान्

शिष्टसम्बन्धिनिष्ठतादृशसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेन रूपत्वस्य पारिभाषिकाऽवच्छेदकत्वात् । तथाहि तादात्म्यसमवायान्यतरसम्बन्धेन यद्रूपत्वविशिष्टस्य सम्बन्धि रूपं पृथिव्यादिकं च तत्र तादात्म्यसमवायान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणो न रूपत्वद्रव्यान्यतरत्वावच्छिन्नाभावः समवायेन रूपे रूपत्वाख्यप्रतियोगिनः तादात्म्येन च पृथिव्यादौ द्रव्यात्मकप्रतियोगिनः सम्बद्धत्वात्, किन्तु रूपत्वविशिष्टस्य तथाविधसम्बन्धिनिष्ठो यः घटाद्यभावः स एव तादृशप्रतियोगिव्यधिकरण इति रूपत्वद्रव्यान्यतरत्वे तत्प्रतियोगितानवच्छेदकत्वध्रौव्यम् । न च हेतुसमानाधिकरणस्याऽभावस्यापि तादृशान्यतरसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य वक्तव्यत्वान्नैष दोषः । तथासति समवा-

धूमादित्यादाव्याप्तितादवस्थ्यमिति वाच्यम् । तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणस्य विशेषणतासंयोगघटितसमानाधिकरण्यसम्बन्धेन गगनत्वविशिष्टद्रव्यत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकत्वस्य साधनवन्निष्ठाभावीयतादृशप्रतियोगितावच्छेदके सत्त्वेन वह्नित्वस्य पारिभाषिकाऽवच्छेदकत्वाभावादिति ।

केचित्तु एकसम्बन्धावच्छिन्नवृत्तिताविशिष्टस्य विषयित्वाऽतिरिक्तसम्बन्धेनाऽधिकरणत्वं न स्वीक्रियते इति मतेनेदम् । न च यद्धर्मविशिष्टसम्बन्धिनीत्यत्र तादात्म्यसम्बन्धेन सम्बन्ध्यप्रसिद्ध्या गुणान्यत्वविशिष्टसत्तात्वस्य तादात्म्येन सत्तात्वविशिष्टसम्बन्धिनि सत्तादौ वर्तमानस्य तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणगुणान्यत्वविशिष्टसत्ताभावस्य प्रतियोगितावच्छेदकत्वेन सत्तात्वस्य पारिभाषिकावच्छेदकत्वाभावेन साध्यतावच्छेदकसम्बन्धनिवेशो व्यर्थ इति वाच्यम् । गगनाभाववत्ववान् तद्व्यक्तित्वादित्यत्राऽव्याप्तेः, साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य गगनाभाववत्वस्य तादात्म्यसम्बन्धेन साध्यतावच्छेदकीभूतगगनाभाववत्वत्वावच्छिन्नसम्बन्धिनि गगनाभाववत्वे वर्तमानस्याऽन्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगिताऽनवच्छेदकत्वेन गगनाभाववत्वस्य पारिभाषिकाऽवच्छेदकत्वात् । अन्यतरसम्बन्धेन सम्बन्धित्वोपादाने च तादृशान्यतरसम्बन्धेन गगनाभाववत्वविशिष्टसम्बन्धिनि गगनाभावे अन्यतरसम्बन्धेन प्रतियोगिव्यधिकरणगगनाभाववत्वावच्छिन्नाभावीयप्रतियोगितावच्छेदकत्वस्य साधनवन्निष्ठाभावीयतादृशप्रतियोगितावच्छेदके सत्त्वेन साध्यतावच्छेदके पारिभाषिकावच्छेदकत्वाभावान्नाव्याप्तिरिति । एवं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्त्यापत्तिः, विशिष्टसत्तात्वविशिष्टस्य तादात्म्येन सम्बन्धित्वाऽप्रसिद्ध्या यद्धर्मपदेन विशिष्टसत्तात्वस्य धर्तुमशक्यत्वेन धर्मान्तरस्यैव धर्तव्यतया तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वादित्याहुः । तन्न समीचीनम् । सर्वत्राऽसम्भवापत्तेः, घटादिवृत्तित्वविशिष्टद्रव्यत्वावच्छिन्नस्य तादृशान्यतरसम्बन्धेन सम्बन्धित्वाऽप्रसिद्ध्या तादृशान्यतरसम्बन्धेन वह्नित्वविशिष्टसम्बन्धिनि पर्वतादौ तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावान्तरप्रतियोगितानवच्छेदकत्वस्य साधनसमानाधिकरणाभावप्रतियोगितावच्छेदके घटादिवृत्तित्वविशिष्टद्रव्यत्वे सत्त्वादिति ।

येन घटत्व(१)स्य प्रमेयस्य वा साध्यत्वे तादात्म्येन हेतौ घटत्वे प्रमेये वाऽतिप्रसङ्गादिति दिक्।

---

तथासतीति। ननु घटत्वस्य समवायेन साध्यत्वे कम्बुग्रीवादिमत्त्वहेतौ सामानाधिकरण्यसम्बन्धेन तद्घटान्यत्वविशिष्टाभावमादायाऽव्याप्तिः। न च तद्वारणाय हेतुमन्निष्ठाभावप्रतियोगितायामवच्छेदकताद्वयानिरूपितत्वं निवेश्यमिति वाच्यम्। तथासति अन्यतरत्वस्याऽखण्डोपाधित्वमते धूमगगनाभावान्यतराभावप्रतियोगितावच्छेदकताया धूमत्वगगनाभावत्वाऽन्यतरत्वैतत्रितयपर्याप्ततया तादृशाभावस्य लक्षणाऽघटकत्वापत्तेरिति चेन्न। साध्यतावच्छेदकाऽतिरिक्ताऽभावानवच्छिन्नत्वस्य प्रतियोगितायां निवेशादिति।

केचित्तु ज्ञानवान् आत्मत्वादित्वादौ समवायेन साध्यतायामव्याप्तिः, तत्राऽऽत्मत्वादिसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकं ज्ञानत्वज्ञानवदन्यतरत्वादि, तच्च तादृशान्यतरसम्बन्धेन ज्ञानत्वादिविशिष्टसम्बन्धिनि ज्ञाने आत्मनि च वर्त्तते यस्तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकमेव, ज्ञानादौ साध्यतावच्छेदकीभूतसमवायेन आत्मादौ तादात्म्येन तादृशान्यतरस्य सम्बद्धत्वेन तादृशान्यतरत्वावच्छिन्नाभावस्य प्रतियोगिव्यधिकरणत्वाभावात्। न च मौलप्रतियोगिवैयधिकरण्यमपि उक्तान्यतरसम्बन्धेनैव वाच्यमिति तादृशान्यतरत्वस्य तादृशाभावप्रतियोगितावच्छेदकत्वाभावान्नोक्तरीत्याऽव्याप्तिरिति वाच्यम्। तथासति घटवद् घटकपालान्यतरत्वादित्यादौ समवायेन साध्यतायामतिव्याप्तेः, निरुक्तान्यतरत्वरूपहेतुमति घटे वर्तमानस्य समवायेन घटाभावस्य तादात्म्येन प्रतियोगिसमानाधिकरणतया लक्षणानन्तर्गतत्वादिति प्राहुः।

ननु तादृशान्यतरीययत्सम्बन्धेन यः स्वविशिष्टसम्बन्धी तन्निष्ठतादृशान्यतरीययत्संबन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितावच्छेदकतत्कत्वविवक्षणादेव रूपवान् घटत्वादित्यत्र नाव्याप्तिरिति चेन्न। सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावमादायाऽव्याप्तिप्रसङ्गात्, तादृशान्यतरीयतादात्म्यसम्बन्धेन सत्तात्वविशिष्टसम्बन्धिनि सत्तादौ तादात्म्येन प्रतियोगिव्यधिकरणो न विशिष्टसत्ताभावः, अपि तु घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकत्वस्य साधनसमानाधिकरणविशिष्टसत्ताभावप्रतियोगितावच्छेदके सत्त्वेन सत्तात्वस्य पारिभाषिकाऽवच्छेदकत्वात्। न च तादृशयत्सम्बन्धेन यो यो यद्धर्मविशिष्टसम्बन्धी तत्तत्सम्बन्धेन तत्तन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतत्कत्वमर्थः, तथाच वीप्सान्तर्गतसमवायेन सत्तात्वविशिष्टसंबन्धिनि गुणादौ विशिष्टसत्ताभावस्य प्रतियोगिव्यधिकरणतया तत्प्रतियोगितानवच्छेदकत्वस्य विशिष्टसत्तात्वेऽसत्त्वान्न सत्तात्वस्याऽवच्छेदकत्वापत्तिरिति वाच्यम्। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं गगनत्वस्य तादृशयत्सम्बन्धेन सम्बन्धित्वाप्रसिद्ध्या घटत्वविशिष्टसम्बन्धी यो यस्तन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वाद् अप्रमानकालीनतत्तद्व्यक्तित्वे तत्तदवच्छेदकत्वात् कालो घटवान् महाकालत्वादित्यत्राव्याप्तेः। यदि चात्र स्वाऽवच्छेदकसम्बन्धावच्छिन्नत्वस्व-

---

(१) साध्यतावच्छेदकसम्बन्धेन प्रकृतसाध्याधिकरणत्वतादृशान्यतरसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभाववत्त्वेन प्रतियोगिवैयधिकरण्यनिवेशे तु न कोऽपि दोषः, किन्तु महागौरवमिति ध्येयम्।

सामानाधिकरण्योभयसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धिताविशिष्टान्यया याऽन्यतरसम्बन्धावच्छिन्ना यद्धर्मावशिष्टसम्बन्धिता तद्वन्निष्ठाभावप्रतियोगितानवच्छेदकतत्त्वमित्युक्तौ नैष दोष इति विभाव्यते, तदा घटान्यत्वविशिष्टप्रमेयवान् वाच्यत्वादित्यादावतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकं लाघवाद् घटभेदत्वमेव, तथाच गगनाभावादिनिष्ठा या साध्यतावच्छेदकावच्छिन्नतादात्म्यसम्बन्धावच्छिन्नसम्बन्धिता तस्या निरुक्तसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसम्बन्धिताविशिष्टान्यत्वात्, तद्वन्निष्ठाभावप्रतियोगितावच्छेदकमेव घटभेदत्वमतो यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वादिति ध्येयम् । सामान्यधर्मावच्छिन्नाधिकरणत्वस्यैक्यमते तत्तद्यक्त्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिश्चेति विभावनीयम् ।

नच तथापि कालो घटवान् महाकालत्वादित्यादावव्याप्तिवारणायाऽव्याप्तिनिरूपिततादात्म्यसाध्यताघटकान्यतरसम्बन्धेन यः स्वविशिष्टसम्बन्धी तन्निष्ठो यस्तादृशान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्त्वविवक्षणाज्ञोक्तस्थलेऽव्याप्तिरिति वाच्यम् । शब्दवान् गगनत्वादित्यादौ शब्दत्वगगनान्यतराभावमादायाव्याप्तेः तादृशान्यतरघटिततादृशावच्छेदकभेदकूटस्य साधनवन्निष्ठाभावप्रतियोगितावच्छेदके सत्त्वात् । एवं संयोगेन द्रव्यसाध्यकद्रव्यत्वादिहेतौ आत्मान्यत्वविशिष्टद्रव्याभावमादायाव्याप्तिश्चेति ध्येयम् ।

ननु स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वसाध्यतावच्छेदकान्यतरसम्बन्धेन यद्धर्मविशिष्टसम्बन्धित्वं प्रतियोगिवैयधिकरण्यं च प्राह्यम्, एवं चैतल्लक्षणपरित्यागो निर्युक्तिक इति चेन्न । यत्र पटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगिकत्वघटत्वावच्छिन्नप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्व–घटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितानुयोगिकत्व स्ववृत्तिवाच्यत्ववत्त्वएतदन्यतरसम्बन्धेन घटस्य साध्यता घटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितापटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितान्यतरत्वस्य हेतुता तत्राऽव्याप्तिः, तत्र हेतुमन्निष्ठस्य पटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितायां प्रतियोगिव्यधिकरणस्य प्रतियोतावच्छेदके पटत्वे साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वसत्त्वात्, साध्यतावच्छेदकताविशिष्टसम्बन्धिनि घटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितायां पटत्वस्य स्वानवच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वसम्बन्धेन तद्विशिष्टसम्बन्धिनि घटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितायां साध्यतावच्छेदकान्यतरघटकघटत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितानुयोगिकस्ववृत्तिवाच्यत्ववत्तासम्बन्धेन पटत्वावच्छिन्नस्य सत्त्वात्तदवच्छिन्नाभावस्य प्रतियोगिव्यधिकरणत्वविरहात्, तथाचोक्तान्यतरीययत्सम्बन्धेन विशिष्टसम्बन्धित्वं प्रतियोगिवैयधिकरण्यं वाच्यम्, तथाच न दोषः । अस्यानुगमस्तु स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वभेदसाध्यतावच्छेदकसम्बन्धभेदौ तद्भेदावच्छिन्नप्रतियोगिताकभेदीयप्रतियोगितानिरूपितपरम्परीयभेदनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्व सम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नसंसर्गतानिरूपितयद्धर्मावच्छिन्ननिरूपकतानिरूपितसम्बन्धितावदन्यत्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके विवक्षितम्, सम्बन्धितावत्ता च स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन, अभावे स्ववृत्तित्वं च स्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नसम्बन्धितात्वावच्छिन्नावच्छेदकताकभेदवत्त्वसम्बन्धेन, सम्बन्धितात्वा-

अत एव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्तात्वतुल्यवृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः ।

अत एवेति । वस्तुतस्त्वित्यादिकल्पस्याऽऽदृततत्वादेवेत्यर्थः । यथाश्रुतवच्छिन्नावच्छेदकता च स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेन, संसर्गघटकस्वनिरूपितप्रतियोगितावच्छेदकावच्छिन्नसम्बन्धिता च उक्तभेदीयप्रतियोगितानिरूपितपरम्परीयभेदनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नसंसर्गतानिरूपिता । अथवा साध्यतावच्छेदकसंसर्गतावच्छेदकधर्मनिष्ठावच्छेदकताभिन्ना स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगित्वत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या संसर्गता तादृशसंसर्गतानिरूपितयद्धर्मावच्छिन्नसम्बन्धितावदन्यत्वं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदके विवक्षितम्, सम्बन्धितावत्ता च उक्तसम्बन्धेन, सम्बन्धघटकसम्बन्धिता च साध्यतावच्छेदकसंसर्गतावच्छेदकधर्मनिष्ठावच्छेदकताभिन्ना स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितानुयोगित्वत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसंसर्गतानिरूपिता ग्राह्या इति न कुत्रापि दोष इति वाच्यम् । संयोगेन यत्र प्रमेयस्य साध्यता वाच्यत्वस्य हेतुता तत्र व्यभिचारिण्यतिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवाद्द्रव्यत्वे कल्पनीयम्, तथाच हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वे प्रमेयत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वसत्त्वात्, तथाहि स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वसम्बन्धेन प्रमेयत्वविशिष्टसम्बन्धिनि प्रमेयत्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितायामुक्तसम्बन्धेन द्रव्यत्वस्याऽसत्त्वात् द्रव्याभावस्य प्रतियोगिव्यधिकरणत्वादिति यद्धर्मपदेन साध्यतावच्छेदकस्य धर्त्तुमशक्यत्वाद् द्रव्यत्वादिकमेव धर्त्तव्यम् । केचित्तु सामानाधिकरण्यसम्बन्धेन घटभेदविशिष्टस्य स्वरूपेण यत्र साध्यता वाच्यत्वस्य हेतुता तत्रातिव्याप्तिः, तत्र साध्याभावप्रतियोगितावच्छेदकत्वं लाघवाद् घटभेदत्वे कल्पनीयम्, तस्य साध्यतावच्छेदकविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वात्, घटभेदवैशिष्ट्यावच्छिन्नप्रतियोगितानिरूपितानुयोगितायां स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वसम्बन्धेन घटभेदत्वस्यासत्त्वात् । एतेन विषयितासम्बन्धसाध्यतावच्छेदकान्यतरीययत्सम्बन्धेन पारिभाषिकावच्छेदकत्वेनाभिमतधर्मावशिष्टसम्बन्धित्वं प्रतियोगिवैयधिकरण्यं च वाच्यमित्यपि निरस्तम् । न च तथापि साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितात्वसाध्यतावच्छेदकान्यतरीययत्सम्बन्धेन यद्धर्मविशिष्टसम्बन्धित्वं प्रतियोगिवैयधिकरण्यं च विवक्षणीयम्, उक्तव्यभिचारिद्वये तादृशप्रतियोगित्वाप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम् । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेन एतन्मते स्वामित्वसम्बन्धेन धनादेः साध्यतायामव्याप्तिरतः प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे एव तात्पर्यम्, तन्निवेशे गुरुधर्मसाध्यकव्यभिचारिद्वयेऽतिव्याप्तितादवस्थ्यमिति ध्येयम् ।

प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमित्यस्याऽसङ्गतिं प्रकाशयति दीधितौ अतएवे

स्याऽवच्छेदकाऽनतिरिक्तिवृत्तित्वस्यादरे तु सत्तावान् जातेरित्यादावव्याप्तिः स्यादेवेति भावः।

जातिमन्निष्ठाभावप्रतियोगितायां सत्तात्वाऽन्यूनवृत्तिविशिष्टसत्तात्वावच्छेद्यत्वसमवायसम्बन्धावच्छेद्यत्वोभयसत्त्वाद् अवच्छेद्यताघटितलक्षणे अव्याप्तिरिति। "तुल्यवृत्तिकत्वेपी"त्यत्राऽपिरभ्युपगमे, तेन द्वित्वादिवद् विशिष्टधर्मस्याऽपि विशेष्यविशेषणसम्बन्धेषु पर्याप्तत्वस्वीकारे सत्तात्वस्य विशेष्यमात्रपर्याप्ततया विशिष्टसत्तात्वस्य विशेष्यविशेषणसम्बन्धेषु पर्याप्ततया विशिष्टसत्तात्वे निरुक्तरूपसत्तात्वपर्याप्त्यधिकरणपर्याप्तवृत्तिकत्वाभावेनाऽनतिरिक्तवृत्तित्वकल्पेऽपि सत्तावान् जातेरित्यत्र नाऽव्याप्तिरिति सूचितम्। इदमत्रावधेयम्। गुणान्यत्वविशिष्टसत्तावानितिप्रतीतौ विशेष्यविशेषणसम्बन्धानां सत्तागुणभेदसामानाधिकरण्यादीनां विशेष्यविशेषणभावापन्नानां मुख्यविशेष्ये प्रकारत्वम्, विशेष्यविशेषणसम्बन्धवृत्तीनां सत्तात्वगुणभेदत्वसामानाधिकरण्यत्वादीनां परस्परविशेष्यविशेषणभावापन्नानां तदनापन्नानां वा प्रकारतावच्छेदकत्वं, तादृशगुणान्यत्वादित्रितयवानित्यादिप्रतीतौ च विशेषणभावानापन्नानामेव त्रयाणां विशेष्यं प्रकारत्वं त्रित्वं धर्मितावच्छेदकं गुणभेदत्वादिकं च प्रकारतावच्छेदकम्। न च तद्विशिष्टधर्मप्रकारकप्रतीतौ मुख्यविशेष्ये तद्विशेषणादेः प्रकारत्वे मानाभाव इति वाच्यम्। तथासति तद्विशेषणादिसम्बन्धस्य तत्र बाधबुद्धौ तत्र तद्विशिष्टधर्मप्रकारकप्रतीत्यापत्तेः। न चेष्टापत्तिः, अनुभवविरोधात्। अत एवोक्तं दीधितिकृता "साध्यसामानाधिकरण्यविशिष्टपक्षधर्मत्वन्तु पक्षे साध्यग्रहं विना दुर्ग्रहमि"ति। अत एवेदं नीलाभाववदितिधीदशायां नेदं नीलघटवदिति शाब्दधीः, अन्यथा नीलस्य घटे एव प्रकारतया तादृशधियो दुर्वारत्वात्। तद्विशेषणसंदेहादेस्तद्विशिष्टबुद्धौ स्वातन्त्र्येण प्रतिबन्धकत्वकल्पने च गौरवम्, मम क्लृप्तप्रतिबन्धकतयैवोपपत्तेरिति।

अत्रेदं तत्त्वम्। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तद्भिन्नं यत्साध्यतावच्छेदकमिति कल्पे विशिष्टस्याऽनतिरिक्तत्वमते वह्निमान् धूमादित्यादावव्याप्तिः, महानसीयवह्नित्वस्य पारिभाषिकावच्छेदकतया वह्नित्वे तद्भेदाभावात्। न चाऽवच्छेदकत्वं व्यासज्यवृत्तीति "स्वरूपसम्बन्धरूपाऽ"वच्छेदकत्वावच्छिन्नभेदो वह्नित्वे वर्त्तत एवेति वाच्यम्। "स्वरूपसम्बन्धरूपाऽवच्छेदकत्वावच्छिन्नभिन्नत्वेन साध्यतावच्छेदकस्यात्र न प्रवेशः, किन्तु पारिभाषिकावच्छेदकाभिन्नत्वेनैव, तथाच स्वरूपरूपावच्छेदकत्वावच्छिन्नभेदनिवेशे एव तादृशावच्छेदकत्वस्य व्यासज्यवृत्तितयोक्तरीत्याऽव्याप्तिवारणं सम्भवति, तदेव न, प्रकृते तु पारिभाषिकावच्छेदकत्वस्याऽव्यासज्यवृत्तितया तत्तद्व्यक्तिपर्यवसानेन तत्तद्व्यक्तित्वावच्छिन्नभेदस्यैव निवेशेन वह्नित्वे महानसीयवह्नित्वव्यक्तित्वावच्छिन्नभेदाभावेनाऽव्याप्तेर्दुर्वारत्वात्, अतः तद्भिन्नत्वमपहाय तदघटितं यत्साध्यतावच्छेदकमिति वक्तव्यम्। तदघटितत्वं च तदविषयकप्रतीतिविषयत्वम्, भवति च वह्नित्वं महानसीयवह्नित्वाविषयकप्रतीतिविषयः। तादृशपारिभाषिकाऽवच्छेदकता येन रूपेण तेन रूपेण तदविषयकत्वं वाच्यम्, अन्यथा वह्नित्वविषयकप्रतीतेर्वह्नित्वाऽभिन्नमहानसीयवह्नित्वाविषयकत्वेन वह्नित्वे महानसीयवह्नित्वाविषयकप्रतीतिविषयत्वस्याऽनिर्वाहादिति।

एवं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं बोध्यम्।

-क्षणस्याऽपि प्रागुक्तस्य सत्तावान् जातेरित्यादावव्याप्तिरतस्तदपि परिष्करोति एवमिति। स्वं–साध्यतावच्छेदकम्। अत्र स्ववैशिष्ट्यं साध्यतावच्छेदकताघटकसम्बन्धेनैव वाच्यम्, तेन धूमत्वादीनां कालिकादिसम्बन्धेन धूमत्वादिविशिष्टस्य वन्ह्यादेः संयोगिनि वर्त्तमा(१)नस्याऽभावस्य प्रतियोगितावच्छेदकत्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। स्वविशिष्टस्य सम्बन्धित्वं साध्यतावच्छेदकसम्बन्धेन बोध्यम्। तेन धूमत्वाद्यवच्छिन्नप्रतियोगितायां कालिकादिसम्बन्धेन यद्धूमत्वविशिष्टस्य सम्बन्धि तन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वविरहेऽपि धूमवान् वह्नेरित्यादौ नाति(२)व्याप्तिः। न च सामान्यतो धूमसम्बन्धिनि संयोगेन सर्वस्यैवाऽभावसत्त्वाद् धूमवन्निष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेद(३)काऽप्रसिद्ध्या कथमतिव्याप्तिरिति वाच्यम्। गोत्वत्वघटाभावत्वा-

पूर्वलक्षणयोः स्वशब्दस्य पारिभाषिकावच्छेदकपरतया अत्र तत्परत्वशङ्काभिरासार्थमाह स्वं साध्यतावच्छेदकमिति। इत्थं च तादृशप्रतियोगितासामान्ये यद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वयत्सम्बन्धावच्छिन्नत्वोभयाभावस्तेन धर्मेण तेन सम्बन्धेन व्यापकत्वं बोध्यम्। विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वाश्रयीभूता या सत्ता तत्सम्बन्धी यो गुणादिस्तन्निष्ठाभावप्रतियोगितानवच्छेदकं सत्तात्वादिकमेव, जातिसमानाधिकरणविशिष्टसत्ताभावप्रतियोगितासामान्ये सत्तात्वावच्छेद्यत्वाभावसत्त्वादतिव्याप्तिरतः स्वविशिष्टेति।

प्रतियोगितावच्छेदकत्वेपीति। यत्प्रतियोगितानवच्छेदकं द्रव्यत्वं तदवच्छेद्यत्वाभावस्य वह्निमन्निष्ठाभावप्रतियोगितायां सत्त्वेपीति भावः। तेन सम्बन्धितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेन। नन्वत्र विषयितया वह्निसाध्यकतज्ज्ञानत्वहेतावव्याप्तिसम्भवेऽतिव्याप्तिदानं सन्दर्भविरुद्धम्, तथाहि संयोगसमवायादिना वह्नित्वविशिष्टसम्बन्धिनिष्ठसा-

(१) अत्रेदं बोध्यम्। निरुक्तोभयानवच्छेद्यप्रतियोगितावच्छेदकं वह्न्यादिनिष्ठतद्व्यक्तित्वमादाय तत्तद्व्यक्तित्वविशिष्टवह्नित्वस्य वह्नित्वानतिरिक्ततया शुद्धवह्नित्वस्यापि पारिभाषिकावच्छेदकत्वमिति तद्वारणाय तद्धर्मावच्छिन्नविशेष्यतान्यविशेष्यतावच्छेदकत्वं साध्यतावच्छेदके विशेषणं देयमिति पारिभाषिकावच्छेदकघटितव्याप्तिलक्षणे प्रतियोगिता न निरुक्तोभयानवच्छेद्यत्वेन विशेषणीया प्रयोजनाभावादिति। तथाचेदानीं धूमत्वविशिष्टसंयोगिनि वर्तमानप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकद्रव्यत्वावच्छेद्यत्वाभावादतिव्याप्त्यभावो बोध्यः।

(२) ननु विषयितासम्बन्धेन वह्निसाध्यकसद्धेतावव्याप्तिः, समवायेन वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयविषयतासम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य पदार्थमात्रे सत्त्वादिति कथमतिव्याप्तिदानं संदर्भशुद्धमिति चेन्न। अवयवग्रंथे तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावानभ्युपगमादिति भट्टाचार्येणोक्तं तन्मताभिप्रायेणोक्तत्वादिति ध्येयम्।

(३) इदन्तु प्रतियोगिव्यधिकरणानिवेशाभिप्रायेण, किंवा खण्डशः प्रतियोगिव्यधिकरणाभिप्रायेण अन्यथावच्छेदकत्वस्य ज्ञानत्वे सौलभ्याच्च सर्वथैव तस्याधिकरणाप्रसिद्धेरिति भावः।

देरेव तत्प्रसिद्धेः। संयोगसम्बन्धावच्छिन्नगोत्वाद्यभावप्रतियोगिताया लाघवेन गवेतराऽसमवेतत्वा(१)दिभिरवच्छेदात्। न चैवमपि तदवच्छेद्यत्वाऽप्रसिद्ध्यैव नातिव्याप्तिः, गोत्वादिभेदप्रतियोगितायां तत्सौलभ्यात्। नहि सापि गवेतराऽसमवेतत्वमात्राऽवच्छिन्ना, गोरूपादौ गोत्वभेदाऽसत्त्वप्रसङ्गात्। यदि च गोत्वत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावाऽप्रसिद्ध्यैव नातिव्याप्तिः, गवेतराऽसमवेतत्वाद्यवच्छेद्यत्वमात्रघटिततादृशोभयत्वस्यैव लघुत्वेन प्रतियोगितावच्छेदकत्वादिति विभाव्यते, तदोक्तरीत्या वह्निमान् धूमादित्यादावव्याप्तिवारणार्थमेव साध्यतावच्छेदकसम्बन्धेन स्वविशिष्टस्य सम्बन्धित्वं निवेश्यम्।

इत्थं च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये एव साध्यवन्निष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावसत्त्वाद् धूमवान् वह्नेरित्यत्रैवाऽतिव्याप्तिः, गुरुतयोक्तक्रमेण तादृशोभयत्वावच्छि-

---

ध्यतावच्छेदकसम्बन्धावच्छिन्नाभावप्रतियोगिताऽनवच्छेदकत्वस्याऽप्रसिद्धिरिति चेन्न। तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावाऽनङ्गीकारान्नाव्याप्तिरतोऽतिव्याप्त्यनुधावनमिति ध्येयम्। गोत्वभेदाऽसत्त्वप्रसङ्गादिति। अतएव प्रमेयधूमत्वमुपेक्षितम्, तदवच्छिन्नत्वस्य भेदीयप्रतियोगितायामप्यसत्त्वात्। न च घटाभावत्वादेरपि संयोगसम्बन्धावच्छिन्नघटाभावाभावप्रतियोगितावच्छेदकत्वमस्त्येवेति वाच्यम्। घटाभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितायां लाघवादभावत्वेनैवाऽवच्छेदात्। न चाऽभावत्वस्य घटाभावादिप्रतियोगिताऽतिप्रसक्तत्वेन कथमवच्छेदकत्वमिति वाच्यम्। संयोगेनाऽभावाभावस्य घटाभावादेरभावसमनैयत्येनाऽभावमात्रस्यैव संयोगावच्छिन्नघटाभावाभावप्रतियोगिताश्रयत्वेनातिप्रसक्त्यभावादिति।

लघुत्वेन प्रतियोगितावच्छेदकत्वादितीति। ननु यथा संयोगेन गवेतरासमवेताभावीयप्रतियोगितायां गोत्वत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छिन्नत्वोभयं नास्तीति प्रतीनिर्जायते तद्वत् संयोगेन गोत्वाभावीयप्रतियोगितायां गोत्वत्वावच्छिन्नत्वघटितोभयाभावसत्त्वात्तत्र गवेतराऽसमवेतत्वाद्यवच्छेद्यत्वघटितोभयाभावाऽसत्त्वात् कथं गवेतराऽसमवेतत्वावच्छेद्यत्वघटितोभयत्वस्याऽतिप्रसङ्गाद्यनापादकत्वम्, तथाचाऽतिप्रसंगाद्यनापादकत्वविरहेण कथमतिव्याप्तिरुपेक्षिता। न च गवेतरासमवेतत्वनिष्ठभेदप्रतियोगितावच्छेदकत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वापेक्षया उक्तोभयत्वस्य गुरुत्वेन प्रतियोगितानवच्छेदकत्वात् तत्रैव जगदीशतात्पर्यादिति वाच्यम्। तथासति गवेतरासमवेतत्वपर्यन्तानुधावनस्य वैयर्थ्यापत्तेः भेदत्वनिरूपकत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वस्यैव लाघवेन तथात्वौचित्यात् अतएव तादृशतात्पर्यको नायं ग्रन्थः।

---

(१) गोत्वत्वापेक्षया गवेतरासमवेतत्वस्य घटाभावत्वापेक्षया अभावत्वस्य गोत्वघटाभावत्वयोरभावप्रतियोगितावच्छेदकत्वेन लाघवादिति विषयविभागः।

न्ताभावाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिर्वा स्यादतः प्रतियोग्यसम्बन्धित्वेनाऽपि स्वविशिष्टसम्बन्धी विशेषणीयः। तदर्थश्च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धित्वम्, तेन सम्बन्धसामान्येन यत्प्रतियोगितावच्छेदकावच्छिन्नाऽसम्बन्धी वह्नित्वविशिष्टसम्बन्धी पर्वतादिस्तन्निष्ठस्य प्रलयपूर्वोत्पन्नकर्मात्यन्ताभावस्य प्रतियोगितानवच्छेदकं यद् घटत्वादिकं तदवच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्व-

केचित्तु संयोगेन गोत्वाभावप्रतियोगितावच्छेदकं न गवेतरासमवेतत्वमात्रम्, भूतले संयोगेन गोत्वं नास्तीति प्रतीत्यनुदयापत्तेः तत्र गवेतरासमवेतस्य गगनपरमाण्वादेः सत्त्वात्, किन्तु निखिलगोसमवेतत्वे सति गवेतरासमवेतत्वमेव संयोगेन गोत्वाभावीयप्रतियोगितावच्छेदकम्, तथाच गवेतरासमवेतत्वमात्रावच्छिन्नत्वघटितोभयत्वस्यैवातिप्रसङ्गाद्यनापादकत्वम्, संयोगेन गोत्वाभावीयप्रतियोगितायां गवेतराऽसमवेतत्वमात्रावच्छिन्नत्वघटितोभयाभावस्य सत्त्वात्। न च गवेतरासमवेताभावीयप्रतियोगितायां गोत्वत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावस्य सत्त्वात् तत्र च गवेतरासमवेतत्वावच्छिन्नत्वघटितोभयाभावस्याऽसत्त्वात्कथमतिप्रसङ्गाद्यनापादकत्वमिति वाच्यम्। संयोगेन गवेतरासमवेताभावप्रतियोगितावच्छेदकत्वं लाघवादवृत्तित्वे कल्पनीयम्, तथाच संयोगेन गवेतरासमवेताभावीयप्रतियोगितायामुक्तोभयाभावस्य सत्त्वात् गवेतरासमवेतत्वाद्यवच्छेद्यत्वस्य तत्रासत्त्वात्।

नन्वत्र संयोगेन गवेतरासमवेताभावप्रतियोगितावच्छेदकत्वमपि लाघवेन द्रव्यत्वे कल्पयितुं शक्यते, तथाच धूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य गवेतरासमवेतत्वसत्त्वेन तदवच्छेद्यत्वघटितोभयाभावस्य धूमाभावीयप्रतियोगितायां सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्त्यसम्भवाद् वह्निमान् धूमादित्यादावव्याप्तिदानमनुचितमिति चेन्न। यावत्त्वविशेषणं दत्वाऽतिव्याप्तिवारणात् तदैवाव्याप्तिदाने जगदीशतात्पर्यात्। यावत्त्वघटितलक्षणन्तु यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदका ये ये धर्माः प्रत्येकं तत्तद्धर्मावच्छिन्नत्वघटितोभयाभावस्य निवेशः। अनुगमस्तु यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वे हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकतावच्छेदकत्वं निवेशनीयम्, व्यापकता च स्वावच्छेद्यत्वस्वकालीनसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववत्तासम्बन्धेन, तथाच गोत्वत्वघटाभावत्वगतकूटत्वावच्छेदेन धूमवन्निष्ठाभावप्रतियोगितात्वव्यापकताविरहान्न तत्रातिव्याप्तिरतोऽव्याप्त्यनुधावनम्। न चैवंरीत्या निवेशे साध्यतावच्छेदकसम्बन्धनिवेशेऽप्यव्याप्तितादवस्थ्यम्, उक्तकूटत्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकताविरहादिति वाच्यम्। सिद्धान्तेऽतिव्याप्तिरभावेन तादृशनिवेशाभावात्, इदानीन्तु अतिव्याप्तिवारणार्थमेव तन्निवेशः।

नन्वेवंसति असम्भवसम्भवेऽव्याप्तिदानमनुचितम्, तथाहि केवलान्वयिस्थलेऽपि यत्किञ्चित्सम्बन्धेन वाच्यत्वत्वविशिष्टसम्बन्धिनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिवाच्यत्वत्वगोत्वत्वादिवृत्तिकूटत्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकताविरहादिति चेन्न। उक्तकूटत्वे सामान्यतो

योश्च साधनवन्निष्ठाभावप्रतियोगितायां सत्त्वेऽपि वह्निमान् धूमादित्यादौ नाऽव्याप्तिः । नवा प्रतियोग्यसम्बन्धिसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकीभूतविशिष्टसत्तात्वावच्छेद्यत्वसमवायसम्बन्धावच्छेद्यत्वयोः साधनवन्निष्ठाभावप्रतियोगितायां सत्त्वेऽपि सत्तावान् जातेरित्यादावव्याप्तिप्रसङ्गः । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धी यः साध्यतावच्छेदकावच्छिन्नसम्बन्धी तन्निष्ठाभावप्रतियोगितानवच्छेदकं न घटाभावत्वगोत्वत्वादिकम्, तस्यापि साध्यवन्निष्ठतादृशभेदादिप्रतियोगितावच्छे-

विषयित्वप्रतियोगित्वातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वव्याप्यत्वं निवेशनीयम्, तथाच केवलान्वयिस्थले वाच्यत्वत्वगोत्वत्वादिवृत्तिकूटत्वस्य व्याप्यत्वविरहेण लक्षणाघटकत्वात्, किन्तु वाच्यत्वत्वज्ञेयत्वत्वादिवृत्तिकूटत्वस्यैव लक्षणघटकत्वम्, तादृशकूटत्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकताविरहादित्याहुः । तन्न, प्रमेयवान् वाच्यत्वादित्यादौ तादात्म्येन साध्यतायां प्रमेयत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वावच्छिन्नानुयोगिताकपर्याप्तिकूटत्वान्तर्गतप्रमेयत्वादिगतकूटत्वावच्छेदेन हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकताविरहात्, तथाहि प्रमेयत्वावच्छिन्नत्वतादात्म्यसम्बन्धावच्छिन्नत्वोभयाभावस्य केवलान्वयितया प्रमेयत्वावच्छेद्यतावृत्तितादात्म्यावच्छेद्यतावृत्त्युभयत्वस्यैव लाघवेन प्रतियोगितावच्छेदकतास्वीकारादुक्तोभयाभावाप्रसिद्धिरिति तत्राव्याप्तिप्रौव्यात् । अत्रेदं समाधानम् । आत्मगगनान्यतरस्य तादात्म्येन साध्यतायां सद्धेतौ लक्षणगमनसम्भवात् । न चात्रापि अनवच्छेदकप्रमेयत्ववाच्यत्वादीनामवच्छेदकत्वेन पूर्वोक्ताव्याप्तितादवस्थ्यमिति वाच्यम् । अभावप्रतियोगितावच्छेदकत्वविशेषणं परित्यज्य भेदप्रतियोगितावच्छेदकत्वविशेषणप्रक्षेपेण तथाविधान्यतरत्वस्यैव तथात्वेन लक्षणगमनसम्भवादिति । सिद्धान्ते तु तेषां प्रयोजनविरहेणैवंरीत्या वर्णनेऽव्याप्तिः संभवति नाऽसंभव इति दिक् ।

इदानीं सिद्धान्ते एतत्कल्पे विचारः । वह्निमान् धूमादित्यादौ वह्नित्वविशिष्टसम्बन्धिनिष्ठमहानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वस्य महानसीयत्वे वह्नित्वे च सत्त्वेनाऽव्याप्तिरतो यद्धर्मविशिष्टसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावस्य निवेशः कार्यः । यदि चैकत्वपर्याप्तिर्नाङ्गीक्रियते, तदा यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशः कार्यः । हेतुमन्निष्ठाभावीयप्रतियोगितायामपि तस्यैव निवेशः कार्यं इति ।

अथवा यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायां धर्मविशिष्टान्यत्वनिवेशः कार्य इति हेतुसमानाधिकरणाभावीयप्रतियोगितायामपि तस्यैव निवेशः । वह्निधूमोभयवान् वह्नेरित्यादौ धूमाभावमादाय महानसीयवह्निभिन्नवह्निमान् धूमादित्यादौ महानसावृत्त्यभावमादायाऽतिव्याप्तिवारणमिति ।

तेन—प्रतियोगितावच्छेदकसम्बन्धानिवेशेन । नाऽव्याप्तिरिति । अत्र विषयितया घटादेः साध्यतायां नित्यज्ञानत्वहेतौ नित्यज्ञानान्यत्वविशिष्टघटाभावमादाय लक्षणसमन्वयान्ना-

दकत्वात्, किन्तु लघुसमनियतगुरुप्रमेयधूत्वादिकमेव तथा, तथाच तद्वच्छेद्यत्वाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावसम्भवोऽव्याप्तिर्वेत्यतः साध्यवन्निष्ठाभावप्रतियोगित्वमपि साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्। तेन संयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वान्नच्छेद्यत्वप्रसिद्धयैव लक्षणसम्भवः।

वस्तुतः प्रागुक्तयुक्त्याऽत्रापि साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं साध्यतावच्छेदकावच्छिन्नसम्बन्धिनो वक्तव्यम्, नतु प्रतियोगिताऽपि तादृशसम्बन्धावच्छिन्ना ग्राह्या। नन्वेवमपि साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिसाध्यतावच्छेदकावच्छिन्नसम्बन्धिनिष्ठाभावाऽप्रसिद्ध्या विभुत्वविशिष्टघटवान् महाकालत्वादित्यादावव्याप्तिः। महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्यैव तादृशस्य कथंचिन्महाकाले प्रसिद्ध्या तत्राऽव्याप्तिवारणेऽपि तद्वह्नीयसंयोगसम्बन्धेन वह्नेः साध्यतायां सद्धेतावव्याप्तिः तत्सम्बन्धेन यत्प्रतियोगितासम्बन्धि तदन्यत्वस्य तद्वह्निमत्यभावात्। महाकालनिरूपितविशेषणतया घटादेः साध्यतायां महाकालत्वहेतावुक्तक्रमेणाप्यव्याप्तिवारणासम्भवाच्च, तेन सम्बन्धेन यः प्रतियोगिसम्बन्धी तदन्यत्वस्य महाकाले विरहात्।

---

संभव उक्त इति ध्येयम्। प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशव्यावृत्तिमाह **नवेति**। **असंभवोऽव्याप्तिर्वेति**। अत्र तादात्म्येन व्याप्यव्यापकभावाभ्युपगमे तादात्म्येन गोत्वसाध्यकतद्व्यक्तित्वहेतौ गोत्ववन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य गोत्वत्वे एव प्रसिद्धेस्तदवच्छेद्यत्वाभावश्चाऽस्त्येव हेतुमन्निष्ठघटादिभेदप्रतियोगितासामान्ये इति लक्षणसम्भवादव्याप्तिर्वेत्युक्तम्।

केचित्तु तादात्म्येन गोत्वसाध्यकसद्धेतौ यद्धर्मविशिष्टसम्बन्धिनि गोत्वभेदाभावसत्त्वेऽपि गोत्वभेदे प्रतियोगितासम्बन्धेन वर्त्तमानस्य गोत्वस्य प्रतियोगितासम्बन्धेनाऽभावसत्त्वाद् गोत्वत्वं प्रतियोगितावच्छेदकमेवेत्यसंभवः, विषयित्वादेः संसर्गत्वे मानाभावः प्रमेयधूमत्वादिकं न प्रतियोगियोगितावच्छेदकमिति। यदि च प्रतियोगित्वस्य वृत्त्यनियामकत्वात्तस्य न प्रतियोगितावच्छेदकत्वं तदाऽव्याप्तिरिति प्राहुः।

**विभुत्वविशिष्टघटवानिति**। अत्र शुद्धघटत्वस्य साध्यत्वे घटत्वविशिष्टसंबन्धिनि खण्डकाले तत्कालाऽसमानकालीनवस्तुनोऽभावस्यैव प्रतियोगिवैयधिकरण्यसंभवात्तत्राऽप्रसिद्ध्यभावाद्विशिष्टेत्युक्तम्।

**तद्वह्निसंयोगेन साध्यतायां सद्धेतावव्याप्तिरिति**। ननु साध्यतावच्छेदकसंबन्धस्य न्यूनवारकपर्याप्तिनिवेशे प्रयोजनाभावात्तद्वह्नीयसंयोगेन साध्यतास्थले केवलसंयोगेन घटाभावस्यैव प्रतियोगिव्यधिकरणस्य साध्यसम्बन्धिनि सत्त्वात्कथमव्याप्तिरिति चेन्न। पर्वतवृत्तीन्धनभिन्नप्रतियोगिकसंयोगेन वह्निसाध्यकसद्धेतौ साध्यतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकन्यूनत्वस्य केवलसंयोगेन प्रतियोगिसम्ब-

न च साध्यतावच्छेदकसम्बन्धसामान्ये साध्यतावच्छेदकावच्छिन्नसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्वयादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकावच्छिन्नत्वं निवेश्यम्, अतो गगनाभावद्वारैव प्रसिद्धिरिति वाच्यम्। स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वपक्ष एव प्रतियोगिताधर्मिकोभयाभावगर्भनिरुक्त्यादरात्

न्विप्रकृतसाध्यसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेनान्यनाभावप्रतियोगितायां निरुक्तोभयोः सत्वादतः इतरवारकरूपवृत्तित्वे सति न्यूनवारकपर्याप्तिर्निवेश्या, तथाचोक्तदोषः सम्भवतीति।

श्रीगुरुचरणास्तु कालिककालीनसंयोगेन वह्नेः साध्यत्वे धूमहेतौ वह्नित्वविशिष्टसम्बन्धिपर्वतादिनिष्ठो घटाद्यभावो न प्रतियोग्यसमानाधिकरणः कालिकस्यापि साध्यतावच्छेदकत्वादपि तु तत्पर्वतासमानकालीनद्रव्याभाव एव, तथाच तत्प्रतियोगितानवच्छेदकं च घटत्वादि, तथाच हेतुमन्निष्ठाभावप्रतियोगितानां घटादिनिष्ठानामुभयस्यैव सत्वेन तत्राव्याप्तिवारणाय न्यूनवारकपर्याप्तिर्निवेश्या, एवं च तद्वह्निसंयोगेन साध्यतायामप्रसिद्ध्याऽव्याप्तिरिति प्राहुः।

नच साध्यतावच्छेदकसम्बन्धसामान्ये इति। ननु साध्यतावच्छेदकावच्छिन्नसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वाभाव इत्यस्यैव सम्यक्त्वेऽलमुभयाभावनिवेशेनेति चेत्। अत्र श्रीचरणाः। सामान्यपदस्य व्यापकत्वार्थकतया तादृशसम्बन्धत्ववन्निष्ठाभावाऽप्रतियोगित्वमेव तादृशाभावे निवेश्यम्, एवं च मूर्तमात्रस्यैव दिगुपाधित्वम्महादिग्वृत्तितायामवच्छेदकत्वञ्चत्वधिकरणत्वमिति मते दिक्कृतविशेषणतया घटादेः साध्यत्वे दिक्त्वहेतौ साध्यतावच्छेदकावच्छिन्नसम्बन्ध्यनुयोगिकदिग्विशेषणतात्ववन्निष्ठाभावप्रतियोगितात्वापेक्षया दिग्विशेषणतात्ववन्निष्ठाभावप्रतियोगितात्वस्य लघुत्वेन तादृशप्रतियोगितात्वावच्छिन्नाभावाऽप्रसिद्ध्याऽव्याप्त्यापत्तेः। न चैवंरीत्या वह्निप्रतियोगिकसंयोगेन वह्न्यादेः साध्यतायामप्युभयाभावनिवेशेऽव्याप्तिः सम्भवतीति वाच्यम्। विशेषरूपेण संसर्गतानभ्युपगमात्, अन्यथोभयाभावनिवेशेऽपि प्रमेयप्रतियोगिकसंयोगेन वह्न्यादेः साध्यतायामुक्तरीत्याऽप्रसिद्धेर्दुर्वारत्वादिति प्राहुः।

केचित्तु सामान्यपदस्य व्यापकत्वार्थकत्वे महाकालानुयोगिककालिकेन घटसाध्यकमहाकालत्वहेतुकस्थले जगदीशदत्ताव्याप्तेर्वज्रलेपत्वात् घटत्वविशिष्टसम्बन्धिमहाकाले एव तदनुयोगिकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावप्रतियोगितावच्छेदकत्वं यद्धर्मविशिष्टसम्बन्ध्यनुयोगिकत्वमपहाय साध्यतावच्छेदकसम्बन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वत्व एव स्वीकार्यम्। अत्र साध्यतावच्छेदकसम्बन्धोपि महाकालानुयोगिककालिक एवेति तादृशाभावस्याऽप्रसिद्धिरतः साध्यतावच्छेदकविशिष्टसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसम्बन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वनिवेशावश्यकत्वात्।

न चोक्तदोषवारणाय नास्माकं कूटनिवेशोऽपि तु तादृशोभयावृत्तिधर्मावच्छिन्नप्रतियोगिकाभाव एव निवेश्यः, तावताप्युक्तदोषवारणसम्भवान्न गौरवमिति वाच्यम्। वह्निप्रति-

तत्र गगनाभावमादाय प्रसिद्ध्यसंभवात् । कालिकविशेषणतायां गगनत्वावच्छिन्नप्रतियोगिकत्वसाध्यवन्महाकालानुयोगिकत्वयोः सत्त्वादिति चेद् । एतदस्वरसेनैव प्रतियोगितयोरित्यादिना प्रतियोगिवैयधिकरण्यमुपेक्ष्य लक्षणान्तरं वक्ष्यते इत्येके ।

---

योगिकत्वाभावेपि पर्वतानुयोगिकसंयोगवृत्तिघटभेदप्रतियोगितावच्छेदकतावृत्तितद्व्यक्तित्वावच्छिन्नाभावस्य सत्त्वेन तादृशप्रतियोगितानवच्छेदकत्वस्याऽप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिरतः कूटनिवेशः, तथाच तादृशकूटान्तर्गततत्पर्वतानुयोगिकसंयोगवृत्तिभेदप्रतियोगितानिरूपितवह्निप्रतियोगिकत्वाभावनिष्ठावच्छेदकत्वव्यस्तयभावविरहात् घटप्रतियोगिकत्वाभाव एव तादृशप्रतियोगितानवच्छेदकवह्नित्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयाभावस्य घटाभावीयप्रतियोगितायां सत्त्वान्नाव्याप्तिरिति, तथाच गौरवं स्पष्टमेव । ननूभयाभावनिवेशपक्षेपि व्यापकत्वं कूटघटितमेव निवेश्यम्, अन्यथा द्रव्यप्रतियोगिकसंयोगेन द्रव्यसाध्यकसद्धेतावव्याप्तिः, तत्र साध्यतावच्छेदकसम्बन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावप्रतियोगितावच्छेदकत्वस्य लाघवेन द्रव्यप्रतियोगित्वमपहाय संयोगवृत्तिभेदप्रतियोगितावच्छेदकत्वत्वे एव कल्पयितुं शक्यत्वादिति द्रव्यप्रतियोगिकसंयोगातिरिक्तो न कश्चित्संयोग इति सिद्धान्तेऽपि कूटनिवेशस्यावश्यकतया फक्किकापक्षेपि तन्निवेशे गौरवानवकाशात् । न च सिद्धान्ते कूटत्वमुपेक्ष्य साध्यतावच्छेदकसंसर्गवृत्तिभेदप्रतियोगितावच्छेदकतावृत्त्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव कथं न निवेश इति वाच्यम् । वह्निमान् धूमादित्यादौ वह्निप्रतियोगिकत्वपर्वतानुयोगिकत्वोभयाभावे संयोगवृत्तिघटभेदप्रतियोगितावच्छेदकत्वाभावस्य सत्त्वेन तादृशप्रतियोगितानवच्छेदकत्वाऽप्रसिद्ध्याऽव्याप्त्यापत्तेः कूटनिवेश इति चेन्न । सिद्धान्ते साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोपलक्षितरूपवृत्तिसंसर्गतां निवेश्य तद्रूपवृत्तिसंसर्गतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसिद्धाभावस्य प्रवेशः, तथाचाभावप्रतियोगितावच्छेदककोटौ तद्रूपवृत्तिसंसर्गत्वादिना निवेशः, न हि द्रव्यप्रतियोगिकत्वस्य प्रवेशः तादृशरूपं च द्वित्वमेव तस्यैव प्रवेशः ।

अथवा रूपवृत्तित्वपर्यन्तमुपलक्षणमेवेति तत्संसर्गतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य निवेशः, एतत्कल्पे संसर्गत्वस्य धीविशेषविषयत्वे तत्संसर्गतापदेन एकविषयत्वस्यैव धारणे दोषसम्भवात्, अतस्तद्रूपवृत्तिसंसर्गतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य निवेशः समीचीनः । फक्किकापक्षकूटनिवेशनं विना गत्यभाव इति । नन्वस्माकमपि कूटनिवेशनमन्तरैव निर्वाहः, तथाच यद्धर्मविशिष्टसम्बन्धिवृत्त्युभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकत्वाभिन्नावच्छेदकत्वानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतातद्भिन्नानुयोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितानुयोगितानिष्ठावच्छेदकता तद्भिन्ना निरूपकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपकतानिष्ठावच्छेदकता तद्भिन्ना साध्यतावच्छेदकसंसर्गत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिततादृशसंसर्गत्वनिष्ठावच्छेदकतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितप्रतियोगितावच्छेदकतात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावनिवेशान्नोक्ताव्याप्तिः, एवं निवेशे यद्धर्मविशिष्ट-

यत्किंचित्सम्बन्धिनिष्ठानुयोगितानिरूपकतादृशसंसर्गवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्त्यभावः प्राप्तः, अथ च साध्यतावच्छेदकसंसर्गवृत्तिभेदप्रतियोगिताच्छेदकत्वाभावोऽपि प्राप्तः, एवञ्च यत्र पूर्वोक्ताभावोऽप्रसिद्धः तत्र द्वितीयाभावमादायैव लक्षणगमनादिति यद्धर्मविशिष्टसम्बन्धिनिष्ठानुयोगितानिरूपकत्वपर्यन्तस्येतरवारकपर्याप्त्यनिवेशात्संसर्गत्वमारभ्येतरन्यूनवारकोभयानिवेशात्, तथा चाभावद्वयस्य प्राप्तिरिति कूटनिवेशे प्रयोजनाभावादिति न गौरवमिति चेन्न । तथानिवेशे धूमवान्वह्नेरित्यादावतिव्याप्त्यापत्तेः, भूतलनिष्ठानुयोगितानिरूपिता या निरूपकता, तन्निरूपकत्वस्य स्वरूपतो भानमंगीकृत्य तन्निरूपकतत्संसर्गवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावस्यापि भवन्निवेशाक्रान्ततया तस्य च धूमत्वावच्छिन्नप्रतियोगिकत्वाभावे सत्त्वेन. तादृशप्रतियोगितान्तर्गतधूमभावीयप्रतियोगितायाः अपि प्राप्ततया तदनवच्छेदकत्वस्य प्रमेयत्वादावेव सत्त्वेन तदवच्छेद्यत्वाभावस्य हेतुसमानाधिकरणाभावप्रतियोगितायां सत्त्वादिति यद्धर्मविशिष्टसम्बन्धिनिष्ठानुयोगितानिरूपकत्वपर्यन्तस्येतरवारकपर्याप्तेरेव निवेशो न्यूनवारकस्य तु निवेशो न कृतोऽतस्तादृशनिरूपकत्वस्य स्वरूपत एव सत्त्वेन तन्निष्ठावच्छेदकतायां न किंचिदवच्छेदकतानिरूपकत्वनिष्ठावच्छेदकतायामन्यतरमन्यधर्मनिष्ठावच्छेदकतानिरूपितत्वस्य सत्त्वे तदा तादृशावच्छेदकतैव भिन्ना स्यादतस्तन्निरूपकत्वादावसत्त्वेनानिरूपितत्वस्यासत्त्वमिति शक्यते वक्तुम्, तदेव नास्तीति चेन्न । यद्धर्मविशिष्टसम्बन्धिवृत्त्युभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितताद‍ृशावच्छेदकतानिरूपिता या निष्ठत्वसम्बन्धावच्छिन्नावच्छेदकता तद्भिन्नानुयोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता तादृशावच्छेदकताद्वयनिरूपितनिरूपकत्वनिष्ठावच्छेदकता तद्भिन्ना सती संसर्गत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसंसर्गत्वनिष्ठावच्छेदकतानिरूपितसंसर्गनिष्ठावच्छेदकतानिरूपितेत्यादिकमेव निवेश्यते निरूपकत्वनिष्ठावच्छेदकतायां न्यूनवारकपर्याप्तिनिवेशोऽस्तीति संसर्गनिष्ठावच्छेदकतायां निरूपकत्वानिष्ठावच्छेदकतानिरूपकत्वमिति न निवेश्यते पूर्वोक्ताभावद्वयमेव प्राप्तमतिव्याप्तिरपि नास्तीति तादृशनिरूपकत्वस्याप्राप्तत्वादिति फक्किकां कुर्वन्ति । तन्न। तादात्म्येन तद्व्यक्तिसाध्यकव्यभिचारिण्यतिव्याप्तेः । तत्र तद्व्यक्तित्वविशिष्टसम्बन्धितद्व्यक्तिरेव, तदनुयोगिकतादात्म्यवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावप्रतियोगितावच्छेदकत्वस्य तन्निरूपकतावत्तादात्म्यवृत्तिभेदप्रतियोगितावच्छेदकत्वत्व एव कल्पयितुं शक्यते तन्निरूपकतावत्तद्व्यक्तिनिष्ठानुयोगितानिरूपितनिरूपकतायां वर्त्तते सैव प्राप्ता तद्व्यक्तेः सम्बन्धस्तु तादात्म्य एवेति, अतस्तन्निरूपकतावत्तदेव तादात्म्यो भवतीति ।

यद्यपि तादात्म्यवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्यभावोपि प्राप्तः, तथापि तादृशाभावस्य किमपिधर्मावच्छिन्नप्रतियोगिकत्वाभावेऽसत्त्वेन तस्यात्र प्राप्तदोषाऽवारकत्वात्, सामान्यतस्तादात्म्येन निखिलधर्मावच्छिन्नप्रतियोगिताकत्वस्यैव सत्त्वेन तदभावस्य व्यापकत्वाभावाच्च तादृशव्यापकत्वमादायातिव्याप्तेर्वारणमिति । यद्धर्मविशिष्टसम्बन्धिनिष्ठानुयोगितानिरूपितत्वस्योपलक्षणविधया प्रवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिर्दत्ता पूर्वमस्माभिरतः कूटनिवेशस्यावश्यकतया गौरवस्यैवोभयाभावनिवेशापेक्षया स्पष्टत्वादिति ध्येयम् ।

परंतु निरुक्तप्रतियोग्यसम्बन्धिप्रकृतसाध्यवन्निष्ठाभावप्रतियोगितायां यद्यद्धर्मावच्छेद्यत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणप्रकृतहेतुमन्निष्ठाभावप्रतियोगितासामान्येऽपि तादृशोभयाभावकूटवत्त्वं वियक्षणियम्। अस्ति च समवायाद्यवच्छिन्नघटाभावप्रतियोगितायां यत्कालिकसम्बन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावत्वं तदेव प्रतियोग्यनधिकरणमहाकालनिष्ठाभावप्रति

---

नन्वत्र साध्यतावच्छेदकसम्बन्धसामान्ये साध्यतावच्छेदकावच्छिन्नसम्बन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्वविशिष्टयादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वाभावस्तादृशप्रतियोगितावच्छेदकेत्यादिनिवेशेनैव सामञ्जस्ये किमुभयाभावनिवेशेनेति चेन्न। महाकालानुयोगिककालिकेन घटसाध्यकमहाकालत्वहेतुकेऽव्याप्त्यापत्तेः महाकालानुयोगिकत्वविशिष्टगगनत्वावच्छिन्नप्रतियोगिकत्वाऽप्रसिद्धेः। न च महाकालाभावस्यैव लक्षणघटकत्वं, महाकालप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वस्य तादात्म्ये प्रसिद्धतया साध्यतावच्छेदककालिके तादृशाभावसत्त्वान्नाव्याप्तिरिति वाच्यम्। महाकालानुयोगिककालिकतादात्म्यान्यतरसम्बन्धेन घटसाध्यकमहाकालत्वहेतावव्याप्त्यापत्तेः महाकालाभावोपि न लक्षणघटकः महाकालप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वस्य साध्यातावच्छेदकान्यतरे सत्त्वादिति ध्येयम्।

ननु साध्यतावच्छेदकविशिष्टसम्बन्धिभि यत्किंचित्त्वनिवेशो व्यर्थ इति चेन्न। वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः, साध्यतावच्छेदकसंयोगसामान्ये तादृशसम्बन्धिमहाकालानुयोगिकत्वमहानसीयवह्निव्यक्तित्वावच्छिन्नप्रतियोगिकत्वोभयाभावविरहेण तादृशी न तद्व्यक्तित्वावच्छिन्नप्रतियोगिताऽपितु घटत्वावच्छिन्नप्रतियोगितैव तदनवच्छेदकत्वस्योक्तव्यक्तित्वेपि सत्त्वेन तदवच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयाभावस्य हेतुमन्निष्ठाभावीयतद्व्यक्तित्वावच्छिन्नप्रतियोगितासामान्ये विरहात्, यत्किंचित्त्वनिवेशे च तद्व्यक्त्यन्तर्गतपर्वतानुयोगिकत्वमहानसीयवह्निव्यक्तिप्रतियोगिकत्वोभयाभावसत्त्वेन तादृशप्रतियोगितानवच्छेदकत्वस्य कुत्रापि तद्व्यक्तित्वेऽसत्त्वान्नाव्याप्तिरिति।

नन्वयं कल्पो गगनादेः कालिकेन वृत्तित्वमङ्गीकृत्य दूषितः, तन्न संगच्छते, महाकालान्यत्वविशिष्टघटाभावस्य लक्षणघटकत्वादिति चेन्न। महाकालान्यत्वविशिष्टघटस्यापि कालिकेन महाकालेऽङ्गीकृत्य तदुक्तत्वात्। न च पूर्वोक्तग्रन्थाऽसंगतिरिति वाच्यम्। कालिकमात्रस्यैवैक्यमते दूषितत्वादिति।

**परे त्विति**। नन्वत्र प्रतियोग्यधिकरणसाध्यवन्निष्ठाभावीयप्रतियोगितासामान्ये यद्धेतुमन्निष्ठाभावीयप्रतियोगितासामान्येपि तदित्येव लाघवान्निवेश्यम्, तादृशोभयाभावत्वेन निवेशो व्यर्थ इति चेन्न। धूमवान् वह्नेरित्यादिव्यभिचारिमात्रेऽतिव्याप्त्यापत्तेः प्रमेयत्वादौ साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वस्य हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वस्य च सत्त्वात्। न च साध्यवन्निष्ठाभावीयप्रतियोगितासामान्ये यादृशाभावो हेतुमन्निष्ठाभावीयप्रतियोगितासामान्येपि तादृशाभाव इति निवेशेनैवोक्तातिव्याप्ति-

योगितासामा(१)न्येऽपीति घटवान् महाकालत्वादित्यादौ नाव्याप्तिः। यद्य-दितिवीप्सादरान्निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासा-मान्ये एव गुणत्वाव(२)च्छेद्यत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। धूमत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छे-द्यत्वोभयाभावस्यापि तादृशत्वेन तस्यैव प्रतियोग्यनधिकरणवह्निमन्निष्ठा-भावप्रतियोगितासामान्ये विरहात्, संयोगसम्बन्धावच्छिन्नधूमाभावप्रति-योगितायां तदसत्त्वादित्याहुः।

वारणसम्भवादिति वाच्यम्। गगनाभावादौ उभयप्रतियोगितात्वव्यापकत्वसत्त्वाद् उक्त-रीत्या व्यभिचारिमात्रेऽतिव्याप्तितादवस्थ्यात्। यद्यपि यादृशाभावकूटः साध्यवन्निष्ठा-भावीयप्रतियोगितात्वव्यापकः तादृशाभावकूटः हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकः इत्यादिरीत्या निवेशे उक्तदोषवारणसम्भवात्तथापि घटाभावपटाभावमठाभावकूटे उक्त-द्वयप्रतियोगितात्वव्यापकत्वसत्त्वेनोक्तदोषादिति चेत्। यादृशाभावत्वावच्छिन्नानुयोगिताक-पर्याप्तिककूटत्वं साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकं तादृशाभावत्वावच्छि-न्नानुयोगिताकपर्याप्तिककूटत्वं हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकं तादृश-साध्यसामानाधिकरण्यमित्युक्तावेवोक्तसकलदोषवारणसम्भवात्। धूमत्वावच्छेद्यत्व-संयोगसम्बन्धावच्छिन्नत्वोभयाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वे साध्यवन्नि-ष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकत्वसत्त्वेऽपि हेतुमन्निष्ठाभावीयप्रतियोगितात्व-व्यापकतावच्छेदकत्वविरहात्। अत्रेदं समाधानम्। अभावत्वावच्छिन्नानुयो-गिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वे सर्वत्राऽसम्भवापत्तेः, वह्निमन्निष्ठाभावीयप्रतियोगितायां ब्रह्माण्डीयाभावकूटविरहात्। सामान्यतोऽभावकूटे व्यापकत्वानिवेशे च व्यभिचारिण्यतिव्या-प्त्यापत्तेः यत्किञ्चित्कूटे व्यापकत्वस्य सत्त्वात्, अतो नेदं साधु। वस्तुतस्तु अभावस्याधि-करणभेदेन भिन्नत्वाद् घटाभावीयप्रतियोगितानिरूपितवृत्तितावच्छेदककूटत्वे साध्यतावन्निष्ठा-भावीयप्रतियोगितात्वव्यापकतावच्छेदकत्वविरहात्तादृशप्रतियोगितात्वस्य पटाभावीयप्रतियोगि-तायामपि सत्त्वात्तत्र न तादृक्कूटत्वावच्छिन्नाधिकरणत्वमिति वह्निमान् धूमादित्यादावव्याप्त्या-पत्तेः। न च यद्धर्मावच्छिन्नयत्सम्बन्धावच्छिन्नत्वेत्यादिनिवेशेपि तद्दोषतादवस्थ्यमेव, घट-त्वावच्छिन्नप्रतियोगितानिरूपितवृत्तितावच्छेदकवह्नित्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभ-याभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वे पटत्वावच्छिन्नप्रतियोगितानिरूपितवृत्तितावच्छेदक-त्वविरहात्साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकत्वविरहादिति वाच्यम्। अस्म-न्मते यद्धर्मे एव प्रतियोगितात्वव्यापकत्वं निवेश्यम् नतु कूटत्वे निवेशनीयम्। तन्निवेशश्च सा-ध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वव्यापकं भवति प्रतियोग्यनाधिकरणहेतुमन्निष्ठा-भावीयप्रतियोगितात्वव्यापकत्वं तादृशसाध्यसामानाधिकरण्यमित्युभयत्र प्रतियोगितात्वव्याप-

---

(१) अत्र वह्निमान्धूमादित्यादौ अव्याप्तिवारणाय प्रतियोगितायामित्यत्र प्रतियोगितासामान्य इत्यर्थः।

(२) संयोगेन वगुणाधिकरणाप्रसिद्ध्या तेन सम्बन्धेन तदभावस्य लक्षणघटकत्वम्।

कतः(१)स्वावच्छेद्यत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववत्तासम्बन्धेन, व्यापकत्वे व्यापकत्वव्यापकता स्वरूपसम्बन्धेन, सर्वत्र व्यापकताघटकसम्बन्धः स्वरूपः, तथाचाभावस्याधिकरणभेदेन भिन्नत्वेऽपि तादृशोक्तसम्बन्धेन साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वस्य वह्नित्वे सत्त्वेन . तन्निष्ठव्यापकत्वस्योभयाभावत्वावच्छिन्नहेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकत्वसत्त्वाद्वह्निमान् धूमादित्यादौ नाव्याप्तिः । भवन्नये च यद्धर्मत्वादिनिवेशासत्त्वेन तन्निवेश इति तु न वक्तुं शक्यते । न चास्माकमपि प्रतियोगितात्वव्यापकत्वं प्रतियोगितायां निवेश्यते तन्निवेशयोक्तरीत्या साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वव्यापकं भवति हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वमित्येव निवेश्यते उभयत्र प्रतियोगितात्वव्यापकत्वं स्वनिरूपकाभाववत्त्वसम्बन्धेन, व्यापकत्वे व्यापकता च पूर्ववद् , तथाच वह्नित्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वावच्छिन्नप्रतियोगित्वस्य साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वस्य हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वस्य च सत्त्वान्न वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम्। सामान्याभावीयप्रतियोगित्वस्य प्रतियोगिस्वरूपत्वात् धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः,धूमत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वावच्छिन्नप्रतियोगित्वस्य निखिलधूमावच्छिन्नत्वस्वरूपत्वेन धूमवन्निष्ठाभावीयप्रतियोगितात्वस्य व्यापकत्वस्य धूमत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावीयप्रतियोगितायां सत्त्वेन तस्यां वह्निमन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वस्यापि सत्त्वात् । संयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगितायां स्वनिरूपकत्वस्य कालिकसम्बन्धावच्छिन्नत्वधूमत्वावच्छिन्नत्वोभयाभावस्य सत्त्वात् कालिकसम्बन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगितायां स्वावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणसाध्यवन्निष्ठाभावीयत्वविरहादिति । न च धर्म एव प्रतियोगितात्वव्यापकत्वं निवेश्यम्, तन्निवेशश्च पूर्वोक्तयुक्त्या ज्ञेयः, व्यापकता च स्वावच्छिन्नप्रतियोगिताकाभाववत्तासम्बन्धेन, तथाच धूमत्वावच्छिन्नत्वसंयोगसम्बन्धावच्छिन्नत्वोभयत्वस्य साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वेऽपि हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वविरहान्नातिव्याप्तिरिति वाच्यम् । गगनत्वस्यापि स्वावच्छिन्नाभाववत्तासम्बन्धेन धूमवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वेन तत्र द्वितीयव्यापकत्वस्यापि सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । नापि कूटत्वं निवेशयितुं शक्यते स्वावच्छिन्नाभाववत्तासम्बन्धेन घटपटमठगतकूटत्वे साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वसत्त्वेन हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकत्वसत्त्वात् धूमवाद् वह्नेरित्यादावतिव्याप्तिरतः स्वावच्छिन्नाधिकरणत्वसम्बन्धेनापि प्रतियोतात्वव्यापकत्वं न कूटत्वे निवेशयितुं शक्यते अधिकरणताया अधिकरणभेदेन भिन्नतया यादृशाभावगतकूटत्वावच्छिन्नाधिकरणत्वं न पटत्वावच्छिन्नप्रतियोगितायामिति वह्निमान् धूमादित्यादौ सर्वत्राऽसम्भवापत्तेरिति विभावनीयम् ।

नन्वत्र प्रतियोग्यनधिकरणसाध्यवन्निष्ठाभावीययद्धर्मावच्छिन्नप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वाभावः हेतुमन्निष्ठाभावीयतद्धर्मावच्छिन्नप्रतियोगितासामान्येऽपि तादृशाभाव इत्येव लाघवान्निवेशः कार्यः किमुभयाभावनिवेशेनेति चेन्न । यद्धर्मावच्छिन्नप्रतियोगि-

(१) स्वं—साध्यतावच्छेदकम् ।

त्वमित्यनेन यद्धर्मावच्छिन्नाऽनन्तप्रतियोगित्वस्य लाभः, तथाचाऽनन्तप्रतियोगितात्वव्यापकत्वस्य यत्सम्बन्धावच्छिन्नत्वाभावे निवेशापेक्षया लाघवादुभयाभाव एव सम्यगिति ।

न च यद्यदितिवीप्सादरो व्यर्थः, संयोगेन गुणत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकतया धूमवान् वह्नेरित्यादावतिव्याप्त्यभावादिति वाच्यम् । समवायावच्छिन्नवह्नित्वावच्छिन्नधूमवन्निष्ठाभावीयप्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वाभावसत्त्वेन हेतुमन्निष्ठाभावीयप्रतियोगितायामपि तादृशाभावसत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरतो वीप्सादरः । तथाच फक्किकापक्षे गौरवमिति । तन्न साधु । सामान्यपदस्य व्यापकतावाचित्वेन साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभाववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परायि यद्धर्मनिष्ठावच्छेदकतावद्धर्मावच्छिन्नहेतुमन्निष्ठाभावीयप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वाभाव इत्येव निवेशः । यत्सम्बन्धावच्छिन्नत्वाभाववृत्त्यभावश्च साध्यवन्निष्ठाभावीययद्धर्मावच्छिन्नप्रतियोगितावृत्तिभेदीयप्रतियोगितावच्छेदकत्वं नास्तीत्याकारकः, तस्य च नानाधिकरणत्वेऽपि न क्षतिः, यद्धर्मस्य यत्किंचित्त्वेनैव निवेशात् यद्यदिति सामान्याभावनिवेशाभिप्रायकत्वादिति । न च तादात्म्येन प्रमेयसाध्यकघटत्वादिहेतावव्याप्त्यापत्तिः, संयोगेन घटाद्यभावस्य लक्षणघटकत्वेऽपि साध्यवन्निष्ठाभावीययद्घटत्वावच्छिन्नप्रतियोगितात्वं तस्य तादात्म्यावच्छिन्नप्रतियोगितायामपि सत्त्वेन तत्र यत्सम्बन्धावच्छिन्नत्वविरहादिति वाच्यम् । समवायेन घटवृत्तित्वविशिष्टसत्ताभावस्यापि लक्षणघटकत्वेन तदीयप्रतियोगितायामेव तादात्म्यसम्बन्धावच्छिन्नत्वाभावसत्त्वान्नातिव्याप्तिः, तादात्म्यसम्बन्धावच्छिन्नघटवृत्तित्वविशिष्टसत्ताभेदस्य लक्षणघटकत्वेऽपि तदीयप्रतियोगितावच्छेदकत्वं न पटवृत्तित्वविशिष्टसत्तात्वे, अपितु लाघवात्सत्तात्व एवेति, तथाचोक्तभेदस्याऽप्रसिद्धतया समवायेनाऽत्यन्ताभावमादायैव नाऽव्याप्तिः तदीयप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वाभावसत्त्वात् । न च तादात्म्यसमवायान्यतरसम्बन्धेन प्रमेयसाध्यकघटत्वादिहेतावव्याप्त्यापत्तिः, तत्र घटत्वविशिष्टसत्ताभावस्य लक्षणघटकत्वेऽपि साध्यवन्निष्ठाभावीयघटत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगितात्वस्य तादात्म्यसमवायान्यतरसम्बन्धावच्छिन्नप्रतियोगितायामपि सत्त्वेन तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावविरहात्, नहि तादृशाभावीयप्रतियोगितावच्छेदकत्वं सत्तात्वे कल्पयितुं शक्यते पटान्तर्भावेन व्यभिचारादिति वाच्यम् । तत्र तादात्म्यस्वरूपघटितसामानाधिकरण्यसम्बन्धेन घटत्वविशिष्टजातित्वस्य स्वरूपेणाभावस्यैव लक्षणघटकत्वात्तदीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावसत्त्वात् घटत्वविशिष्टजातित्वत्वावच्छिन्नतादात्म्यसमवायान्यतरसम्बन्धावच्छिन्नप्रतियोगित्वस्य साध्यवन्निष्ठाभावीयत्वेऽपि तादृशावच्छेदकत्वस्य लाघवात्केवलजातित्वे एव कल्पनात् नोक्ताव्याप्तिः । यद्यपि तादात्म्यस्वरूपसमवायान्यतमसम्बन्धेन प्रमेयसाध्यकघटत्वादिहेतावव्याप्तिः, तत्र न तादृशजातित्वस्याभावमादायाऽव्याप्तिवारणं सम्भवति तादृशजातित्वावच्छिन्नप्रतियोगितात्वस्य उक्तान्यतमसम्बन्धावच्छिन्नप्रतियोगितायामपि सत्त्वेन तत्रोक्तान्यतमसम्बन्धावच्छिन्नत्वाभावविरहात्, उक्तान्यतमसम्बन्धावच्छिन्नप्रतियोगिताया अवच्छेदकत्वं न शुद्धजातित्वं कल्प्यते पर्वतादौ शुद्धजातित्वं नास्तीतिवत्तादृशजातित्वं नास्तीति प्रत्यया-

नुपपत्तेः । तथापि घटसंयुक्तो यः पटस्तदन्यत्वविशिष्टो यो घटस्तस्य संयोगसम्बन्धावच्छिन्नाभावमादाय लक्षणगमनात्, तदीयसाध्यतावच्छेदकान्यतमसम्बन्धावच्छिन्नप्रतियोगित्वं न लक्षणघटकं तदवच्छेदकत्वस्य लाघवाद् घटत्वे कल्पनाद् तादृशाभावस्याऽप्रसिद्धत्वादिति, तथाच संयोगसम्बन्धावच्छिन्नप्रतियोगितायां साध्यताघटकान्यतमसम्बन्धावच्छिन्नत्वाभावसत्त्वादिति । न च तादात्म्यसंयोगस्वरूपसमवायान्यतमसम्बन्धेन प्रमेयसाध्यकघटत्वहेतावव्याप्तिः, तत्र घटसंयुक्तो यः पटस्तदन्यत्वविशिष्टघटो नास्तीति संयोगसम्बन्धावच्छिन्नाभावस्य लक्षणघटकत्वेऽपि साध्यवन्निष्ठाभावीययद्धर्मावच्छिन्नप्रतियोगितात्वस्य घटसंयुक्तपटान्यत्वविशिष्टघटत्वावच्छिन्नतादात्म्यसंयोगसमवायान्यतमसम्बन्धावच्छिन्नप्रतियोगितायामपि सत्त्वेन तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावविरहात, नहि तादृशान्यतमसम्बन्धावच्छिन्नातादृशप्रतियोगितायाः अवच्छेदकत्वं लाघवाद् घटत्वे कल्पयितुं शक्यते घटसंयुक्ते पटे संयोगघटिततादृशान्यतमसम्बन्धेन घटो नास्तीतिवत्तादृशान्यतमसम्बन्धेन घटसंयुक्तपटान्यत्वविशिष्टघटो नास्तीति प्रतीत्यनुपपत्तिरिति वाच्यम् । तत्रापि संयोगेन तत्पर्वतान्यत्वविशिष्टद्रव्यं नास्तीत्यभावस्य लक्षणघटकत्वात्, तमादायैव नाव्याप्तिरिति । नहि तादृशप्रतियोगितावच्छेदकत्वं शुद्धतत्पर्वतान्यत्वविशिष्टे कल्पयितुं शक्यते । अनुयोग्यसमभिव्याहारस्थलेऽपि विशिष्टाधिकरणताया वैलक्षण्याभावादिति मते तत्पर्वतान्यत्वविशिष्टं नास्तीतिवद् तत्पर्वतान्यत्वविशिष्टद्रव्यं नास्तीति प्रतीत्यनुपपत्तेः, तत्पर्वतान्यत्ववैशिष्ट्यावच्छिन्नाधिकरणतायास्तत्र सत्त्वात्, तथाच तादृशप्रतियोगितायां साध्यतावच्छेदकोक्तान्यतमसम्बन्धावच्छिन्नत्वाभावसत्त्वादिति । नापि तादात्म्यस्वरूपसमवायसंयोगान्यतमसम्बन्धावच्छिन्नप्रतियोगिताया अपि लक्षणघटकत्वं, तदवच्छेदकत्वं शुद्धद्रव्यत्वे एव स्वीक्रियते लाघवात्, यत्रैवोक्तान्यतमसम्बन्धेन द्रव्यं नास्तीति प्रतीतिः तत्रैवोक्तान्यतमसम्बन्धेन तत्पर्वतान्यत्वविशिष्टद्रव्यं नास्तीतिप्रतीतिः, तत्पर्वतान्यत्वविशिष्टतत्पर्वते एव तादात्म्येन सत्त्वादिति । न च घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्त्यापत्तिः, तत्र समवायेन घटवृत्तित्वविशिष्टद्रव्यत्वाभावस्य साध्यवन्निष्ठत्वविरहात् संयोगस्वरूपादिसम्बन्धेन प्रतियोग्यनधिकरणत्वाप्रसिद्ध्या तादृशसम्बन्धेनाभावस्य लक्षणाऽघटकत्वात्, कालिकसम्बन्धेन च प्रतियोग्यधिकरणत्वस्यैव साध्यवति सत्त्वान्न तेन सम्बन्धेनाप्यभावस्य लक्षणघटकत्वम्, सम्भवति च संयोगादिना घटाद्यभावस्यैव, परन्तु साध्यवन्निष्ठाभावीयपटत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वाभावसत्त्वेऽपि साध्यवन्निष्ठाभावीयपटत्वावच्छिन्नप्रतियोगितात्वस्य समवायसम्बन्धावच्छिन्नप्रतियोगितायामपि सत्त्वेन तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावविरहादिति वाच्यम् । तत्र घटानुयोगिकसमवायेन घटवृत्तित्वद्रव्यविशिष्टद्रव्यत्वं नास्तीत्यभावस्यापि लक्षणघटकत्वेन तदीयप्रतियोगितायां शुद्धसमवायावच्छिन्नत्वाभावसत्त्वान्नाव्याप्तिरिति । यद्यपि तद्घटवृत्तित्वविशिष्टद्रव्यत्ववान् तद्घटत्वादित्यादावव्याप्तिः, तत्र तद्घटान्तरानुयोगिकसमवायेन प्रतियोग्यधिकरणत्वाऽप्रसिद्ध्या तादृशसम्बन्धेनाऽभावस्य लक्षणाऽघटकत्वात, तद्घटानुयोगिकसमवायेन च प्रतियोग्यधिकरणत्वस्यैव सत्त्वात्, संयोगेन घटाद्यभावस्य कथंचिल्लक्षणघटकत्वेऽपि सा-

ननु स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकेत्यत्राऽनवच्छेदकत्वं न तादृशावच्छेदकप्रतियोगिकभेदमात्रम्, धर्ममात्रस्यैव तादृशयत्किञ्चिदवच्छेदकभिन्नत्वेन व्याप्तिलक्षणा(१)ऽसम्भवप्रसङ्गात्, किन्तु

ध्यवन्निष्ठाभावीयघटत्वावच्छिन्नप्रतियोगितात्वस्य समवायावच्छिन्नप्रतियोगितायामपि सत्त्वात्तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावविरहात् । न च तत्र तद्घटवृत्तित्वविशिष्टद्रव्यत्वं ( विषयितासम्बन्धेन ) नास्तीत्यभावमादायैव लक्षणसमन्वयः तदीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावसत्त्वादिति वाच्यम् । तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावानङ्गीकारपक्षे दूषणं दत्तमस्माभिरिति । न च तद्घटवृत्तित्वविशिष्टद्रव्यत्वभेदमादायैव लक्षणसमन्वयः साध्यवन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावसत्त्वात् समवायेन तादृशप्रतियोगित्वे साध्यवन्निष्ठाभावीयत्वस्य हेतुमन्निष्ठाभावीयत्वस्य च विरहान्नाव्याप्तिरिति वाच्यम् । तादात्म्येनापि व्याप्यव्यापकभावानङ्गीकारात्, तदङ्गीकारेतु दधिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टप्रमेयस्य तादात्म्येन साध्यतायां स्थूलदधित्वहेतावव्याप्त्यापत्तेः, तत्र दधिवृत्तित्वविशिष्टप्रमेयस्य केनापि सम्बन्धेनाऽभावो न लक्षणघटकः, सकलसम्बन्धेन साध्याधिकरणे प्रतियोग्यधिकरणत्वस्य सत्त्वात् । संयोगेन घटाद्यभावस्य लक्षणघटकत्वेऽपि साध्यवन्निष्ठाभावीयघटत्वावच्छिन्नप्रतियोगितायामपि सत्त्वात्तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाद्यभावविरहात् ।

नन्वत्र दधिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टप्रमेयस्य संयोगेनाऽभावमादायैव नाऽव्याप्तिः तदीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वाभावसत्त्वादिति चेन्न । अन्यसम्बन्धावच्छिन्नवृत्तिताविशिष्टस्य तादात्म्यातिरिक्तसम्बन्धेन सत्तानङ्गीकारात्तथाच तादृशवृत्तिताविशिष्टप्रमेयस्य संयोगेनाधिकरणत्वाप्रसिद्ध्यैव न तमादायाव्याप्तिवारणं सम्भवति । न च दध्यन्तरानुयोगिकतादात्म्येन दधिनिरूपितवृत्तिताविशिष्टप्रमेयभेदमादायैव लक्षणसंगतिः, तथाच साध्यवन्निष्ठाभावीयप्रतियोगितायां शुद्धतादात्म्यसम्बन्धावच्छिन्नत्वाभावसत्त्वादिति वाच्यम् । तद्दधिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टप्रमेयस्य तादात्म्येन साध्यतायां स्थूलदधित्वहेतावव्याप्तिर्बोध्या, तत्र न तादृशाभावो लक्षणघटकः । न च दधिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताविशिष्टप्रमेयस्य समवायेनाभावस्यापि लक्षणघटकत्वेन तदीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावसत्त्वान्नाव्याप्तिरिति वाच्यम् । तादृशाभावप्रतियोगितावच्छेदकत्वस्य दधिवृत्तितावैशिष्ट्ये एव लाघवेन स्वीकारान्न तादृशविशिष्टाभावमादायाव्याप्तिरिति । तादृशाभावीयप्रतियोगितायां साध्यवन्निष्ठाभावीयत्वेपि हेतुमन्निष्ठाभावीयत्वविरहादुभयाभावानिवेश इति दिक् ।

व्याप्तिलक्षणाऽसम्भवप्रसङ्गादिति । ननु कालो घटवान् महाकालत्वादित्यत्र

( १ ) ननु कालो घटवान्महाकालत्वादित्यत्र समवायादिना घटाद्यभावस्यैव लक्षणघटकतया तदीयप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविरहेणाभेयाभावसत्त्वाल्लक्षणगमनात्कथमसम्भव इति चेन्न । कालिकेन महाकालान्यत्वविशिष्टघटाभावप्रतियोगितायां निरुक्तोभयोः सत्त्वात् । अतएव महाकालान्यत्वविशिष्टघटत्वाद्यवच्छिन्नाभावस्यैव तादृशस्य कथञ्चिन्महाकाले प्रसिद्ध्या इति पूर्वमुक्तं जगदीशेन ।

तादृशप्रतियोगिताश्च विशिष्योपादेयाः, नातो गुरोरवच्छेदकत्वं विना दुर्वचत्वं प्रतियोगित्वस्य ।

---

तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताको भेदः, तथाचाऽवच्छेदकत्वगर्भाया निरुक्तेः प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिः,(१) अवच्छेद्यत्वगर्भायास्तु प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः, प्रमेयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकवृत्तिप्रतियोगिताया लाघवेन वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेनैवाऽवच्छेदादत आह प्रतियोगिताश्चेति । तादृशावच्छेदकनिष्ठप्रतियोगिताव्यक्तयो विशिष्य तत्तदवच्छेदकत्वावच्छिन्नत्वेन प्रवेशनीयाः, न तु अनुगततादृशावच्छेदकत्वावच्छिन्नत्वेन यतो गुरुधर्मस्याऽनवच्छेदकत्वे व्याप्तेर्दुर्वचत्वं स्यादित्यर्थः ।

स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगिताव्यक्तीर्विशिष्योपादाय तत्तत्प्रतियोगितावच्छेदक(२)त्वावच्छिन्नभेदकूटवत्त्वं निवेशनीयमिति तु अपव्याख्यानम्, तत्तत्प्रतियोगिताविशेषिताऽवच्छेदकत्वव्यक्तीनां वास्तविकतत्तदवच्छेदकत्वव्यक्तीरपेक्ष्य गुरुत्वेन तत्प्रतियोगितानिरूपिताऽवच्छेदकत्वावच्छिन्नभेदानामप्यप्रसिद्ध्या दुर्वचत्वतादवस्थ्यात् । यदि च समनि(३)यतनानाधर्मावच्छिन्नप्रतियोगित्वस्य भेदे मानाभावः, तदा तत्तत्प्र-

---

समवायेन घटाद्यभावस्य प्रतियोगिव्यधिकरणतया तदीयप्रतियोगितायां साध्यतावच्छेदकसंम्बन्धावच्छिन्नत्वविरहान्निरुक्तोभयाभावसत्त्वात्कथमसम्भव इति चेन्न । कालिकेन महाकालान्यत्वविशिष्टघटाभावस्य प्रतियोगिव्यधिकरणतया तदीयप्रतियोगितायां निरुक्तोभयसत्त्वाल्लक्षणगमनाऽसम्भवात्, कालिकेन महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाधिकरणतायाः महाकालेऽनभ्युपगमादिति ।

**तथाचेति ।** तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदाविवक्षणे चेत्यर्थः । अवच्छेदकत्वगर्भाया निरुक्तेः—हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकमित्याकारिकाया इत्यर्थः । प्रमेयधूमवान् वह्नेरि-

---

(१) तथाचावच्छेदकत्वगर्भनिरुक्तौ व्यभिचारिणि स्वपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वादतिव्याप्तिः । एवं प्रतियोगिताधर्मिकावच्छेद्यतागर्भनिरुक्तौ स्वपदेन गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वादव्याप्तिरित्यर्थः ।

(२) स्वविशिष्टसम्बन्धिनिष्ठाभावीयत्वोपलक्षिततदुभयावृत्तिधर्मावच्छिन्ननिरूपितावच्छेदकत्वावच्छिन्नभेदकूटवद्धेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकमिति ।

(३) इदं चान्यतमत्वादीनामखण्डोपाधित्वमताभिप्रायेण, तेन घटत्वाद्यवच्छिन्नप्रतियोगितायां न तत्समनियतधर्माप्रसिद्धिः अन्यतमत्वाद्यवच्छिन्नत्वस्य प्रसिद्धत्वादिति । ननु तथापि यत्प्रतियोगितान्तर्गततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितायां धर्मान्तरावच्छिन्नत्वाप्रसिद्ध्या पारिभाषिकावच्छेदकाप्रसिद्धिरिति चेन्न । तद्व्यक्तिनिष्ठतत्तद्विशेष्यतातत्तदवच्छेदकताव्यक्तीनां निरवच्छिन्नत्वमनोपगमात्तत्प्रतियोगितायां तत्तद्विशेष्यत्वाद्यवच्छिन्नत्वप्रसिद्धेरिति ध्येयम् ।

प्रतियोगित्वं सम्बन्धित्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यम् , अतो न सम्बन्धभेदमादाय दोषः । अभावश्च प्रतियोगिव्यधिकरणो बोध्यः । कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेदकत्वमनित्यतत्तद्व्यक्तित्वे प्रसिद्धम् ।

---

तियोगितावच्छेदकत्वावच्छिन्नभेदकूटस्य प्रवेशेऽपि न क्षतिः, तत्तत्प्रतियोगितावच्छेदकत्वस्य तत्तदवच्छेदकत्वसमनैयत्याभावेन गुरुत्वस्याऽकिञ्चित्करत्वादिति (१)ध्येयम् ।

सम्बन्धभेदमिति । इदं च प्रागेव निरुक्तव्याख्यायां प्रपञ्चितम् ।

ननु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायाः संयोगत्वावच्छेद्यत्वेऽपि संयोगत्वस्य स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाभावात्संयोगी सत्त्वादित्यत्राऽतिव्याप्तिरत आह अभावश्चेति । निरुक्तित्रयेऽपीति शेषः । तथाच निरुक्तप्रतियोग्यनधिकरणस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगिताऽनवच्छेदकत्वं संयोगत्वेऽप्यक्षतमिति हेतुमन्निष्ठाभावप्रतियोगितायाः तदवच्छेद्यत्वादेव नातिव्याप्तिरिति । नन्वेवं गोमान् महाकालत्वादित्यत्राऽव्याप्तिः, गोत्वविशिष्टसम्बन्धिनिष्ठस्याऽभावमात्रस्यैव साध्यताघटककालिकसम्बन्धेन प्रतियोगिसमानाधिकरणतया स्वविशिष्टसम्बन्धिनिष्ठप्रतियोग्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाऽप्रसिद्धेरत आह कालिकेति । तथाच स्वावच्छिन्नानधिकरणसाध्यवत्खण्डकालनिष्ठाभावप्रतियोगितावच्छेदकतयैव तद्व्यक्तित्वे निरुक्तावच्छेदकत्वं सुलभमिति भावः ।

ननु हेतुमन्निष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकमात्रस्यैव घटत्वादिविशिष्टसम्बन्धिनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात्पारिभाषिकाऽवच्छेदकाऽप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिवारकं द्वितीयनिरुक्तौ अभावे प्रतियोगिवैयधिकरण्यं प्रवेश्यताम्, अवच्छेद्यत्वघटिततृतीयनिरुक्तावपि हेतुमन्निष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छेद्यत्वाभा-

---

त्यादावतिव्याप्तिरिति । प्रमेयधूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वरूपलघुधर्मसमनियतस्य गुरुतयाऽनवच्छेदकत्वादिति शेषः ।

---

(१) स्वविशिष्टसम्बन्धिनिष्ठीयतद्घटीयरूपरससंख्यावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगितावच्छेदकत्वं यत्तदवच्छिन्नप्रतियोगिताको यो भेदस्तत्प्रतियोगितावच्छेदकं, यत्र प्रतियोगितावच्छेदकत्वं तदपेक्षया लघु यत्र तदवच्छेदकत्वं तदतिप्रसङ्गापादकं स्यात्तद्रसे तदवच्छेदकत्वं नास्तीति भवति तत्र तत्प्रतियोगिताविशेषितं तदवच्छेदकत्वं नास्तीति प्रतीत्यापत्तेरिति ध्येयम् ।

न च मौलमिदमीयं च प्रतियोगिवैयधिकरण्यमनुपादेयम्, संयोगत्वाद्यवच्छिन्नाभाववति संयोगत्वादिविशिष्टस्य वृत्तेः, गुणादिनिष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नाऽभाववति चाऽवृत्तेः अव्याप्त्यतिव्याप्त्योरनवकाशादिति वाच्यम्। धूमवान् वह्नेरित्यादावतिव्याप्तेः, नह्युत्पत्तिकालाऽवच्छेदेनाऽपि महानसादौ किञ्चित्संयोगेन वर्त्तते, येन वह्निम-

वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थमभावे तद्विशेषणं दीयताम्, प्रथमनिरुक्तौ तु प्रतियोगिवैयधिकरण्यमभावविशेषणं किमर्थम्, इत्याशङ्कते नचेति। वाच्यमिति परेणान्वयः। संयोगी द्रव्यत्वादित्यादावव्याप्तिवारणं मौलस्य फलम्, अन्यथोपपादयति संयोगत्वाद्यवच्छिन्नेति। वृत्तेरिति। अव्याप्त्यनवकाशादित्यग्रेऽन्वयः। संयोगी सत्त्वादित्यादावतिव्याप्तिवारणमिदमीयस्य फलमन्यथाकुरुते गुणादीति। द्रव्यत्वत्वं द्रव्यान्याऽसमवेतत्वविशिष्टसकलद्रव्यसमवेतत्वम्, तच्च न समवायसम्बन्धेनाऽभावस्य प्रतियोगितावच्छेदकम्, लाघवेन द्रव्याऽन्याऽसमवेतत्वस्यैव तत्त्वादित्यत-

दीधितौ **मौलमिदमीयं चेति**। मौलं—मूलोपात्तम्। इदमीयम्—अवच्छेदकलक्षणे प्रविष्टम्। न चेदमीयप्रतियोगिवैयधिकरण्यानिवेशे एव मौलप्रतियोगिवैयधिकरण्यस्याऽनिवेश इति "इदमीयं मौलं चे"ति क्रमेण लिखनमुचितमिति वाच्यम्। एकदोभयखण्डने तथाक्रमस्याऽकिञ्चित्करत्वात्। **संयोगत्वावच्छिन्नाभाववतीति**। तथाच संयोगत्वस्य द्रव्यत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि संयोगत्वावच्छिन्नाभाववति संयोगत्वविशिष्टस्य सम्बद्धत्वात्संयोगत्वस्य न पारिभाषिकाऽवच्छेदकत्वम्, तादृशं चाऽवच्छेदकं गगनत्वादिकमेवेति तद्भिन्नत्वस्य संयोगत्वे सत्त्वान्नाऽव्याप्तिरिति भावः। **द्रव्यत्वत्वेति**। तथाच सत्ताधिकरणगुणादिनिष्ठप्रतियोगिव्यधिकरणसंयोगाभावप्रतियोगितावच्छेदकसंयोगत्वावच्छिन्नाभाववति संयोगत्वविशिष्टस्य सम्बद्धत्वेऽपि गुणादिनिष्ठाभावप्रतियोगितावच्छेदकीभूतद्रव्यत्वत्वावच्छिन्नाभाववति असम्बद्धत्वात्संयोगत्वस्य पारिभाषिकाऽवच्छेदकत्वान्न संयोगी सत्त्वादित्यत्राऽतिव्याप्तिरिति भावः। द्रव्यसमवेतत्वघटितस्य द्रव्यमात्रसमवेतत्वस्यापि द्रव्याऽन्याऽसमवेतत्वापेक्षया गुरुत्वान्नावच्छेदकत्वमतो व्याचष्टे जागदीश्यां **द्रव्यान्येति**। दीधितौ **द्रव्यमात्रसमवेतत्वादीति**। आदिना व्यभिचारनिरूपकाधिकरणगुणाऽवृत्तित्वपरिग्रहः। पारिभाषिकाऽवच्छेदकलक्षणे प्रतियोगिव्यधिकरणपदं प्रवेशयितुमाह दीधितौ **धूमवान् वह्नेरिति**। अतिव्याप्तिं दर्शयति **नहीति**। धूमवान् वह्नेरित्यत्र वह्निसमानाधिकरणाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकं यद् धूमत्वादिकं उत्पत्तिकालावच्छेदेन तदवच्छिन्नाभाववति महानसादौ धूमत्वविशिष्टस्य सम्बद्धत्वात् धूमत्वस्य पारिभाषिकावच्छेदकत्वमनुपपन्नमिति तादृशावच्छेदकं गगनत्वादिकमेव तद्भिन्नत्वस्य धूमत्वे सत्त्वादतिव्याप्तिरित्यर्थः। **येनेत्यादि**। यदि महानसादौ उत्पत्तिकालावच्छेदेनाऽपि

दयोगोलकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकाऽयोगोलकाऽवृत्तिद्रव्यत्वाद्यव-
च्छिन्नाभाववदवृत्तित्वं धूमत्वविशिष्टस्य सम्भाव्येत ।
प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य

---

स्तथैवाऽह द्रव्यमात्रेति। द्रव्याऽन्याऽसमवेतत्वमित्यर्थः । अवृत्तेरिति । अति
व्याप्त्यनवकाशादिति योजना । धूमवानिति । संयोगेन द्रव्यानामव्याप्यवृ-
त्तितया धूमत्वावच्छिन्नाभाववत्यपि धूमत्वादिविशिष्टस्य सत्त्वादिति भावः।
ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदयोगोलकाऽसंयुक्तत्वं
धूमत्वविशिष्टस्य तदवच्छिन्नाभाववदवृत्तित्वादेव नाऽतिव्याप्तिरत आह नहीं-
ति । इत्थं चाऽवच्छेदकत्वनिरुक्तौ प्रतियोगिवैयधिकरण्यप्रवेशे मूलोक्तहेतु
समानाधिकरणाऽभावेऽपि तदावश्यकम् , अन्यथा हेतुमन्निष्ठाभावप्रतियो-
गितावच्छेदकीभूतसंयोगत्वाद्यवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याव-
च्छिन्नस्याधिकरणे गुणादौ संयोगत्वादिविशिष्टस्य वृत्तेः संयोगी द्रव्य-
त्वादित्यादावव्याप्तिरिति भावः ।
लाघवमभिप्रेत्याह । प्रतियोगितयोरिति । मौलेदमीयप्रतियोगितयोरित्य-

---

संयोगेन किंचिद् वर्तते तदाऽयोगोलकाऽवृत्तिद्रव्यत्वावच्छिन्नाभाववदयोगोलकाद्येव स्यान्न तु
धूमवद् येन तत्र धूमत्वविशिष्टस्याऽसम्बद्धत्वाद् धूमत्वस्यावच्छेदकत्वं स्यादिति भावः । अ-
योगोलकाऽवृत्तिद्रव्यत्वेत्यत्र द्रव्यत्वपदं संयोगसम्बन्धेनाऽयोगोलकावृत्तित्वस्य संयोगसम्ब-
न्धावच्छिन्नायाश्च प्रतियोगिताया अवच्छेदकत्वलाभाय ।
इत्थंचेति । तथाच धूमवान् वह्नेरित्यत्राऽतिव्याप्तिवारणाय प्रतियोगिवैयधिकरण्य
निवेशे मूलेऽप्यव्याप्तिवारणाय तन्निवेशनीयमिति भावः ।
नच हेतुसमानाधिकरणस्याऽयोगोलकभेदाभावस्य प्रतियोगितावच्छेदकं यदयोगोलकभे-
दत्वं तदवच्छिन्नाभाववति अयोगोलके धूमत्वविशिष्टस्याऽसम्बद्धत्वेन कथं धूमवान् वह्नेरि-
त्यत्राऽतिव्याप्तिरिति वाच्यम् । प्रतियोगिवैयधिकरण्यानुपादाने तादात्म्येन साध्यतायां ध-
र्ममात्रस्यैव तदवच्छिन्नाभाववत्सम्बद्धत्वाविशिष्टसामान्यकत्वेन पारिभाषिकाऽवच्छेदकाप्र-
सिद्धयाऽव्याप्तिभयेन तदवच्छिन्नाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य
विवक्षणीयत्वेनाऽतिव्याप्तेः सत्त्वादिति ।
केचित्तु मौलप्रतियोगिवैयधिकरण्यानुपादाने सम्बन्धभेदनिबन्धनदोषवारणाय प्रतियो-
गितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे वृत्त्यनियामकसम्बन्धस्याऽभावप्रति-
योगिताऽनवच्छेदकत्वमते तेन सम्बन्धेन साध्यतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रति-
योगित्वाऽप्रसिद्ध्याऽव्याप्तेर्वारणाय साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वनिवे-
शनमावश्यकमित्याहुः ।
लाघवमभिप्रेत्येति । तथाच प्रतियोगिवैयधिकरण्यानुपादानेऽपि प्रतियोगितयोर्मौ-

वा विवक्षणे पुनरनुपादेयमेव प्रतियोगिवैयधिकरण्यद्वयम् । यत्राऽधिकरणे व्यभिचारस्तदन्यत्वत्वतदन्यत्वप्रकारकप्रमाविषयत्वत्वसाध्यवत्त्वप्रकारकप्रमावि-

---

र्थः । तथाच हेतुमन्निष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं प्रथमस्य, द्वितीयस्य तु स्वविशिष्टसम्बन्धिनिष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगिताऽनवच्छेदकीभूतहेतुसमानाधिकरणाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वमर्थः ।

तत्तत्सम्बन्धावच्छिन्नत्वपर्यवसन्नस्यैकसम्बन्धावच्छिन्नत्वस्याऽननुगमाद् विशेषणताविशेषावच्छिन्नत्वप्रवेशावश्यकत्वेन सम्बन्धान्तरप्रवेशे गौरवात्तदपेक्षया लाघवाच्चाह विशेषणतेति । अभावीयविशेषणताया लक्षणघटकत्वमभिप्रेत्याह तदन्यत्वत्वेति । प्रमाविषयत्वीयविशेषणतायास्तथा-

---

घुभूतैकसम्बन्धावच्छिन्नत्वादिनिवेशेनैवोपदर्शिताऽतिव्याप्तिवारणसम्भवे गुरुभूतप्रतियोगिवैयधिकरण्योपादानमनुचितमित्यालोच्येत्यर्थः । केचित्तु सम्बन्धभेदनिबन्धनदोषवारणाय प्रतियोगितयोः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्याऽवश्यकतयोपदर्शितरीत्याऽतिव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यद्वयं सार्थकमित्यभिप्रायकं मूलमुपपाद्य तादृशप्रतियोगितयोस्तदनिवेशे तन्निरर्थकमित्याशयेनाह **प्रतियोगितयोरितीति** वदन्ति । अन्ये तु प्रतियोगिवैयधिकरण्यघटितव्याप्तेर्दुर्ज्ञेयत्वम् कस्यचित्प्रतियोगिनः सर्वत्र हेत्वधिकरणे सत्त्वेन स्वप्रतियोग्यनधिकरणत्वस्याऽवश्यं वाच्यतया स्वत्वस्य तत्तद्व्यक्तिविश्रान्तत्वादित्याशयेन प्रतिगिवैयधिकरण्याघटितां व्याप्तिमाह प्रतियोगितयोरित्यादिनेत्याहुः ।

हेतुसमानाधिकरणाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितासामान्ये स्वविशिष्टतत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकावच्छेद्यत्वाभाव इति तृतीयस्यार्थो बोध्यः । धूमवान् वह्नेरित्यादौ हेतुसमानाधिकरणाभावीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकं यदयोगोलकभेदत्वं तदवच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववति अयोगोलके धूमत्वविशिष्टस्याऽसम्बद्धत्वान्नावच्छेदकत्वक्षतिः। यत्त्वतत्त्वयोरननुगमात् विशिष्य तत्तत्सम्बन्धानां निवेशे विशेषणताविशेषस्यापि निवेशात् , तन्निवेशादेव सामंजस्ये सम्बन्धान्तरप्रवेशो व्यर्थ इत्याह **तत्तत्सम्बन्धावच्छिन्नत्वपर्यवसन्नस्येति । विशेषणतेतीति ।**

ननु वह्निमान् धूमादित्यादौ संयोगेन साध्यतायां तादृशप्रतियोगितयोस्समवायादिसम्बन्धावच्छिन्नत्वनिवेशेऽप्युपपत्तिः सम्भवति, धूमवान् वह्नेरित्यादौ धूमत्वादेर्व्यभिचारनिरूपकाधिकरणाऽसमवेतत्वादिकमादायैवाऽवच्छेदकत्वसम्भवेनाऽतिव्याप्तेरभावादिति चेदत्र नव्याः । महानसभेदवद्वह्नेरित्यादौ विशेषणताविशेषेण साध्यतायां तादृशभेदसम्बन्धिसामान्यादिनिष्ठाभावीयसमवायादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य वह्न्यादिमन्निष्ठाभावप्रतियोगितावच्छेदकेऽसम्भवेनातिव्याप्त्यापत्त्या महानसभेदादिसाध्यके विशेषणताविशेषावच्छिन्नत्वमेव तादृशप्रतियोगितयोरवश्यं निवेशनीयमिति सर्वत्र तन्निवेश एवोचि-

त्वमभिप्रेत्याह तदन्यत्वप्रकारकेति । साध्यवत्त्वस्यावश्योपस्थितिकतया तदु-तः, सर्वत्रैवानुमितावेकजातीयग्रहहेतुत्वस्यौचित्यादित्याहुः

मान्यास्तु विशेषणताविशेषेण वृत्तिमन्मात्रस्यैवाऽव्याप्यवृत्तित्वभ्रमकालेऽनुमित्युपपत्तये प्रतियोगिव्याधिकरणत्वघटितव्याप्तिग्रहस्यापि विजातीयस्याऽऽवश्यकतया सर्वत्रैवाऽनुमितौ एकजातीयग्रहहेतुत्वस्य वक्तुमशक्यतया वह्निमान् धूमादित्यादौ तादृशप्रतियोगितयोः समवायसम्बन्धावच्छिन्नत्वमेव निवेश्यम्, विशेषणताविशेषावच्छिन्नत्वस्य वेति वाकारोऽनास्थायाम, तस्माद् वास्तवव्याप्तिलक्षणे एव प्रतियोगिवैयधिकरण्यं न देयमिति दीधितिकृतामाशय इत्याहुः ।

ननु दीधितौ प्रथमलक्षण एव धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यनिवेशस्य पूर्वमुपदर्शिततया तदनुपादाने तल्लक्षणे एवाऽतिव्याप्तिनिराकरणप्रकारप्रदर्शनस्योचितत्वेन यत्रेत्यादिना मध्यमलक्षणे तन्निवारणप्रकारप्रदर्शनं दीधितावनुपपन्नमिति चेन्न । जातिमान् भावत्वादित्यत्र भावत्वसमानाधिकरणाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितावच्छेदकं जातिमत्त्वप्रकारकप्रमाविशेष्यत्ववत्त्वं तदवच्छिन्नाभाववति समवायेन सम्बद्धत्वस्याऽप्रसिद्ध्याऽतिव्याप्तेरुपदर्शितत्वेनैतद्दोषेणैवैतल्लक्षणस्य पूर्वं परित्यक्ततया तत्राऽतिव्याप्तिनिराकरणप्रदर्शनमनुपयुक्तमिति द्वितीयलक्षणस्यैवोपादेयत्वेन तत्र निर्दोषत्वप्रतिपादनाय यत्रेत्यादिनाऽतिव्याप्तिनिराकरणं युक्तमेवेति । नच तथापि द्वितीयलक्षणे प्रतियोगिवैयधिकरण्यानुपादाने संयोगेन साध्यतायां पारिभाषिकाऽवच्छेदकाऽप्रसिद्ध्याऽतिव्याप्तेरभावेनाऽव्याप्तेरेव पूर्वमुक्ततयाऽप्रसक्ताया अतिव्याप्तेर्निराकरणे "प्रसक्तं हि प्रतिषिध्यते" इति नियमविरोधो दुष्परिहर एवेति वाच्यम् । जलह्रदे वह्निर्नास्तीत्यादौ जलह्रदादावप्रसक्तस्यापि वह्न्यादेर्निबन्धेन तादृशनियमस्यैवाऽसिद्धेरिति नन्वीधितौ व्यक्तत्वेन तादृशनियमविरोधाभावादिति । ननु लक्षणेऽभावीयविशेषणताविशेषस्य निवेशे भावसाधारण्यानुपगमे घटत्ववान् घटतद्भिन्नान्यतरत्वादित्यत्र व्यभिचारनिरूपकाधिकरणघटभिन्नान्यत्वस्य साध्यवन्निष्ठस्य घटत्वात्मकस्य तेन सम्बन्धेनाऽवृत्त्या तस्य तद्व्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नतदभावस्य साध्यवन्निष्ठतया हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य घटभिन्नान्यत्वस्य साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वाऽसम्भवेन साध्यतावच्छेदकस्य पारिभाषिकाऽनवच्छेदकत्वाऽसम्भवेनाऽतिव्याप्तिरत आह प्रमाविषयत्वीयविशेषणतया इति । केचित्तु अयं घटो घटतद्भेदान्यतरत्वादित्यादौ व्यभिचारनिरूपकाधिकरणघटादिभेदस्य यो भेदस्तस्याऽनवस्थाभयेनाऽधिकरणस्वरूपस्य साध्यवति घटादौ न विशेषणतया वृत्तिर्द्रव्यादिभावरूपाऽभावस्याऽभावीयविशेषणतानभ्युपगमादिति तदन्यत्वत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वाऽसम्भवेनाऽतिव्याप्तिरिति प्रमाविषयत्वानुधावनम् । न च घटात्मकभेदस्य घटादौ वृत्तिनियामकसम्बन्धान्तराभावेन भेदत्वरूपेण वृत्तिनियामकस्वरूपसम्बन्धस्याऽवश्यपेयतया नातिव्याप्तिसम्भव इति वाच्यम् । घटादौ तद्रूपेणैव विशिष्टस्य स्वरूपसम्बन्धस्वीकारेऽपि

षयत्वत्वादीनां साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वात् हेतुतावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाच्चाऽतिव्याप्तेरनवकाशात् ।

तथाच विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्सम्बन्धावच्छिन्नसाधनसमानाधिकरणाऽत्यन्ताभावप्रतियोगितासामान्ये नास्ति साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिरिति पर्यवसितोऽर्थः ।

यत्र सद्धेतुविशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति ।

---

घटितधर्मस्योपस्थितिलाघवात् तमादायैवाऽतिव्याप्तिवारणं सुघटमित्याशयेनाऽऽह साध्यवत्त्वेत्यादि ।

नन्वेवं हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकीभूतधर्मावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावः साध्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नो हेतुव्यापक इत्युक्तक्रमेण तृतीयार्थः फलितः । तथाच विशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये एव साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नत्वाभावेन तादृशोभयाभावसत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः । न च हेतुमन्निष्ठाभावप्रतियोगितायां विशेषणताविशेषावच्छिन्नत्वं न देयमिति वाच्यम् । वह्निमत्त्वप्रकारकप्रमाविशेष्यत्वादीनां संयोगादिसम्बन्धेनाऽभावस्य हेतुमति सत्त्वेन वह्निमान् धूमादित्यादौ सर्वत्रैवाऽव्याप्तिप्रसङ्गादित्यतः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वांशपरित्यागेन तृतीयस्यार्थं निष्कृष्य दर्शयति तथाचेत्यादिना । यद्धर्मेति । यत्पदं साध्यतावच्छेदकपरम् । तत्सम्बन्धावच्छिन्नेति । विशेषणताविशेषावच्छिन्नेत्यर्थः । अत्र प्रतिपदव्यावृत्तिरुक्तदिशा बोध्या ।

---

तस्याऽभावीयविशेषणतात्वे मानाभावादिति वदन्ति ।

तद्घटितधर्मस्योपस्थितिलाघवादिति । व्यभिचारनिरूपकाधिकरणान्यत्वप्रकारकप्रमाविषयत्वस्य भेदघटिततया साध्यवत्त्वप्रकारकप्रमाविषयत्वस्य तदघटिततयाऽपि लाघवं बोध्यम् । साध्यवत्त्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यम् ।

दीधितौ तथाचेति । विशेषणताविशेषस्य लक्षणघटकत्वे इत्यर्थः । अत्रेति । धूमवान् वह्नेरित्यादौ वह्निसमानाधिकरणह्रदत्वप्रकारकप्रमाविषयत्वाभावप्रतियोगितायां धूमत्व-

न च निरुक्तप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितावच्छेदकावच्छेद्यत्वं साधने तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद् व्याप्तिरुचितेति वाच्यम् । सामान्यपदस्य व्यापकतावाचित्वेन निरुक्तप्रतियोगितात्वव्यापकतावच्छेदकं यद्धर्मावच्छिन्नवन्निष्ठविशेषणताविशेषावच्छिन्नाभावप्रतियोगितावच्छेदकावच्छेद्यतात्वमित्यर्थपर्यवसानेन प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः, प्रमेयधूमत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकावच्छेद्यतात्वस्य गुरुधर्मतया वह्निमन्निष्ठाभावप्रतियोगिता[?]वन्निष्ठाभावप्रतियोगितानवच्छेदकत्वेन तादृशप्रतियोगितात्वव्यापकतावच्छेदकत्वात्, अस्माकं तु प्रमेयधूमत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकं यदयःपिण्डभेदत्वं तदवच्छेद्यत्वाभावस्यैव साधवन्निष्ठाभावप्रतियोगितात्वव्यापकत्वाभावेना-

---

विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकीभूतधूमवत्त्वप्रकारकप्रमाविशेष्यत्वत्वावच्छेद्यत्वाभावादतिव्याप्तिरतः प्रतियोगितासामान्ये इति । इत्थं च धूमवत्त्वप्रकारकप्रमाविशेष्यत्वाभावप्रतियोगितायां तदवच्छेद्यत्वाभावस्याऽसत्त्वादेव नातिव्याप्तिः । ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वांशपरिग्रहपक्षे सिद्धान्तलक्षणोक्तरीत्या प्रतियोगिताधर्मिकोभयाभावविवक्षावत् साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वांशं परित्यज्य विशेषणताविशेषावच्छिन्नत्वनिवेशेऽपि हेतुमन्निष्ठाभावप्रतियोगितासामान्ये तादृशानवच्छेदकावच्छेद्यत्वविशेषणताविशेषावच्छिन्नत्वोभयाभाव एवोचितः । न चोभयत्वनिवेशे गौरवात्तदनिवेश इति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वपरिग्रहेऽपि उभयाभावनिवेशे गौरवस्य तुल्यत्वादिति चेन्न । सिद्धान्तलक्षणे प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वाभाव इति रीत्याऽनुयोगितावच्छेदककोटौ साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे कालो घटवान् कालपरिमाणादित्यादौ प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया अप्रसिद्ध्याऽव्याप्तिः स्यादित्यनुयोगितावच्छेदककोटौ साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमनिवेश्य प्रतियोगितावच्छेदककोटौ तन्निवेश्याऽगत्या गौरवमङ्गीकृत्योभयाभावो निवेशितः । विशेषणताविशेषावच्छिन्नत्वनिवेशे च तत्र कालान्यत्वप्रकारकप्रमाविशेष्यत्वाभावप्रतियोगिताया एव तादृश्याः प्रसिद्ध्याऽव्याप्त्यभावेनाऽनुयोगितावच्छेदककोटावेव तदवच्छिन्नत्वं निवेश्य तादृशानवच्छेदकावच्छेद्यत्वाभावनिवेशेनैव निर्वाहे प्रतियोगितावच्छेदककोटौ तन्निवेश्य गुरुभूतोभयाभावनिवेशे प्रयोजनाभावेन तन्निवेशो नोचित इत्याशयेनोभयाभावो न निवेशित इति हृदयम् ।

व्यापकतावच्छेदकमिति । नच निरुक्तप्रतियोगितात्वव्यापकं तादृशाऽवच्छेद्यत्वमित्येव कुतो नोक्तमिति वाच्यम् । व्यापकत्वस्य तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपतया प्रमेयत्वादिकमादाय व्यभिचारिण्यतिव्याप्तिः स्यादिति ।

ऽति व्याप्त्यभावात् ।

एतेन साधनसमानाधिकरणाभावसामान्ये यद्धर्मावच्छिन्नसमानाधिकरणाऽभावत्वं, तादृशाभावप्रतियोगितासामान्ये वा यद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितात्वं साध्ये तद्धर्मावच्छिन्नसामानाधिकरण्यमेव व्याप्तिः लाघवात्, इत्यपि प्रत्युक्तमिति ध्येयम् ।

अतिव्याप्त्यभावादिति । नन्वत्र प्रमेयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यतात्वस्यापि वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यतात्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाऽप्रसिद्ध्या प्रमेयवह्निमान् धूमादित्यादावव्याप्तिरिति चेन्न । यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावसमानाधिकरणावच्छेदकता (धर्मनिष्ठनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकता) निरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वं हेतुमन्निष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितात्वव्यापकतावच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यमिति, तथाच तदवच्छेदकतानिरूपितावच्छेद्यत्वाभावकूटे हेतुसमानाधिकरणाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितात्वव्यापकमिति फलितार्थः । तथाच प्रमेयवह्निमान् धूमादित्यादौ नाव्याप्तिरिति । न च वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावसमानाधिकरणप्रमेयावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वस्य प्रतियोगितामात्रे सत्त्वेनावच्छेद्यत्वाभावकूटवान्नेति भेदस्य हेतुमन्निष्ठघटाधिकरणत्वाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य तादृशकूटे विरहाद्वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावकूटे एव तादृशप्रतियोगितात्वव्यापकत्वं निवेश्यम्, तथाच प्रमेयादौ उभयावृत्तित्वविरहान्नोक्तासंभव इति ग्रन्थपरिष्कारः । अत्रेदं शंक्यते । ननु हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितात्वं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतासमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभावकूटवदवृत्तितादृशधर्मावच्छिन्नसामानाधिकरण्यनिवेशेनैव सामञ्जस्ये किं व्यापकत्वे नञ्द्वयप्रवेशेनेति चेन्न । वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितावच्छेदकतासमानाधिकरणघटत्वपटत्वादिनिष्ठतत्तद्व्यक्तित्वस्य तद्धर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभावकूटान्तर्भावेण निवेशे वह्निमान् धूमादित्यादौ बहुतरकूटनिवेशनेन च गौरवम्, अस्माकन्तु वह्न्यधिकरणतात्ववह्नित्वादिधर्मावच्छेद्यत्वाभावकूटानिवेशेन न गौरवम्, बहुतरकूटानिवेशात् । न च प्रमेयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतात्वस्य गुरुत्वेन तदवच्छिन्नाभावाऽप्रसिद्ध्या प्रमेयवह्निमान् धूमादित्यादावव्याप्तिवारणाय यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतावृत्तिउभयावृत्तिधर्मावच्छिन्नप्र-

साध्यसाधनभेदेन व्याप्तेर्भिन्नतया प्रमेयवह्नित्वादिना गुरुधर्मेण साध्य-
तास्थले एव साध्यतावच्छेदकावच्छेद्यत्वाऽप्रसिद्ध्या प्रोक्तक्रमेण व्याप्ति,
र्वाच्या । वह्निमान् धूमादित्यादौ तु लघुरूपेण साध्यतास्थले हेतुमन्निष्ठाभा-
वप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावव-
त्तितैव सा वक्तव्या, शङ्कैक्यस्याऽकिञ्चित्करत्वादित्याह यत्र सद्धेतुविशेषे इति ।

---

तियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवदवृत्तिउभयावृत्तिधर्मावच्छि-
न्नावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नावच्छेदकतानिरूपिता सती अवच्छे
द्यतात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वं हेतुमन्नि
ष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितात्वव्यापकतावच्छेदकमिति त्वया
अवश्यं निवेश्यतया वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितावच्छेदकतावृत्त्युभयावृत्ति-
घटत्वपटत्वादिगततत्तदवच्छेदकतागततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटस्य वह्नि-
मान् धूमादित्यादौ साम्येन फक्किकापक्षे एव लाघवमिति वाच्यम् । धूमवान् वह्नेरित्यादा-
वतिव्याप्त्यापत्तेः । वह्निमन्निष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नघटाधिकरणत्वाभावीय-
प्रतियोगितात्वस्य धूमत्वविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियो-
गितावच्छेदकीभूतधर्मावच्छेद्यत्वाभावकूटवदवृत्तितया तादृशधूमत्वावच्छिन्नसामानाधिकर-
ण्यस्याक्षतत्वात् । न च हेतुमन्निष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितात्वस्य-
व्यापकत्वमेव यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिता-
वच्छेदकीभूतधर्मावच्छेद्यत्वाभावकूटवदवृत्तित्वाभावे निवेश्यम्, कूटद्वयनिवेशापेक्षया
तथापि लाघवसम्भवात्, धूमवान् वह्नेरित्यादौ तु तादृशप्रतियोगितात्वत्वस्य धूमा-
भावीयप्रतियोगितात्वेऽपि सत्त्वेन तत्रोक्तकूटवद्वृत्तित्वविरहेण नातिव्याप्तिरिति वाच्यम् ।
सर्वत्रासम्भवापत्तेः । धूमवन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नत्वविशिष्टप्रतियोगितात्वे
शुद्धप्रतियोगितात्वानतिरिक्ततया तादृशप्रतियोगितात्वत्वाधिकरणे शुद्धप्रतियोगितात्वे व-
ह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितावच्छेदकीभूतधर्मावच्छे-
द्यत्वाभावकूटवद्वृत्तित्वेनाऽवृत्तित्वविरहेण वृत्तित्वाभाववान्नेति भेदसत्त्वेन व्यापकत्वानुप-
पत्तेः । यद्यपि तादृशप्रतियोगितात्वव्यापकत्वमेव यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयतादृशप्र-
तियोगितावच्छेदकावच्छेद्यत्वाभावकूटवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नसम्बन्धित्वाभावे नि-
वेश्यम्, व्यापकता व्याप्यता च स्वरूपसम्बन्धेनैव ग्राह्या, न तु तादृशप्रतियोगितात्वत्वव्याप-
कत्वं निवेश्यम्, तथाच वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छि-
न्नप्रतियोगितावच्छेदकघटाधिकरणतात्वावच्छेद्यत्वाभावकूटवद्वह्न्यधिकरणाभावीयप्रतियोगिता-
निरूपिततादात्म्यसम्बन्धावच्छिन्नसम्बन्धित्वाभावस्य हेतुमन्निष्ठाभावीयघटाधिकरणतात्वाव-
च्छिन्नप्रतियोगितायां सत्त्वेन व्यापकत्वसम्भवान्नासम्भवः, तथापि नानाव्यक्तिसाध्यकवह्नि-
मान् धूमादित्यादावव्याप्त्यापत्तेः । प्रतियोगितामात्रस्य प्रतियोगिस्वरूपतया वन्ह्यधिकरण-
त्वाभावीयप्रतियोगिता निखिलवह्न्यधिकरणतास्वरूपा तत्तद्वन्ह्यधिकरणत्वाभावीयप्रतियोगिता-

गौरवप्रतिसन्धानदशायामपि कंबुग्रीवादिमान्नास्तीतिप्रतीतिबलाद् गुनत्वमतमुपन्यस्यति गौरवेति । यादृशप्रतीत्या गुरोरवच्छेदकत्वप्र-

तत्तद्वन्ह्यधिकरणतास्वरूपैव, तथाच धूमवन्निष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितात्वस्य महानसीयवन्ह्यधिकरणत्वाभावीयप्रतियोगितायामपि सत्त्वेन तत्तद्वह्नित्वाविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छेद्यत्वाभाववत्कूटवद्वन्ह्यधिकरणत्वाभावीयप्रतियोगितानिरूपिततादात्म्यसम्बन्धावच्छिन्नसम्बन्धित्वाभावसत्त्वेन तद्वान्नेति भेदसत्त्वात्तादृशभेदप्रतियोगितानवच्छेदकत्वस्य तादृशसम्बन्धित्वाभावे सत्त्वेन व्यापकत्वानुपपत्त्याऽव्याप्तिः । तन्निवेशे च वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयतादृशसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकवन्ह्यधिकरणतात्वावच्छेद्यत्वाभावस्य महानसीयवन्ह्यधिकरणत्वाभावीयप्रतियोगितायां सत्त्वेन न व्यापकत्वानुपपत्तिरिति ।

एतेन हेतुमन्निष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितात्वव्यापकं भवति यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभावकूटं तद्धर्मावच्छिन्नासामानाधिकरण्यनिवेशेनैव सामञ्जस्ये किं कूटद्वयनिवेशेन, कूटे व्यापकता च स्वाश्रयानिरूपिततादात्म्यसम्बन्धावच्छिन्नसम्बन्धितावत्त्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेत्यपास्तम् । प्रतियोगितायाः प्रतियोगिस्वरूपत्वेनोक्तयुक्त्या नानाव्यक्तिसाध्यकसद्धेतावव्याप्त्यापत्तेः, अत एव हेतुमन्निष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नाभावत्वव्यापकं भवति यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभावकूटं तद्धर्मावच्छिन्नसामानाधिकरण्यम्, व्यापकता च स्वाश्रयनिरूपिततादात्म्यसम्बन्धावच्छिन्नसम्बन्धितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवन्निरूपकत्वसम्बन्धेनेत्यपि न सम्यक् । प्रतियोगितायाः प्रतियोगिस्वरूपतया वह्निमान् धूमादित्यादावुक्तयुक्त्याऽव्याप्त्यापत्तेरिति दिक् ।

नन्वत्रकल्पेऽपि विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकहेतुसमानाधिकरणाभावसामान्ये यद्धर्मविशिष्टसम्बन्ध्यवृत्तिविशेषणताविशेषावच्छिन्नप्रतियोगिताकाभावान्यत्वं साधने तद्धर्मावच्छिन्नसामानाधिकरण्यनिवेशेनैव निर्वाहात्, किं गुरुतरलक्षणानुसरणेनेति चेन्न । प्रमेयवान् वाच्यत्वादित्यादावव्याप्त्यापत्तेः, यद्धर्मविशिष्टसम्बन्ध्यवृत्त्यभावाप्रसिद्धेः । न च गगनाभावाभाव एव तत्प्रसिद्धिरिति वाच्यम् । गगनाभावस्याभावे मानाभावाद् गगननिष्ठप्रतियोगित्वमतिरिक्तमिति मतेनादोषात् । नच गगन एव तत्प्रसिद्धिरिति वाच्यम् । गगनस्याभावत्वविरहात् । तथापि यद्धर्मावच्छिन्ननिरूपितवृत्तित्वाभावावच्छिन्नप्रतियोगिताकभेद एव उक्ताभावत्वव्यापकत्वं निवेश्यम्, तथाच तादृशवृत्तित्वाभाववत्त्वस्य गगने सिद्धतया तदन्यत्वस्य हेतुसमानाधिकरणविशेषणताविशेषावच्छिन्नप्रतियोगिताकाभावसामान्ये सत्त्वान्न कुत्रापि दोषः सम्भवतीति सुधीभिर्विभावनीयम् ।

रपि धर्मोऽवच्छेदकः प्रतियोगितायाः ।

---

सिद्धिः, तादृशबुद्धौ गौरवज्ञानस्य यदि विरोधित्वं स्यात्तदा मानाभावाद् गुरोरवच्छेदकत्वं न स्यात्, न चैतदस्तीति भावः । (१)यद्यपि गौरवज्ञानमात्रं नावच्छेदकत्वधीप्रतिबन्धकं, विशिष्टसत्तात्वस्य द्रव्यत्वत्वापेक्षया गुरुत्वग्रहेऽपि विशिष्टसत्ता नास्तीतिप्रतीत्या तदवच्छेदकत्वग्रहस्य प्राचैरपि स्वीकृतत्वात् । न च तद्धर्मसमानाधिकरणधर्मधर्मिकः तदपेक्षया लघुत्वग्रहः तद्धर्मस्याऽवच्छेदकत्वधीप्रतिबन्धकः, नीलधूम(२)त्वसमानाधिकरणधूमत्वे तदपेक्षया लघुत्वग्रहेऽपि नीलधूमो नास्तीतिप्रतीत्या नीलधूमत्वस्याऽवच्छेदकत्वावगाहनस्य सर्वसम्मतत्वात् । नापि तद्धर्मसमनियतधर्मधर्मिक एव तद्धर्मापेक्षया लघुत्वग्रहस्तद्धर्मस्याऽवच्छेदकत्वधीप्रतिबन्धक इति साम्प्रतम् । घटज्ञानत्वापेक्षया लघुनोऽपि ज्ञानत्वस्य घटज्ञानत्वसमनियतत्वाभावाद् गुरुणोऽपि घटज्ञानत्वस्य संयोगसम्बन्धावच्छिन्नघटज्ञानाभावस्य प्रतियोगितावच्छेदकत्वापत्तेः । तथापि संसर्गमर्यादया प्रतियोगितावच्छेदकत्वग्रहं प्रति तादात्म्येन कम्बुग्रीवादिमत्त्वरूपस्तत्तद्गुरुधर्मः प्रतिबन्धक इति न कदाचिदपि संसर्गमर्यादया तेष्ववच्छेदकत्वग्रह इति प्राचां तात्पर्यम् । वस्तुतः संसर्गमर्यादया कम्बुग्रीवादिमत्त्वाव-

---

नव्यमतमिति । एतन्मते च कालो घटवान् कालपरिमाणादित्यनुरोधेन प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाव इत्यादिरीत्या लक्षणं निर्वाच्यम् । अत्र कम्बुग्रीवादिमान्नास्तीत्यादिप्रतीतिर्न गुरोरवच्छेदकत्वसाधिका, गुरोरनवच्छेदकत्ववादिना तादृशप्रतीतेर्भ्रमत्वस्यापि वक्तुं शक्यत्वात्, अतस्तादृशप्रतीत्यनुपपत्तिरेव तत्साधकत्वेन वाच्या, अनुपपत्तिश्च गौरवाऽप्रतिसन्धानदशायां न सम्भवति, गुरोरनवच्छेदकत्वमतेऽपि गौरवज्ञानस्यैव प्रतियोगितावच्छेदकत्वग्रहविरोधितया तद्दशायां तादृशप्रतीत्यनुपपत्तेरभावात्, अतो गौरवप्रतिसन्धानदशायामित्युक्तम् । तथाच तद्दशायां गुरो-

---

(१)न चावच्छेदकत्वाभावव्याप्यतया गौरवज्ञानस्यावच्छेदकत्वधीविरोधिताया नव्यैरपि स्वीकारात् स्वातन्त्र्येण गौरवज्ञानस्य तत्प्रतिबन्धकताया दुर्वचत्वादिदमसङ्गतमिति वाच्यम् । संसर्गमर्यादया प्रतियोगितावच्छेदकत्वग्रहं प्रति तत्तत्प्रतियोगितावच्छेदकापेक्षितगुरुत्वज्ञानेन समानविशेष्यताप्रत्यासत्त्या प्रतिबन्धकत्वस्य प्राच्यैः स्वीकारात् । नचैवं गुरुत्वाग्रहदशायां कम्बुग्रीवादिमान्नास्तीति प्रतीत्या गुरोरवच्छेदकत्वासिद्धिरप्रत्यूहैवेति वाच्यम् । अन्ततो भगवत एव तादृशगुरुत्वग्रहस्य सर्वदैव सर्वानुमतस्यैव सर्वत्र प्रतिबन्धकत्वादिति प्राचामाशयः ।

(२) ननु मङ्क्रान्तस्य विशिष्टसत्त्वस्य नाशे बीजाभाव इति वाच्यम् । विशिष्टस्यातिरिक्तत्वमताभिप्रायेण तस्यानुक्तत्वात् । सत्तात्वेऽतिरिक्तविशिष्टसत्त्वस्य सामानाधिकरण्यविरहात् । नीलत्वविशिष्टधूमत्वस्यातिरिक्तत्वेपि धूमत्वापेक्षया लघुत्वाभावात् तस्यातिरिक्तत्वेन जातित्वाभावात् समवेतत्वेनाखण्डोपाधित्वाभावात् । स्वरूपेण वृत्तिमत्त्वे सति समवायेतरभावत्वमखण्डोपाधित्वमिति तल्लक्षणादिति ध्येयम् ।

न चाऽस्यास्तत्प्रतियोगिकाऽभावमात्रमवलम्बनम्, तथाविधयत्किञ्चि-

च्छेद्यप्रतियोगिताकत्वावगाहिज्ञानं प्रति समानविशेष्यताप्रत्यासत्त्या क-म्बुग्रीवादिमत्त्वापेक्षया लघुधर्मावच्छिन्नप्रतियोगिताकत्वज्ञानत्वेनैव प्रति-बन्धकत्वं प्राचामभिप्रेतम्, तथाच जलादौ निर्वह्नित्वस्याऽग्रहदशायां व-ह्निमत्त्वभ्रमस्येव उक्तक्रमेण गौरवस्याऽग्रहदशायामपि कम्बुग्रीवादिमत्त्वाव-च्छिन्नप्रतियोगिताकत्वेन तादृशग्रहो जायत एव। अन्यथा(१) तदानीमु-त्पन्नायाः कम्बुग्रीवादिमान्नास्तीतिधियो बाधनिश्चयविधया कम्बुग्रीवा-दिमत्त्वावच्छिन्नविशिष्टधीविरोधित्वानुपपत्तेः। कम्बुग्रीवादिमत्त्वावच्छि-न्नस्य विशिष्टबुद्धौ तदवच्छिन्नप्रतियोगिताकत्वेनाऽभावनिश्चयस्य विरो-धित्वादिति ध्येयम्।

प्रतीतेर्बलम् अवच्छेदकत्वावगाहित्वम्। गुरुरपीति। तथाच स्वरूपसम्ब-न्धरूपाऽवच्छेदकत्वघटितं मूलोक्तं यथाश्रुतमेव व्याप्तिलक्षणं सम्यक्। प्रमे-यधूमत्वादेस्तादृशावच्छेदकत्वेन व्यभिचारिण्यतिव्याप्तिविरहादिति कृतं पारिभाषिकाऽवच्छेदकत्वनिर्वचनेनेति भावः।

ननूक्तक्रमेण गौरवज्ञानस्य विरोधित्वात्तादृशप्रतीत्याऽवच्छेदकत्वं नावगाह्यते, परन्तु कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावमात्रमित्याशंक्य निषेधति नचेति। अवलम्बनम् विषयः। तथाविधेति। कम्बुग्रीवादिमत्त्वाश्र-येत्यर्थः। तादृशप्रतीतेः—कम्बुग्रीवादिमान्नास्तीत्याकारकप्रतीतेः। अनुद-यादिति। तथाच त्वन्मते कम्बुग्रीवादिमदन्तरस्याभावमादाय तदुदयप्रसङ्ग इति भावः।

ननु तथाविधयत्किञ्चिद्व्यक्तिनिर्णये स एव प्रतिबन्धकः, अन्यथा(२)

रनवच्छेदकत्वमते तादृशप्रतीत्यनुपपत्तिः, तन्मते गौरवस्य प्रतियोगितावच्छेदकत्वविरोधि-त्वेन तद्विरोधिज्ञानस्य तद्बुद्धिप्रतिबन्धकतया तदानीं प्रतिबन्धकसत्त्वेन तादृशप्रतीत्यनुपप-त्तेः। गुरोरवच्छेदकत्वे च गौरवज्ञानस्य तत्राऽप्रतिबन्धकत्वेन न तदनुपपत्तिरिति गुरोरव-च्छेदकत्वमावश्यकमिति भावः। गौरवज्ञानमात्रमप्रयोजकम्, अप्रामाण्यज्ञानानास्कन्दितस्यैव विरोधिज्ञानस्य सर्वत्र प्रतिबन्धकत्वादिति अप्रामाण्यज्ञानानास्कन्दितगौरवज्ञानलाभाय गौरव-ज्ञानदशायामिति विहाय गौरवप्रतिसन्धानदशायामित्युक्तम्।

कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावमात्रमिति। तथाचोक्तप्रतीतेरवच्छेद-कत्वविषयकत्वमेवाऽसिद्धमिति भावः। दीधितौ नचेति। अस्याः—कम्बुग्रीवादिमान्ना-स्तीतिप्रतीतेः।

(१) तदानीं कम्बुग्रीवादिमान्नास्तीतिप्रतीतेर्घटत्वावच्छिन्नप्रतियोगिताकत्वावगाहितया न भ्रमत्वमित्यत आह अन्यथेति।

(२) यत्किंचिद्व्यक्तिनिर्णयासत्त्वे।

व्यक्तिसत्त्वे एव तादृशप्रतीतेरनुदयात् । अतएवैकघटवति भूतले कम्बुग्रीवादिमान्नास्तीति शब्दो न प्रमाणम् , प्रमाणं च घटसामान्यशून्ये ।

विशेषादर्शनदशायां तत्रापि कम्बुग्रीवादिमान्नास्तीतिप्रतीतिर्जायत एव नत्र्यत आह अतएवेति । गुरुधर्मस्याऽवच्छेदकत्वादेवेत्यर्थः । न प्रमाणमिति । कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावशून्ये कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावप्रकारकत्वेन तादृशाऽन्वयबोधो भ्रम इति तादृशशब्दस्य भ्रमजनकत्वेनाऽप्रमाणत्वम्, त्वन्मते च कम्बुग्रीवादिमत्प्रतियोगिकाऽभावशून्यताया घटवति अभावात्तादृशप्रतीतेर्न भ्रमत्वमिति तादृशशब्दोऽप्यप्रमाणं न स्यादित्यर्थः । ननु भ्रमत्वस्य प्रकारभेदेन भिन्नत्वात्सर्वत्र तदभाववद्विशेष्यकत्वं न भ्रमत्वघटकत्वम् समवायेन गगनादिभ्रमे तन्निवेशवैयर्थ्यात्, तथाच तत्रैव प्रकृतेऽपि कम्बुग्रीवादिमत्प्रतियोगिकाभावप्रकारतामात्रेण तादृशान्वयबोधो भ्रमो भविष्यतीत्याह प्रमाणं चेति । तथाच तत्रापि कम्बुग्रीवादिमान्नास्तीति शब्दः प्रमाणं न स्यादित्यकामेनाऽपि प्रकृते भ्रमत्वं तदभाववद्विशेष्यकत्वघटितं वाच्यमिति भावः ।

धूमो न वह्निव्याप्य इत्यादेर्वह्निव्याप्यभावकूटार्थकत्ववद् कंबुग्रीवादिमत्प्रतियोगिकाभावकूटबोधकत्वादेव तादृशशब्दस्याऽप्रामाण्याद्युपपत्तिः, अन्यथा धूमाऽऽलोकसाधारणाऽनुगतव्याप्तेरभावादालोकगर्भव्याप्तित्वावच्छिन्नाभावस्य धूमे सत्त्वात्तमादाय धूमो न वह्निव्याप्य इति वाक्यस्य प्रा-

केचित्तु ननु पुष्करिण्यां यत्किञ्चिज्जलव्यक्तिसत्त्वेऽपि पुष्करिण्यां जलं नास्तीतिप्रतीतिवद् कम्बुग्रीवादिमद्यत्किञ्चिद्व्यक्तिसत्त्वेऽपि कम्बुग्रीवादिमान्नास्तीति प्रतीतेरुदये इष्टापत्तिरिति तादृशप्रतीतेरनुदयोऽसिद्ध एवेत्यत आह अत एवेति । यत एव कम्बुग्रीवादिमान्नास्तीतिप्रतीतेर्यत्किंचित्कम्बुग्रीवादिमत्प्रतियोगिकाभावमात्रं न विषयः, किन्तु कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभाव एव अतएवेत्यर्थ इत्याहुः । एकघटवति भूतले इति । सप्तम्यर्थौ विशेष्यकत्वं प्रमाणपदार्थैकदेशप्रमान्वयि । संयोगेन घटवत्त्वमावेदयितुं भूतले इत्युक्तमिति । अप्रमाणं न स्यादिति । प्रमाणं स्यादिति भावः । तथाच यत्किंचिद्घटव्यक्तिसत्त्वे कम्बुग्रीवादिमान्नास्तीति प्रात्यक्षिकप्रतीतेरुदये इष्टापत्तावपि तत्र तादृशशब्दस्य प्रमाणत्वापत्तिवारणाय तादृशशब्दजन्यशाब्दप्रतीतेः कम्बुग्रीवादिमत्त्वादौ प्रतियोगितावच्छेदकत्वावगाहित्वमावश्यकमिति भावः । दीधितौ न प्रमाणमिति । तज्जन्यशाब्दबोधस्य परस्परोपश्लेषावगाहिविशेष्यविशेषणभावापन्नकम्बुग्रीवादिमत्त्वावच्छिन्नत्वप्रतियोगित्वविषयकतयाऽवच्छिन्नत्वस्यैव प्रतियोगित्वे कम्बुग्रीवादिमत्त्वसम्बन्धतया भानेनाऽवच्छिन्नत्वेऽपि कम्बुग्रीवादिमत्त्वसम्बन्धभानेन वा भासमानवैशिष्ट्यप्रतियोगित्वरूपप्रकारत्वस्य कम्बुग्रीवादिमत्त्वे सत्त्वेन भ्रमत्वादिति भावः । अकामेनापीति । केचित्तु ननु गुरुतयाऽनवच्छेदकत्वस्य कम्बुग्रीवादिमत्त्वस्याऽवच्छेदकत्वावगाहनादेव स शब्दो न प्रमाणमत आह प्रमाणञ्चेति । तथाच गुरोरनवच्छेदक-

न चेदेवं, लघुरूपसमानियतानां गुरूणामव्याप्यतापत्तिः, गुणादिगुम-कर्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगितायाः लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवाऽव-च्छेदात् । तत्तदवच्छेदकत्वव्यक्तीनां च प्रातिस्विकरूपेणाऽभावानां युगस-हस्रेणाऽपि ज्ञातुमशक्यत्वात् ।

---

माण्यापत्तेः । एवं गुरुधर्मस्याऽनवच्छेदकतया तादृशधर्मावच्छिन्नविशि-ष्टबुद्धिं प्रति तादृशधर्माश्रयप्रतियोगिकाभावकूटवत्तानिश्चयत्वेनैवाऽ-नन्यगत्या विरोधित्वकल्पनाद कंबुग्रीवादिमान्नास्तीतिप्रतीतिदशायां कं बुग्रीवादिमदस्तीति ज्ञानविरोधोऽपि घटते इति प्राचीनमतनिर्भरः, अतः गुरुधर्मस्याऽनवच्छेदकत्वे व्याप्तेरपि दुर्वचत्वमित्याह नचेदेवमिति । लघ्वि-ति । द्रव्यं गुणाद् विशिष्टसत्त्वाद्वा इत्यादौ द्रव्यत्वसमनियतानां गुणत्वान्न-विशिष्टसत्तादीनामित्यर्थः । अव्याप्तिमुपपादयति गुणादीति । ननु हेतुम-न्निष्ठाभावप्रतियोगितावच्छेदकत्वव्यक्तीनां तत्तद्व्यक्तित्वेनाऽभावकूटवत्त्वमे-व साध्यतावच्छेदकांशे निवेश्यमतो नोक्तदोषोऽत आह तत्तदिति । यद्य-पि गुरोरवच्छेदकत्वपक्षेऽपि स्वस्वप्रतियोगिव्यधिकरणाभावघटितव्याप्ते-स्वत्तत्प्रतियोगितागर्भत्वेन दुर्ज्ञेयत्वम् । तथापि व्याप्यवृत्तिसाध्यकस्थली-यव्याप्तेरभिप्रायेणेदम्, तत्र प्रतियोगिवैयधिकरण्याप्रवेशात् । निरवच्छि-न्नहेत्वधिकरणवृत्तिकाभावप्रतियोगिताऽनवच्छेदकत्वमेव सर्वत्र व्याप्तौ प्र-विष्टमित्याशयेनेदमिति तु परमार्थः । तेनाऽव्याप्यवृत्तिसाध्यकस्थलेऽपि व्याप्तेर्न दुर्ज्ञेयत्वमिति ध्येयम् ।

---

त्वमुपेत्योक्तरीत्या एकघटवति तादृशशब्दस्याऽप्रमाणत्वोपपादेन घटसामान्यशून्येऽपि प्रमा-णव्यवहारो न स्यादिति, तथाच गुरोरवच्छेदकत्वमुपेत्य कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नप्रतियो-गिताकाभाव एव तादृशशब्दजन्यशाब्दबोधविषयो वाच्यः, एकघटवति तादृशाभावाऽ-सत्त्वान्न तादृशशब्दः प्रमाणम्, घटसामान्यशून्ये च तादृशाभावसत्त्वात्तादृशशब्दः प्रमाणमिति भाव इति प्राहुः । नचेदेवं-यदि गुरुधर्मस्य न प्रतियोगितावच्छेदकत्वम् ।

**लघुरूपसमनियतानामिति** । विशेषणानवच्छिन्नद्रव्यत्वसमनियतानामित्यर्थः । **लाघवेनेति** । गुणत्वावच्छिन्नप्रकारेण हेतुमन्निवेशापेक्षया निर्विशेषणकद्रव्यत्वादिपुरस्कारेण तन्निवेशो लाघवेनेत्यर्थः । **तत्तद्व्यक्तित्वेनाऽभावकूटवत्त्वमेवेति** । तथाच हेतुसमानाधि-करणाभावप्रतियोगितावच्छेदकत्वानां तादृशावच्छेदकत्वत्वेनाऽभावो न निवेश्य इत्यर्थः । **ज्ञातुमशक्यत्वादिति** । अनन्तानां तादृशावच्छेदकत्वात्मकप्रतियोगिनां प्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वेन ज्ञानाऽसम्भवादिति भावः । निर्विशेषणकद्रव्यत्वघटितप्रतियोगिता-वच्छेदकतात्वापेक्षया द्रव्यत्वत्वघटितत्वतादृशावच्छेदकतात्वस्य गौरवेणाऽनवच्छेदकत्वानिबन्ध-

एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेयः, उप. दर्शितप्रकाराणामपि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात्। अत एव घ्राणग्राह्य. गुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधु सङ्गच्छते इत्यपि के. दिति कृतं पल्लवितेन।

इत्यवच्छेदकत्वनिरुक्तिदीधितिः।

---

द्रव्यत्वत्वेति। द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वापेक्षया द्रव्यत्व त्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नाऽभावाप्रसिद्धेरिति भावः। ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतय. त्किञ्चिद्धर्मावच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकभिन्नं स्वविशिष्ट सम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकीभूततादृशधर्माभिन्नं वा य. त्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र हेतुमन्नि. ष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टस. म्बन्धिनिष्ठाभावीयतादृशप्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्ति साधनें द्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र वा दुर्ज्ञेयत्वाभावात्तथैव व्याप्तिर्वाच्येत्यत आह उपदर्शितेति। स्वत्वादीति। आदिना व्यापकतापर्यव. सन्नस्य तत्तदवच्छेदकत्वाभावगर्भसामान्यत्वस्योपग्रहः। अतएव—गुरोर. च्छेदकत्वादेव। सङ्गच्छत इति। अन्यथा ग्राह्यगन्धत्वापेक्षया गुरुत्वेन घ्राण. ग्राह्यगुणत्वावच्छिन्नाभावाऽप्रसिद्ध्या तद्वृत्तित्वरूपं व्यभिचरितत्वं तत्र न स्यादिति भावः। यद्यपि साध्यव्यापकतावच्छेदकधर्मावच्छिन्नाभावव. द्वृत्तित्वमेव व्यभिचारः, स च ग्राह्यगन्धत्वावच्छिन्नाभाववद्वृत्तित्वेनैव तत्र सुलभ इत्यपि शक्यते वक्तुम्, तथापि तद्बुद्धेः प्रकृतसाध्यकानुमित्यवि. रोधितया हेत्वाभासता न स्यात्। यद्विषयकत्वेन यादृशानुमानविरोधित्वं तस्यैव तत्र तथात्वादिति भावः॥

इति श्री जगदीशभट्टाचार्य्य विरचितमवच्छेदकत्वनिरुक्तिप्रकरणं सम्पूर्णम्।

---

...पितमप्याह दीधितौ एवमिति। रीत्येति शेषः। अव्याप्यत्वप्रसङ्गोऽप्य. धेय इति। अतो गुरोरवच्छेदकत्वमावश्यकमेवेति शेषः।

इति श्रीमहामहोपाध्याय श्रीप्रभुदत्तशास्त्रिसुत श्रीशिवदत्तमिश्रविरचिता जागदीश्यवच्छेदकत्वनिरुक्तिप्रकरणव्याख्या समाप्ता।

---